

जन्म

वीर संवत् २४१९

विक्रम संवत् १९४९

**Birth**

Vir-Samvat:-2419

Vikram-Samvat:-1949





**खरतरगणाधिप मुनि महाराज श्री हरिसागरजी महाराज.**
**Khartarganadhip Muni Maharaj Shree Harisagarji Maharaj.**



दीक्षा

वीर संवत् २४२७

विक्रम संवत् १९५७

**Diksha**

Vir-Samvat:-2427

Vikram-Samvat:-1957



श्रीमत्सुखसागर ज्ञानबिन्दु नम्बर ६

श्रीमत्सुखसागरसद्गुरुभ्यो नमः ।

पण्डित-श्रीपद्मविजयगणिविरचितम्-

# गद्यबद्ध--श्रीजयानन्दकेवलिचरित्रम् ।



प्रकाशक—

श्रीमद्-हरिसागरगणाधिपोपदेशेन श्रीसुखसागर ज्ञानप्रचारक सभा, लोहावट ( मारवाड. )

वीर संवत् २४४७, विक्रम संवत् १९७७, क्राइष्ट १९२१

# विज्ञप्ति.

श्री सुखसागर ज्ञान प्रचारक सभा की तरफ से नीम्न लिखित पुस्तकें भेट मीलती है, जिन महाशयोंको चाहिये वे मंगवा लेवें—

१ भाव प्रकरण, अवचूरि समेत, कर्त्ता—विमलविजयगणि ।

२ स्नात्रपूजा, कर्त्ता—पण्डित देवचन्द्रजी ।

३ दादा साहब की बडी पूजा, कर्त्ता—उपाध्याय श्री रामऋद्धिसार ।

४ चतुर्विंशति जिनेन्द्र चैत्यवंदन-स्तुतयः, कर्त्ता—क्षमाकल्याणकोपाध्यायः शोभनमुनिश्च ।

५ हरिविलास ( स्तवनावली ) कर्त्ता—खरतरगणाधिप श्री हरिसागरजी महाराज ।

पत्ता—

श्री सुखसागर ज्ञान प्रचारक सभा.

मु. लोहावट ( मारवाड ).

# गद्यवद्ध-श्रीजयानन्दकेवलिचरित्रस्य चिपयानुक्रमणिका ।


| विपया. | पत्राङ्का |
|---|---|
| **प्रथमः सर्गः ।** | |
| मङ्गलाचरणम् । श्रीजयानन्द-चक्रायुधयो. पूर्वभववृत्तान्त· । चक्रायुध प्राग्भवे रतिवर्धनपुरे नरवीरनृप· । श्रीजयानन्दजीवः प्राग्भवे तस्य नृपतेर्मतिसुन्दराभिधो मन्त्री । मन्त्रिणो रति-प्रीती पत्न्यौ । नृपतेर्वसुसारो नास्तिकः पुरोधा. । अतिवलराजर्षिसमीपे मन्त्रिणा पत्नीभ्या सह सम्यक्त्वग्रहणम् । राजर्षे. केवलज्ञानम् .. .. . . ... . | १–६ |
| **द्वितीयः सर्गः ।** | |
| सपरिवारनृप-मन्त्रिणोः केवलिवन्दनार्थं गमनम् । नृपस्य गृहिधर्मग्रहणम् । सभाया नृपेण मुनीनां प्रशंसाकरणम् । नास्तिकपुरोहितेन नास्तिकमतस्थापनम् । ‘मन्त्रिणा युक्तिपुरस्सर तत्खण्डनम् । पुरोहितस्याऽपमानम् । तस्य नृपसभाया वहिष्कार । .... | ६–८ |
| नृपशीर्षवेदनाया दूरीकरणेन पुरोहितस्य पुन सम्मानम् । पुरोहितेन नृपसमीपे मन्त्रिपत्न्योः सौन्दर्यप्रशसनम् । भूपस्याऽऽसक्ति· । . .. .... | ८–१० |
| पुरोहितकृतकूटलेखेन निर्दोपमन्त्रिणः सदोपता । तस्य चारके क्षेपः । नृपेण तत्प्रिययोरन्त.पुरे स्थापनम् । शासनदेव्या तयोः शीलरक्षणम् । प्रकाशितकपटस्य | |

| विषयाः | पत्राङ्काः |
| --- | --- |
| पुरोहितस्य नृपेण स्वदेशान्निर्वासनम्, मन्त्रिणश्च सम्मानकरणम्, .... .... .... | ८–१३ |
| अतिबलकेवलिन आगमनम्। मन्त्रिणः प्राग्भवः। नृप-मन्त्रि-मन्त्रिपत्नीनां शुक्रदेवलोके उत्पत्तिः। | १३–१५ |

**तृतीयः सर्गः।**

| विषयाः | पत्राङ्काः |
| --- | --- |
| नरवीरनृपजीवस्य शुक्रदेवलोकाद् गगनवल्लभपुरे जन्म। तस्य 'चक्रायुध' इति नामस्थापनम्। चक्रायुधस्य चरित्रम्। .... .... | १५–१९ |

**चतुर्थः सर्गः।**

| विषयाः | पत्राङ्काः |
| --- | --- |
| विजयपुरे जयो नाम राजा। तद्भ्राता विजयनामा युवराजः। जयनृपस्य विमलाराज्यां सिंहसाराभिधपुत्रस्य जन्म .... .... .... | १९–२० |
| विजययुवराजस्य कमलापत्न्याः कुक्षौ मन्त्रिजीवस्य शुक्रदेवलोकात् च्यवनम्। समये पुत्रस्य जन्म। पुत्रस्य 'श्रीजयानन्द' इति नामस्थापनम्। सिंहसारो दुर्गुणी, श्रीजयानन्दो गुणी। तयोर्मैत्री। तयोः केवलिसमीपे देशनाश्रवणम्। प्रथमव्रतपालना-ऽपालनसूचकभीम-सोमदृष्टान्तः। श्रीजयानन्दस्य प्रतिबोधः | १९–२३ |

**पञ्चमः सर्गः।**

| विषयाः | पत्राङ्काः |
| --- | --- |
| उद्धतसिंहसारस्य नगरेऽन्यायकरणाद् नृपेण शिक्षाप्रदानम्। मायाविसिंहसारस्य ऋजुश्रीजयानन्देन सह रहो नगरान्निर्गमनम्। द्वितीयव्रतपालना-ऽपालनविषये हंस-काकनिदर्शनम्, आनन्दराजस्य च दृष्टान्तः। | २३–२७ |
| तयोर्विशालपुरे गमनम्। तदुद्याने विद्याविलासकलाचार्यसमीपे कलाग्रहणम्। नृपेण गजतोलनपरीक्षाकरणम्। श्रीजयानन्दस्य जयः। नृपकन्याया मणिमञ्जर्याः पाणिग्रहणम्। विशालजयशत्रोः सूरराजस्य पराजयकरणम्। .... .... .... | २८–२९ |

विषयाः पत्राङ्काः

## षष्ठः सर्गः ।

श्रीजयानन्दसमृद्ध्या सिंहसारस्य खेदः । तयोर्विशालपुराद् रहः प्रस्थानम् । पल्लीशेन चण्डवेगेन बद्धस्य सिंहसारस्य मोचनम् । चण्डवेगेन सह पल्ल्यां गमनम् । चण्डवेगशत्रोर्महासेनस्य पराजयकरणम् । आयुःक्षयाद् मृतचण्डवेगस्य राज्ये सिंहसारस्य स्थापनम् । गिरिमालिनीदेवीगृहे सुप्तश्रीजयानन्दस्य सिंहसारेण नेत्रोत्पाटनम् । कायोत्सर्गेण कम्पितासनाया देव्या आगमनम् । तुष्टदेवीदत्तौषध्या सनेत्रत्वम् । देव्याः प्रतिबोधः । तदर्पितमहौषधीद्वयलाभः । हेमपुरे सौभाग्यमञ्जर्याः करग्रहणम् । रेल्लणीदेवीप्रतिबोधः । तदर्पितकामितरूपकारिमहौषधीप्राप्तिः । हेमप्रभभूपादीनां बोधिलाभः । .... .... ... २९–३७

विषयाः पत्राङ्काः

## सप्तमः सर्गः ।

श्रीजयानन्देन हेमपुरोद्यानगतदुर्जयकोलपराजयकरणम् । कुमारस्य तापसाश्रमे गमनम् । तत्र तापससेवितव्याघ्रदर्शनम् । व्याघ्रसेवनस्य कारणपृच्छा । हरिवीरतापसेन व्याघ्रसेवनकारणकथनम् । हरिवीरस्य चरित्रम् । स्वर्णजटकुलपत्यादितापसपञ्चशत्या सह गिरिचूडयक्षस्य प्रतिबोधः । कुलपतिपुत्र्यास्तापससुन्दर्याः पाणिग्रहणम् । कुलपतिदत्तगगनगामिपल्यङ्केन नानातीर्थेषु भ्रमणम् । • ३७–४८

## अष्टमः सर्गः ।

गङ्गदत्तपरिव्राजकस्य कुमारसमीपे आगमनम् । परिव्राजकेन मलयकूटगिरौ महौषधीसाधनायै कुमारसहायमार्गणम् । कुमारस्य पल्यङ्केन तत्र गमनम् । उप-

| विषयाः | पत्राङ्काः |
| --- | --- |
| सर्गकर्तुर्मलयमालक्षेत्रपालस्य पराजयकरणम् । गङ्गदत्तस्य स्वार्थसिद्धिः । कुमारस्य क्षेत्रपालाद् महौषधीपञ्चकप्राप्तिः । क्षेत्रपालस्य प्राग्भवः सम्यक्त्वप्राप्तिश्च । .... .... .... | ४८–५२ |
| कुमारस्य रत्नपुरे गमनम् । तत्र चैत्ये प्राप्तमहौषधीमन्त्रसाधना । रत्नपुरस्वामिनो रत्नरथनृपस्य रतिमालागणिकाकुक्षिसमुद्भूतायाः कन्याया रतिसुन्दर्याः पाणिग्रहणम् । .... .... .... | ५२–५८ |
| साधनासिद्धमहौषधीदत्तेन रत्नराशिना कुमारविलासं दृष्ट्वा रतिमालाया लोभः । छलेन रत्नदात्र्या महौषध्या हरणम् । कुमारेण दक्षत्वात् तस्याः प्रत्याहरणम्, गणिकायाश्च शिक्षाप्रदानम् । तृतीयव्रतपालनविषये लक्ष्मीपुञ्जदृष्टान्तकथनम् । प्रबुद्धया रतिमालयाऽदत्तादानप्रत्याख्यानस्वीकरणम् । .... | ५८–६६ |

| विषयाः | पत्राङ्काः |
| --- | --- |
| कुमारस्य पद्मपुरे गमनम् । तत्र कुत्सितभिल्लरूपेण तेन पद्मरथनृपपुत्र्या विजयसुन्दर्याः पाणिग्रहणम् । कौलमतानुयायिपद्मरथप्राग्दत्तविषेण विजयसुन्दर्या आन्ध्यम् । भिल्लरूपेण कुमारेण गिरिमालिनीदेवीदत्तौषध्या तस्या नेत्रयोः सज्जनम् । कुमारेण पत्नीप्रार्थनया स्वस्य स्वाभाविकरूपकरणम् । कमलसुन्दरीकरग्रहणप्रस्तावः । .... .... .... | ६६–७४ |

## नवमः सर्गः ।

| विषयाः | पत्राङ्काः |
| --- | --- |
| विजयसुन्दर्या सह कमलपुरे गमनम् । तत्र ब्रह्मवैद्यत्वं स्थापयतस्तस्य 'ब्रह्मवैश्रवण' इति ख्यातिः । ब्रह्मवैश्रवणेन व्याधिग्रस्तस्य कमलप्रभनृपपुत्रस्य सज्जीकरणम् । .... .... .... | ७४–७६ |
| पद्मपुरे पद्मरथस्य ज्यायस्याः पुत्र्या जयसुन्दर्या नरकुञ्जरेण सह पाणिग्रहणम् । विजयसुन्दरीमातुः | |

| विषयाः | पत्राङ्काः |
| --- | --- |
| कमलायाः स्वभ्रातुः कमलप्रभस्य गृहे आगमनम्। नाट्यविधौ पण्डितम्मन्यस्य नटस्य क्षत्रवैश्रवणेन पराजयकरणम्। स्वपुत्र्याः कमलसुन्दर्याः पाणिग्रहणाय कमलप्रभेण प्रार्थनाकरणम्, अनेकपत्नीपरिग्रहे क्षत्रवैश्रवणेन दुःखविषयत्वख्यापनम्। तद्विषये मदनधनदेवयोः कथा। .. | ७६–८८ |
| पद्मपुराद् दूतागमनम्। पद्मरथपुत्रपद्मदत्ताय कमलसुन्दर्या मार्गणम्। कमलप्रभस्य तद्वचोऽस्वीकारः। पद्मरथस्य युद्धायाऽऽगमनम्। क्षत्रवैश्रवणेन स्वश्वशुरपद्मरथस्य पराजयकरणम्। पद्मरथस्य प्रतिबोधः। क्षत्रवैश्रवणेन कमलसुन्दर्याः पाणिग्रहणम्। तस्य 'क्षत्रवैश्रवण' इति ख्यातिः। ... | ८८–९८ |

## दशमः सर्गः।

| विषयाः | पत्राङ्काः |
| --- | --- |
| कुमारस्य लक्ष्मीपुरे गमनम्। तत्र श्रीपतिनृपस्य नाट्य-गीत-नादकलादक्षास्तिस्रः कन्याः। तत्तत्कलासु पणपूर्वकं तासां पाणिग्रहणार्थं राजकुमाराणां पुरोद्याने कलाविलासाख्यकलाचार्यसमीपे कलाग्रहणम्। श्रीजयानन्दस्य वामनीभूय कलाचार्यसमीपे गमनम्। तत्र स्वस्य कुब्जकनाम्ना ख्यापनम्। परीक्षासमये वामनेन नाट्य-गीत-नादकलासु कन्यानां पराजयकरणम्। वामनस्य जयः। नाट्यसुन्दरी-गीतसुन्दरी-नादसुन्दरीणां परिणयनम्। राजकुमारैः सह युद्धम्। वामनरूपेण श्रीजयानन्देन तेषां पराजयकरणम्। श्रीपतिभूपप्रार्थनया वामनेन स्वस्वाभाविकरूपप्रकटनम्। | ९८-१०९ |

## एकादशः सर्गः।

| विषयाः | पत्राङ्काः |
| --- | --- |
| लक्ष्मीपुरे सिंहसारस्य दस्युत्वेन बन्धः। श्रीजयानन्देन तस्य मोचनम्। सिंहसारस्य कपटजालम्। कापट्योद्घाटः। कुमाराह्वानाय जयराजेन विजय- | |

| विषयाः | पत्राङ्काः |
|---|---|
| पुरात् प्रधानपुरुषाणां प्रेषणम् । श्रीजयानन्देन विजयपुरे सिंहस्य प्रेषणम् । तस्य विजयपुरराज्यावाप्तिः । जयनृपेण महाजटपार्श्वे तापसव्रतग्रहणम् | ११०-१२२ |
| लक्ष्मीपुरोद्याने धर्मप्रभसूरेरागमनम् । सूरेर्देशना । वैराग्येण श्रीपतिनृपस्य दीक्षाग्रहणम् । श्रीजयानन्दस्य लक्ष्मीपुरराज्यावाप्तिः । विविधदेशसाधनम् । पित्रोरागमनम् । सिंहसारस्याऽन्यायकथनम् । वद्धस्वजनानां मोचनम् । पद्मरथादीनां विजयसुन्दर्यादिस्वस्वपुत्रीभिः सह श्रीजयानन्दसमीपे आगमनम् । .... .... .... | १२२-१२५ |
| पद्मरथस्य ज्यायस्याः पुत्र्या जयसुन्दर्याः सुकण्ठनाम्नो गायनकर्तुः समीपाद् मोचनम् । तस्या जामातृनरकुञ्जरस्याऽर्पणम् । उद्याने श्रीजयानन्दस्य वसन्तक्रीडा । तत्र पवनवेगविद्याधरागमनम् । श्रीनगे विद्यासिद्धिः । योगिनीकृतप्रतिकुला-ऽनुकूलोपसर्गाः । योगिनीनां वशीकारः । पवनवेगपुत्रवज्रवेगस्य मोचनम् । दिव्यास्त्रादिसमृद्धिप्राप्तिः । ... | १२५-१३४ |


## द्वादशः सर्गः ।


| विषयाः | पत्राङ्काः |
|---|---|
| हेमकूटाद्रौ श्रीजयानन्दसमीपे चन्द्रगतिविद्याधरस्याऽऽगमनम् । स्ववृत्तान्तकथनम् । पञ्चमव्रतनिरतिचार-सातिचारपालनविषये कोशल-देशलदृष्टान्तः । .... .... .... | १३४-१४० |
| चन्द्रगतिपत्नीप्रत्याहरणार्थं वज्रकूटाद्रौ गमनम् । तत्र वज्रमुखस्य पराभवकरणम् । चन्द्रगतिपत्न्याश्चन्द्रमालाया मोचनम् । कुमारसत्त्वतुष्टेन वज्रमुखेण कुमाराय चिन्तामणिप्रदानम् । पवनवेगाद्यैः सह वैताढ्यमूर्ध्नि चैत्यवन्दनम् । पवनवेगनगरे रथनूपुरे गमनम् । तत्र वज्रसुन्दरी-चन्द्रसुन्दर्योः पाणिग्रहणम् । शत्रुमर्दनीविद्यासाधनम् । ... .... | १४०-१४३ |

विषया पत्राङ्का.

## त्रयोदशः सर्गः ।

रथनूपुरनगरे श्रीजयानन्दपार्श्वे भोगरत्यादीनामष्टाना खेचरेश्वराणामागमनम् । तैः स्वद्वात्रिंशत्कन्याना ज्ञानिवचसा श्रीजयानन्देन सह भाविपाणिग्रहणकथनम् । गगनवल्लभपुरात् चक्रायुधदूतस्यागमनम् । वज्रसुन्दर्या मार्गणम् । पवनवेगेन तस्याः श्रीजयानन्देन सह भूतपूर्वलम्भकथनम् । वज्रसुन्दरीरूपधारिणः श्रीजयानन्दस्य चक्रायुधपुत्र्याश्चक्रसुन्दर्या नाट्यकलाशिक्षार्थं गमनम् । चक्रसुन्दर्या हरणम् । १४३-१४६

श्रीजयानन्दभूपाल-चक्रायुधखेचरेश्वरयोः सप्त दिनानि यावद् युद्धम् । ... १४७-१७२

श्रीजयानन्दनृपेन्द्रस्य जयः, चक्रायुधखेचरेश्वरस्य च पराजयः । श्रीजयानन्देन चक्रसुन्दर्यादिषट्सहस्रकन्याना पाणिग्रहणम् । .... १७२-१७७

विषया पत्राङ्का.

## चतुर्दशः सर्गः ।

गगनवल्लभपुरे चक्रवलराजर्षेरागमनम् । सपरिवारयोः श्रीजयानन्द-चक्रायुधयोर्गमनम् । गुरोर्देशना । चक्रायुधेन स्वराज्ये श्रीजयानन्दस्याऽभिषेककरणम् । चक्रायुधस्य दीक्षाग्रहणम् । .... .... १७७-१८०

श्रीजयानन्दपार्श्वे गिरिचूडदेवस्याऽऽगमनम् । तेन सह तापसाश्रमेषु गमनम् । हेमजटादितापसाना दीक्षाग्रहणम् । तापसपतिपुत्र्या तापससुन्दर्या सह लक्ष्मीपुरे गमनम् । पुत्रसमृद्ध्या पित्रोर्हर्षः । त्रिखण्डसाधनम् । श्रीजयानन्दस्याऽर्धचक्रित्वेऽभिषेकः । १८१-१८२

रतिसुन्दर्याः शील परीक्षितु सुरदत्ताभिधमित्रस्य रत्नपुरे प्रेषणम् । रतिसुन्दर्याः शीलदार्ढ्यम् । स्वयं रत्नपुरे गत्वा रतिसुन्दर्या आनयनम् । विजयपुरात् प्रधानपुरुषाणामागमनम् । सिंहसारस्याऽन्यायकथा ।

विषयाः पत्राङ्काः

सिंहसारं निग्रहीतुं विजयपुरराज्यं चाऽऽत्मसात्कर्तुं तेषां विज्ञप्तिः । श्रीजयानन्दस्य विजयपुरं प्रति प्रयाणम् । सिंहसारस्य निग्रहः। तद्राज्ये स्वपितुः श्रीविजयस्य स्थापनम् । श्रीजयानन्दस्य स्वपुरे लक्ष्मीपुरे गमनम् । .... .... .... १८२-१९३

विजयनृपस्य दीक्षाग्रहणम् । लक्ष्मीपुरोद्याने पितृव्यश्रीजयतापसस्याऽऽगमनम् । तस्य श्रीजयानन्देन प्रतिबोधकरणम् । आगमसागरसूरेरागमनम् । तत्पार्श्वे श्रीजयतापसस्य जैनदीक्षाग्रहणम् .... १९३-१९६

श्रीजयानन्देन स्वराज्ये न्यायप्रवर्तनम् । उद्याने चक्रायुधराजर्षेरागमनम् । पूर्वभवपृच्छा । स्वसूनवे कुलानन्दाय राज्यं दत्त्वा श्रीचक्रायुधपार्श्वे श्रीजयानन्देन दीक्षाग्रहणम् । श्रीजयानन्दस्य केवलज्ञानम् । अनेकभव्यप्रतिबोधः। मोक्षगमनम्। प्रशस्तिः । १९६-२०४

---

ॐ नमोऽर्हद्भ्यः ।

श्रीपद्मविजयगणिप्रणीतम्-

# गद्यबद्ध-श्रीजयानन्दकेवलिचरित्रम् ।

## अथ प्रथमः सर्गः ।

नमस्कृत्य जिनाधीशं, विश्वविश्वोपकारकम् । शासनाधीश्वरं वर्द्ध-मानं सर्वार्थसौख्यदम्॥१॥
श्रीजयानन्दराजर्षेः, केवलज्ञानशालिनः। भव्यानां प्रतिबोधाय, चरित्रं किञ्चिदुच्यते॥२॥युग्मम्।
यथा पूर्वभवे श्राद्ध-धर्ममेष प्रियान्वितः । दानशीलादिसंयुक्तं, सिषेवे दर्शनादिकम् ॥ ३ ॥
स्वर्गश्री-प्रौढराज्यादि, देवसाहायकादि च । अविपत्सम्पदश्चाऽस्मात्, यथा प्राप तथोच्यते ॥४॥
पद्यबन्धात् समुद्धृत्य, गद्यबन्धं प्रवक्ष्यहम् । संक्षेपादुपकाराय, तथाऽऽत्मस्मृतिहेतवे ॥ ५ ॥

इह विस्तारप्रशस्तश्रीजम्बूद्वीपाभिधो द्वीपः समस्ति । तत्र पुण्यसम्पदा पवित्रं भरतक्षेत्रमस्ति । तस्मिन्

रतिवर्द्धननामकं रम्यं नगरमस्ति । तत्र ऐश्वर्य-सौन्दर्य-धैर्य-वीर्यादिभिर्गुणैः संक्रन्दनसदृशो नरवीराख्यो नृपोऽस्ति । तस्य कीर्तिसुन्दर्याद्या मनःप्रिया बह्व्यः प्रिया अभवन् । तस्य राज्ञो मन्त्रवतां धुर्यो, नयचातुर्यमन्दिरं, सर्वशास्त्राणां विदुरो, दाता, गुणग्राही, क्षमी, शक्तो, नृपे भक्तो, ज्ञाता, विनयी, न्यायवान्, धर्मी च मतिसुन्दराभिधानो मन्त्री बभूव । नृपोऽपि राज्यव्यापारभारं समग्रं मन्त्रिणि निवेश्य स्वैरम् अहर्निशं भोगेषु रेमे । तस्य मन्त्रिणः कन्दर्पस्य रति-प्रीती इव उभे प्रिये अभूताम् । तत्राद्या प्रीतिसुन्दरी, द्वितीया गुणसुन्दरीति नाम्ना । तस्य राज्ञो वसुसाराभिधः पुरोधा अभूद् निमित्तादिबलैः किञ्चिदतीताऽनागतादिवेत्ता । अथ राज-मन्त्र्याद्याः सर्वेऽपि सद्गुणैर्धर्मार्हाः, परं बोधिसामग्र्यभावेन पूर्वं मिथ्यादृशोऽभवन् । पुरोधाः पुनर्गुणवियुक्तः स्वकुलाचारानुगोऽभवत् । एवं च तेषां कियान् कालोऽगात् ।

अन्येद्युर्मन्त्रिणो गृहे ज्ञानत्रितयसंयुक्तो नवयौवनः सुभगस्तपसा देदीप्यमानः कश्चिद् राजर्षिर्मासक्षपणपारणेऽङ्गवान् पुण्यराशिरिव गोचरचर्यायामटन् भिक्षार्थमागमत् । मन्त्री लक्षणोपेतं तं मुनिमालोक्याऽवसरे ग्रासं च ज्ञात्वाऽमोदत । ततो मुनये दानार्थमादिमां प्रियामादिदेश । दानप्रिया साऽपि हृष्टा महर्षये महाभाजनतः परमान्नं दातुं निमन्त्रणापूर्वकं ढुढौके । तच्च किञ्चित् किञ्चिद् लीलया छर्दयन्तीं तां दृष्ट्वा मुनिरूचे—'भगिनि ! मुनेरिदं न शुध्यति' । ततस्तद्विमुच्य अग्निस्थभाजनं कूरं दातुं यावदसावुपस्थिता तावद् मुनिः स्माह—'एषोऽपि न शुध्यति' । ततः सचित्तस्थगितां दालिं दातुमुद्यता सा 'साधोर्न शुध्यति' इत्युक्त्वा मुनिना निवारिता । पुनः कणस्थितं सर्पिः, कणमिश्रां शर्करां, दिनद्वयातीतं

च दधि स मुनिर्निषेधयामास। पुनरपि ह्यः कृतान् मोदकानानिनाय, तदा 'एतेऽपि हि न शुध्यन्ति' इति सहेतुकं साधुरूचे। अथाऽमात्येन भार्याभ्यां च संभूय तदाशयमविज्ञाय भक्तितोऽत्याग्रहे कृतेऽपि किमप्यनाददानं निरीक्ष्य, अपमङ्गलं च विचिन्त्य मन्त्री रोषान्महामुनिमेवं जगौ—'एतेऽमृतोपमा आहारा न शुध्यन्ति तत्किं विषं शुध्यति?, किं वा तव नेत्रे गते?' । तदा रोषादाद्या प्रियाऽप्याह—'जैनर्षयो निर्दाक्षिण्या भवन्ति । दाक्षिण्यं हि शुद्धे कुले भवति, तच्च कुलमेषां नैव ज्ञायते' । द्वितीयाऽप्याचख्यौ—"प्रकटोद्द्योतेऽपि—'न शुध्यति' इत्येवं वदन्नयमन्धो भिक्षुभ्यो दीयताम् । अस्मिन् पुरे पराण्यपि बहूनि पात्राणि सन्ति, तेभ्यो दानं दास्यामो मङ्गलं च करिष्यामः । दानं यत्र तत्राऽपि दत्तं निष्फलं न भवति, पात्रे च पुष्कलं पुण्यं भवति" । इति दुर्वाक्यैस्तैस्त्रिभिर्दृढं दुष्कर्म अबन्धि, मुनिस्तु रोष-तोषौ असंप्राप्तस्तद्गृहान्निरगात् । अथ मन्त्रिणो गृहे धर्मरुच्यभिधः श्राद्धो मन्त्रिकार्यवशादागात् । तं दृष्ट्वा मन्त्री जहर्ष, कार्यालापं च कृत्वोवाच—'भ्रातः! अद्य मम गृहे कश्चिद् भिक्षुर्भिक्षार्थमागमत् । तस्मै जैनाय मे प्रिया प्रियवाग्भिर्निमन्त्रणापूर्वं दानार्थमुपचक्रमे, परं न किमपि सोऽग्रहीत्' । इत्यादि सर्वमुक्त्वा पुनरुवाच—'स त्वद्गुरुर्गतः, अतः कोऽयं मित्र! त्वयोपलक्ष्यते नवा?' । श्राद्धोऽपि जगाद—"स मे संमुखो मिलितः, भक्त्या च प्रणतो बाढमुपलक्षितः । हे मन्त्रिन्! अस्याऽतिचित्रकृच्चरित्रमाकर्णय, तथाहि—सिन्धुदेशे सौवीराह्वपुरे महर्द्धिभिः सुत्रामेव नाम्नाऽतिबलो भूपोऽभूत् । तस्य सभायां देशान्तरागतैर्नटैर्नाट्ये विधीयमाने सगरचक्रिणः स्वरूपं दर्शितम् । तस्य चक्रिणोऽपि तथाविधां पुत्रवियोगार्तिं दृष्ट्वा

भवं दुःखमयं ध्यायन् आसन्नसिद्धिको नृपः प्रबुद्धः । तदैव राज्यं त्यक्त्वा बालं च सुतं राज्ये संस्थाप्य साहसिकाग्रणीर्धर्माकरगुरुसमीपे प्राव्राजीत् । स द्विविधां शिक्षामभ्यस्यन् श्रुतं च पठन् अद्भुतवैराग्यभाग् द्विविधं तपस्तप्यते । तपःप्रभावाद् अप्रमत्ततया च स विविधा लब्धीरवाप, यतस्तादृशां पुरुषाणां किं दुरापं भवति ? । अन्येद्युर्गुरुस्तादृग्ध्यान-श्रुतादिभिर्योग्यतां ज्ञात्वा तमेकाकित्वविहारायाऽऽदिशत् । स च सिंहवत् परीषहोपसर्गादिमृगेभ्यो निर्भयः सन् विहरन्नन्यदा गजपुरेऽगमत् । तत्रोद्याने सुरैरर्चितः तपो-ध्याननिरतो विविधातिशयैर्जीवान् सुखं ददत् तस्थौ । तत्र राजगुणाधारो भीमो भूजानिरस्ति । मतिसारोऽस्य मन्त्र्यस्ति, स च बुद्धिमान् राज्यभारवहनसमर्थो राज्ञोऽन्या मूर्तिरिवासीत् । अन्यदा राजा कञ्चिदल्पाऽपराधं चौरमघातयत् । स ह्यकामनिर्जरावशाद् व्यन्तरो जातः । ततो विभङ्गज्ञानतः पूर्वभवं ज्ञात्वा महीभुजे चुकोप, परं राज्ञि अप्रभवः सन् गजमारिमधात् । ततो राजा गजवैद्यादिभिरनेकानुपायानचीकरत्, परं शान्तिर्न बभूव । ततस्तदुपायाऽवबोधाय मन्त्रिणमादिदेश, सोऽपि चिन्तातुरोऽभवत् । अन्यदा उद्याने प्राप्तो मन्त्री गीतातोद्यध्वनिश्रुतेर्विस्मितो मुनेरग्रेऽगात्, तत्र देवीनां नाट्यमैक्षत । ततो मौनिनं तं मुनिं महाप्रभावं मत्वा नत्वा च, अवसरे मुनेरंह्रिस्पृष्टां धूलीं च गृहीत्वा गृहेऽगमत् । तया धूल्या सर्वेषामपि दन्तिनां तिलकमकार्षीत् । गजाः सद्यो नीरुजः पटवश्च जाताः । मन्त्री तं वृत्तान्तं द्रुतं राज्ञे न्यवेदयत् । सोऽपि हर्ष-विस्मयाभ्यां मुनिमस्तवीत् । ततः स्वपुरे उत्सवान् कारयित्वा सपरिवारौ नृप-मन्त्रिणौ उद्याने गत्वा मुनिं नतवन्तौ । मुनिरपि ध्यानं पारयित्वा धर्मलाभाशिषा तौ अप्री-

णात्। सर्वेऽपि हर्षेण यथास्थाने उपाविशन्। ततो मुनिस्तदनुग्रहेच्छया यतीना गृहिणां च विस्तरतो द्विविधं धर्ममुपदिदेश। तावपि मुनेर्माहात्म्यदर्शनाद् धर्मे संजातप्रत्ययौ प्रतिबुद्धौ श्राद्धधर्मं प्रपेदाते। नृप-मन्त्रिणौ सर्वेऽन्ये जनाश्च यथारुचि यथाशक्ति धर्मान् प्रपद्य नत्वा च मुनिं स्तुवन्तः स्वस्वगृहेषु ययुः। अथ सर्वत्राऽप्रतिबद्धो मुनिर्विहरन् अन्यदा हीरपुरेऽगात्। तत्र च तदा मनुष्यमारिर्वर्तते। तदा बलसारो नृपः स्वाः प्रजाः पीडिता दृष्ट्वा तच्छान्त्युपायाश्चक्रे, परं शान्तिर्नाऽऽगात्। अन्यदा भीमभूपस्य दूतस्तत्र पुरे आगतः, उद्यानस्थं मुनिं दृष्ट्वा उपलक्ष्य च हर्षेण प्राणमत्। ततो राजसभायां गतः। भूपं नत्वा तेन पृष्टः सन् स्वस्वामिनाऽऽदिष्टं कार्यं न्यवेदयत्। अथ दूतो वार्ताप्रसङ्गेन मुनेस्तत्रागमनं गजमारिनिवर्तनं च माहात्म्यमवक्। भूपोऽपि तद्वृत्तान्तमाकर्ण्य विस्मयानन्दमेदुरस्तदर्हमुत्तरं दत्त्वा सत्कृत्य च व्यसृजत्। ततो नृपो नगरे मुनेर्माहात्म्यमुद्घोष्य मुनिसत्पदस्पृष्टधूलिभिः सर्वैर्लोकैस्तिलकान् कारयामास। तथा कृते सद्योऽखिला मारिर्व्यपगता। मुनीनां ह्यचिन्त्यो महिमा, यतः—

"मुनयश्चक्रिणः सैन्यमपि क्रुद्धा दहन्त्यहो!। तपःप्रभावतस्तस्य समृद्धिं दर्शयन्ति च" ॥ १ ॥

ततो भूपाद्या उद्याने गत्वा मुनिं नत्वा स्तवनां च कृत्वा तदादिष्टं गृहिधर्मं यथाशक्ति प्रपेदिरे। मुनिरपि विहरन् क्षेमापुर्यां गतः। मासक्षपणपारणे नगर्यन्तः प्रविश्य गोचरचर्यायां भ्राम्यन् गवाक्षस्थेन पुरोधसः सूनुनाऽदर्शि। मिथ्यादृशा जिनधर्मद्विषा धन-यौवनमत्तेन च तेन शीर्षे उपानहाऽघाति, तथाप्ययं भगवान् मेरुरिव धीरो न चुकोप, प्रत्युत तस्मिन् कृपां बिभ्रद् मौनेनाऽग्रतोऽगमत्। परं तत्तपोमहि-

माकृष्टा शासनदेवताऽदृश्यापि क्रुधा तत्करावाच्छिदत् । ततो व्यथयाऽत्याक्रन्दन् माता-पित्रादिभिः पृष्टः—'रे! किमिदम्?' । सोऽपि पश्चात्तापं कुर्वन् तं वृत्तान्तं यथास्थितमकथयत् । तेऽपि खिन्नास्तं बहुधा धिक् चक्रिरे । ततोऽनर्थोपशान्तये उपायान्तरमप्राप्य मुनिसमीपमागत्य नत्वा च ते माता-पित्रादयः कृताञ्जलयोऽवदन्—'हे मुने! त्वं महाप्रभावोऽसि, जगदर्चितोऽसि, तेजोमयोऽपि घूकैरंशुमानिव बालैर्दुर्लक्ष्यः । ततो बालेन मूढेनाऽज्ञानान्धहृदयेन पूजार्होऽपि यदपराद्धोऽसि हे कृपानिधे ! तत्क्षमस्व । महतां रोषश्चिरं न तिष्ठति, प्रणतेषु पुनर्विशेषतो न भवति, शरणं चागता वयम्, अतोऽनुकम्पस्व, बालस्य करौ केनचिदुपायेन सज्जौ कुरु' । तदा मुनिरूचे—'मम रोषो न भूतो न भवति न च भाव्यपि, किन्तु शासनदेवताऽस्येमां शिक्षां चक्रे' । तत आकाशे प्रकटीभूय शासनदेव्यवक्—'पापिनमेनं जगत्पूज्याऽवहेलनकं न सज्जयामि' । ततस्तैः पूजोपचारादिभिस्तोषिता उवाच—'यद्ययं मुनिपार्श्वे प्रव्रजेत् तदाऽमुं सज्जयामि' । तस्मिन्नप्युपायान्तरं विना तैः प्रतिपन्ने सति देवी अचिन्त्यशक्त्या करौ नूतनौ चकार । ततः सर्वे प्रमुदिताः । मुनौ पुष्पवृष्टिरभूत् । पश्चात्तापपरः सोऽपि मुनिं क्षमयति स्म । मुनिना प्रतिबोधितः पित्रा चाऽनुमतः स द्रुतं प्राव्राजीत् । मुनिनाऽपि शिक्षाहेतोः स्थविरकल्पिनामर्पितः । ततः सर्वेऽपि तौ द्वौ मुनी नत्वा प्रशंसन्तश्च स्वस्वगृहेष्वगुः । भूपाद्याश्चमत्कारं प्राप्ता जैनं धर्ममुपागमन् । तत्र पारणकं कृत्वा स मुनिर्विहरन् इह रतिवर्धननाम्नि नगरे आगमत्, प्रतिमां च प्रतिपद्याऽत्रैवोद्याने स्थितः । तत्र ध्यान-तपो-योगैरन्यदाऽवधिज्ञानं प्राप्तः । हे मन्त्रिन्! स एवायं मुनिस्तव

भाग्योदयाद् मासक्षपणपारणे शुद्धाहारं गवेषयन् तव गृहे समागतः। अयं हि साक्षात् कल्पवृक्षो महामहिमसागरः, यतोऽस्य देवा अपि प्रातिहार्यं कुर्वते। समताभावेनाऽयं न तुष्यति न च रुष्यति, परं पूजा-निन्दाफले इह परत्र च दत्ते"। इति श्राद्धमुखाच्छ्रुत्वा पश्चात्ताप-भयाभ्यां विह्वलः प्रिये अपि तथा पश्यन् सचिवो जगौ—'हहा मित्र! मया प्रियाभ्यां च अज्ञानान्धमानसै रोषाद् आक्रोशाद्यैरयं मुनीन्द्रो विराधितः। वयं ह्यनभ्यासाद् जैनर्षीणामाचारादिकं न विद्मः, शापदानभयाद् बिभीमः'। तदा धर्मरुचिर्जगौ—'कृपालुर्मुनिर्न कञ्चिच्छपति, परमस्याऽवहेलनाऽत्र परत्र च दुःखदा स्यात्; तस्मात्तत्र गत्वा पापाऽमङ्गलशान्तयेऽयं क्षम्यताम्'। मन्त्र्यवादीत्—'एवं सर्वं तवोदितं करिष्यामः, परं दीयमानानि पायसादीनि कथं नाऽग्रहीत्?'। श्राद्धोऽवदत्—'यया रीत्या दातुमारब्धानि तां दर्शय'। ततो मन्त्रिणा तथैव दर्शितानि। तत्र पायसलवाद् वह्वीः कीटिका आगच्छन्तीर्म्रियमाणाश्च दर्शिताः, तदनादाने हेतुर्हिंसादिरुक्तः। क्रूरादेरग्निकायादीनां विराधना दर्शिता। अथ आतपे धृते दध्नि अलक्तकपोतिकां मुक्त्वा सूक्ष्मजीवानदीदृशत्। परं मोदकान् द्विचत्वारिंशता दोषैर्मुक्तान् वीक्ष्य स्माह—'एषामग्रहणे हेतुं न जाने, अतो मुनिः प्रक्ष्यते'। एतच्छ्रुत्वा दृष्ट्वा च मन्त्री सविस्मयो दध्यौ—'अहो! अर्हद्धर्मस्य सूक्ष्मता मुनेश्च निरीहता!। अहं विचित्रेभ्यः पात्रेभ्यो बहुधाऽपि दानान्यदाम्, नैकशास्त्राण्यध्यैषि, परमीदृशं तु क्वचिदपि नाऽद्राक्षम्'। धर्मरुचिरवादीत्—'मुनिं नन्तुं यामः, आत्मानं च कृतार्थयामः'। मन्त्र्यूचे—'कृताऽपराधा वयमस्य मुखं कथं दर्शयामः?'। श्राद्धो बभाषे—'नैष दोषदर्शी, अत एषां दर्शने न काऽप्याशङ्का

कार्यौ' । ततः सर्वेऽपि गत्वा मुनिं प्राणमन् । मुनिरपि धर्मलाभाशिषमदात् । अथ मन्त्र्यूचे—'हे भगवन्! यदज्ञानैरपराद्धोऽसि तत् क्षमस्व । क्रुद्धा मुनयस्तपसा मनुष्यकोटिमपि दहन्ति, परं मूढेष्वस्मासु कृपानिधे! कृपां कुरु' । तत्प्रिये अपि पश्चात्ताप-भयाकुले मुनिं नत्वा स्वस्वनिन्दापरे क्षमयामासतुः । मुनिरूचे—'मम कोपो नास्ति, परं दृशोः स्वरूपमाहारशुद्धिस्वरूपं च तात्त्विकं न जानीथ' । मन्त्र्युवाच—'तात्त्विकं कथय' । साधुः प्राह—'दृशौ द्विधा, बाह्ये चर्मात्मिके स्थूला-ऽऽसन्ना-ऽल्पार्थप्रकाशिके, आभ्यन्तर्यौ तु ज्ञान-दर्शनस्वरूपे सूक्ष्म-दूरतर-प्रचुरावभासिके । अथ शुद्धिर्द्विधा—बाह्या आभ्यन्तरी च । तत्र बाह्या बाह्यपदार्थानां निर्मलता, आभ्यन्तरी तु दातव्यार्थानां द्विचत्वारिंशता दोषैर्विप्रमुक्तता । ततोऽस्माभिर्द्विधा दृग्भ्यां द्विधा शुद्धिर्विलोक्यते । द्विचत्वारिंशद् दोषाश्चैवम्—

"आहाकम्म[1]उद्देसिय[2], पूईकम्मे[3] य मीसजाए[4] य । ठवणा[5] पाहुडियाए[6], पाओअर[7] कीय[8] पामिच्चे[9] ॥ १ ॥
परिअट्टिए[10] अभिहडु[11]—ब्भिन्ने[12] मालोहडे[13] य अच्छिज्जे[14] । अणिसिट्ठ[15]ऽज्झोअरए[16], सोलस पिण्डुग्गमे दोसा ॥ २ ॥
धाई[17] दूई[18] निमित्ते[19], आजीव[20] वणीमगे[21] तिगिच्छा[22] य । कोहे[23] माणे[24] माया[25], लोभे[26] य हवन्ति दस एए ॥ ३ ॥

* आधाकर्मौद्देशिकं, पूतिकर्म च मिश्रजातं च । स्थापना प्राभृतिका, प्रादुष्करणं क्रीतमपमित्यम् ॥ १ ॥
परिवर्तितमभिहृतम्, उद्भिन्नं मालाऽपहृतं च आच्छेद्यम् । अनिसृष्टमध्यवपूरकः, षोडश पिण्डोद्गमे दोषाः ॥ २ ॥
धात्री दूती निमित्तम्, आजीवो वनीपकश्चिकित्सा च । क्रोधो मानो माया, लोभश्च भवन्ति दशैते ॥ ३ ॥

*पुंव्वि पच्छा संथवं, विज्जा मंते य चुंन्न जोगे य । उप्पायणाइ दोसा, सोलसमे मूलकम्मे य ॥ ४ ॥
संकिय मक्खिय निक्खित्त, पिहिय साहरिय दायगुम्मीसे । अपरिणय लित्त छड्डिय, एसणदोसा दस हवंन्ति" ॥५॥
†सजोयणा पमाणे, इंगाले धूमे कारणे चेव" ।

इति पञ्च ग्रासैषणादोषाश्च विस्तरतः प्रवचनसारोद्धार-पिण्डनिर्युक्त्यादिभ्योऽवसेयाः । युष्माभिस्तत्स्वरूपाऽनभिज्ञैर्मुधा क्रोधा-ऽऽक्रोशौ विहितौ, तत्सर्वं सर्वत्र समतादर्शिना मया क्षान्तम्" । ततः श्राद्ध-मन्त्रिभ्यां प्रोचे-'हे मुने ! सर्वमिदं ज्ञातं, परं मोदकाऽग्रहणे हेतुं कथय' । मुनिरूचे-'निशायां प्रधानद्रव्यैर्निर्मीयमाणेषु मोदकेषु चुल्लीस्थे घृततापके तदुपरिस्थस्य धूमव्याकुलितस्य भोगिन उल्लोचादेरभावात् तीव्रं गरलं पपात, ततो विषमया मोदका जाताः, केनचिच्च न ज्ञाताः । मया तु स्वसंयमोपघातित्वाद् न गृहीताः' । एवं मन्त्रिणाऽऽकर्ण्य मोदकास्तत्रैवानायिताः । तत्र मक्षिका म्रियमाणा वीक्ष्य व्यचिन्तयत्-'अहो मुनेर्ज्ञानम् !, विषमोदकभक्षणजाद् मरणादहं रक्षितः । अस्य मुनेरुपकारशतैरपि कथमनृणः स्याम् ?' । ततो मन्त्रिवचसा यथा जीवहिंसा न स्यात्तथा ते मोदका दासीभिर्व्युत्सर्जिताः । अथ भक्त्या मुनिं नत्वा मन्त्री स्माह-

---

* पूर्वं पश्चात् सस्तवो, विद्या मन्त्रश्च चूर्णो योगश्च । उत्पादनाया दोषाः, षोडशो मूलकर्म च ॥ ४ ॥
शङ्कित म्रक्षित निक्षिप्त, पिहित सहृत दायकमुन्मिश्रम् । अपरिणत लिप्त छर्दितम्, एषणादोषा दश भवन्ति ॥ ५ ॥

+ विस्तरतः प्रवचनसारोद्धारे द्वारे सप्तषष्टितमे, पिण्डनिर्युक्तौ च क्रमेण ९२-९३-४०८-४०९-५२० गाथासु द्रष्टव्यम् ।

† सयोजना प्रमाणम्, अङ्गारो धूमः कारण चैव । ( प्रवचनसारोद्धारे द्वारे पञ्चनवतितमे ९५ )

'हे भगवन्! प्राणदोऽसि, त्वमेव शरणमस्माकम् । एकोऽयमुपकारः कृतः, अथ धर्ममादिश्य मोहान्धकारं संहर' । मुनिर्बभाषे–'मन्त्रिन्! सर्वधर्मेषु जैनधर्म एवेष्टदः श्रुत-शील-दयागुणैश्चाऽनुत्तरो वर्तते । तस्य मूलं तत्त्वश्रद्धानलक्षणं सम्यक्त्वमस्ति । देव-गुरु-धर्मात्मकं त्रिविधं तत्त्वं मतम् । सम्यक्त्वे सति भाग्ययोगाद् विरतिः स्यात्, सा पुनर्द्विधा–सर्वतो देशतश्च । तत्र सर्वतो विरतिः क्षान्त्यादिर्दशविधा यतीनां प्रोक्ता, देशतस्तु स्थूलहिंसानिवृत्त्यादिर्द्वादशधा जिनैर्गृहिणां प्रोक्ता' । इत्यादिं विस्तराद् मुनिनोक्तं धर्ममाकर्ण्य प्रबुद्धः सन् मन्त्र्युवाच–'भगवन्! धीरसाध्यं यतेर्धर्मं धर्तुं नाऽहं क्षमे, अतो मोक्षसाधनं मम गृहिधर्मं देहि' । ततो गुरुः सम्यक्त्वसहितानि द्वादश व्रतानि ददौ, आवश्यकादिविधिं च तमशिक्षयत् । अथ मन्त्री कल्पवृक्षमिव धर्ममवाप्य स्वं कृतकृत्यं मन्यानोऽत्यन्तहृष्टः सन् मुनिं नत्वा गृहं ययौ । तस्य प्रिये अपि तथैव प्रतिबुद्धे संवेगाद् गृहिधर्मं प्रपद्य साधुं च नत्वा स्वं धाम जग्मतुः । साध्ववज्ञोद्भवं पापं निन्दा-गर्हा-ऽऽलोचनादिभिस्ते चिक्षिपुः, परम् अत्यल्पं तु अवाशिष्यत । धर्मरुचिः श्राद्धोऽन्येऽपि च यथाशक्ति गृहीतधर्माणो मुनिं नत्वा स्वस्वगृहे ययुः । तत्र स्थितस्य मुनेरुपवासैर्मासोऽभूत् । मन्त्री तु श्राद्धसङ्गाद् मुनेरुपास्त्या च सप्रियः श्रावकाग्रणीर्जातः । प्रागपि शास्त्रवेदी क्रमेणाऽभ्यस्तागमो जीवादितत्त्वानि विदन् सर्वास्वपि क्रियासु सभार्यः कुशलोऽभूत् । पुनर्मन्त्रिवरः सूक्ष्मेष्वप्यर्थेषु अस्खलन्मतिः, प्राप्तधर्मात् सुरैरप्यचलः, प्रवादिनां जयतोऽर्हतः शासनमदीदिपत् । अथ मुनेर्मासक्षपणपारणदिवसे मन्त्री स्वयं गत्वा न्यमन्त्रयत । साधुरपि कृपया विधिना तद्गृहमागतः । मन्त्रिणा तत्प्रियाभ्यां

च भावोल्लासेन महाभक्त्या दीयमानं सर्वदोषविवर्जितं परमान्नादि मुनिरग्रहीत्, तदा च पञ्च दिव्यान्यभवन्। दानस्य प्रभावात् ते त्रयोऽपि महाभोगफलं कर्म समुपार्जितवन्तः। स मुनिः पारणं कृत्वा विश्वैकसाम्यदृक् तत्रैवोद्याने महाध्यानासनादिभिर्लीनोऽस्थात्। अथ नृपः सचिवगृहे दुन्दुभिशब्दं निशम्य 'किमेतद्?' इति सम्भ्रान्तः स्वसेवकान् पप्रच्छ। तैरपि मुनिदानादिवृत्तान्तं ज्ञात्वा निवेदिते सति राजा दध्यौ–'धिग् मयेदृग्गुणवानपि मुनिर्न ज्ञातः, तत्प्रातः सपरिवारो गत्वा तं नमामि'। इति चिन्तया दिनं व्यतीयाय। मुनिस्तु निशायां सर्वसत्त्वेभ्यः परं हितं ध्यायन् शुक्लध्यानानुभावेन केवलज्ञानमासदत्।

इति श्रीतपाच्छाधिराज–श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात्
पं० पद्मविजगगणिनोद्धृते गद्यबन्धे तत्प्राग्भवमन्त्रिजीवबोधिबीजलाभा–ऽतिबलराज-
र्षिकेवलिदृष्टान्तसूचितयतिधर्मफलवर्णनो नाम प्रथमः सर्गः ॥ १ ॥

## अथ द्वितीयः सर्गः।

वामेयं महिमाऽमेयं, श्रीशङ्खेश्वरनामकम्। संसारार्णवबोहित्थं, वन्दे सर्वार्थसिद्धिदम्॥१॥

अथ प्रभाते जायमाने दिवि देवदुन्दुभयो नेदुः, संक्रन्दनादयश्च चतुर्विधा देवा आजग्मुः। ते देवा

+ इन्द्रादयः।

नृत्य-गर्जित-गीतादि पुष्पवृष्टिं च व्यधुः । तैः स्वर्णमयं पद्मं कृतं, तत्र मुनिरुपाविशत् । दुन्दुभिनादादि श्रुत्वा उद्द्योतं च दृष्ट्वा नृपः सम्भ्रातः सन्—'किमेतद्?' इति यावत्पृच्छति, तावद् मन्त्री नरैस्तं वृत्तान्तं ज्ञात्वा द्रुतमागत्य भूपालं नत्वैवं व्यजिज्ञपत्—'देव! तस्य मुनेः सर्वभावावभासकं केवलज्ञानमुत्पेदे । अतस्तत्र गत्वा वन्दामहे, कृतार्थाश्च भवामहे' । नृपोऽप्येतन्निशम्य अज्ञातजिनधर्मोऽपि तत्क्षणमाश्चर्यादिप्रेरितो गजारूढश्छत्रचामराद्युपशोभितः सामन्त-मन्त्रि-सेनाद्यशेषपरिवारयुतो बन्द्युद्घुष्टजयारवो भक्त्योद्याने गत्वा विधिना च मुनिं नत्वा तत्पुरोऽध्यास्त । मुनिर्धर्मलाभाशिषं दत्त्वा यथास्थानेष्वासीनेषु सुराऽसुर-नरादिषु धर्ममुपादिशत् । तद्यथा—"अस्मिन् दुःखैकसागरेऽसारसंसारे सुखाप्तये धर्म एवोपायोऽस्ति । स च सम्यक्त्वमूलो द्वेधा—श्राद्धार्हो यत्यर्हश्च । तत्र सम्यक्त्वं चिन्तारत्नमिवेष्टदं दुर्लभं च । तदुक्तम्—

"मूलं दारं पइट्ठाणं, आहारो भायणं निही । दुच्छक्कस्सावि धम्मस्स, सम्मत्तं तं विआहिअं" ॥ १ ॥ *

देव-गुरु-धर्माणां ज्ञान-श्रद्धालक्षणं सम्यक्त्वम् । तत्राऽष्टादशदोषैर्मुक्तो देवो मुक्तये स्यात् । यतः—

"हास्यादिषट्कं चतुरः कषायान्, पञ्चाश्रवान् प्रेम-मदौ च केलिम् ।
तत्याज यस्त्याजयते च दोषान्, देवः स सेव्यः कृतिभिः शिवाय" ॥ १ ॥

तथा यो ज्ञान-दर्शन-चारित्रपवित्रात्मा शय्या-पात्र-वस्त्रा-ऽऽहारान् सदोषान् न गृह्णाति स पञ्चमहाव्रतधरो गुरुः । यतः—

* मूलं द्वारं प्रतिष्ठानं, आधारो भाजनं निधिः । दुःशक्यस्यापि धर्मस्य, सम्यक्त्वं तद् व्याख्यातम् ॥१॥

"अवद्यमुक्ते पथि यः प्रवर्तते, प्रवर्तयत्यन्यजनं च निःस्पृहः ।
स एव सेव्यः स्वहितैषिणा गुरुः, स्वयं तरंस्तारयितुं क्षमः परम्" ॥ १ ॥

धर्मस्तु पञ्चमहाव्रतमयो यतीनां, द्वादशव्रतात्मकश्च श्राद्धानाम् । तथा दान-शील-तपो-भावभेदाच्चतुर्धा धर्मः । अयं चाऽऽराधितोऽत्रापि मनोऽभीष्टसुखश्रियो दत्ते, परत्र च नृपत्वं चक्रित्वं क्रमात् शिवशर्माणि च दत्ते । साधुधर्मस्योत्कृष्टा गतिः शिवे, गृहस्थधर्मस्य च परा द्वादशे स्वर्गे, जघन्या तु द्वयोर्गतिरादिमे स्वर्गे । अतो मनुजत्वादिं दुर्लभां सामग्रीमवाप्य यथाशक्त्या प्रयत्नतोऽयं धर्म आराध्यः" । इत्यादि धर्मतत्त्वमुक्त्वा तस्मै तत्त्वदर्शिने श्राद्धधर्मम् अदात्, बहवोऽपि भवोद्विग्ना जनाः प्राव्रजन् । केऽपि श्रावकधर्मं, केऽपि च सम्यक्त्वमाददिरे । नृपादयः सर्वेऽपि मुनिं नत्वा स्वगृहेषु ययुः । भूरिपरिवारपरिवृतः केवल्यपि विश्वोपचिकीरन्यतो विजहे, यतो मुनिः सूर्यवन्नैकत्र स्थितिं कुर्यात् । वसुसारः पुरोधास्तु नृपाज्ञया मुनिसमीपमागतोऽपि नास्तिकतां न जहौ, यतोऽसाध्ये रोगे किमौषधं भवति ? । भूपतिस्तु मन्त्रिणः सङ्गात् स्व-परदर्शनतत्त्ववित् क्रमाद् दृढधर्माऽभूत् ।

अन्येद्युर्मन्त्रि-सामन्तादियुक्तायां सभायां धरणीधवः स्थितः । तत्र विचित्रासु वार्ताकथासु नृपः साधु-श्राद्धगुणान् प्रशशंस । यथा—'अहो ! धन्या मुनीन्द्रा ये स्वदेहेऽपि निर्ममाः परलोकहितायैव द्वादशधा तपः कुर्युः' । इत्यादिं नृपगिरं श्रुत्वा वसुसारपुरोहितः वृश्चिकदष्टवद् व्यथां प्राप्तः सन् प्राह—"स्वामिन् ! कुशास्त्रैः स्वयं वञ्चितैर्धूर्तैः श्वेताम्बरैरिन्द्रजालकलादिभिर्मुग्धोऽयं लोको वञ्च्यते । यतो जीव एव नास्ति

परलोकाऽभावात् । पुण्य-पापे न स्तः, तदभावे शुभा-ऽशुभं फलं क्व कस्य स्यात्? । लोको मुधा परभवदुःखतो बिभेति । अमुत्र शर्मणे पुण्यकर्मणि मुधा क्लिश्यते, यतो नास्तिकाः प्राहुः—

"एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः । भद्रे! वृकपदं पश्य, यद्वदन्त्यबहुश्रुताः" ॥ १ ॥

"पिब खाद च चारुलोचने!, यदतीतं वरगात्रि! तन्न ते ।
न हि भीरु! गतं निवर्तते, समुदयमात्रमिदं कलेवरम्" ॥ २ ॥

तद् ऐहिकसुखं त्यक्त्वा परलोकसुखाशया तपसः कर्ता जनः शृगालवद् उभयभ्रष्टः स्यात् । यथा जम्बूको मांसं तीरे मुक्त्वा मीनग्रहणाय धावितः । मीनो जलान्तः प्रविवेश, मांसं च गृध्रो गृहीत्वा गतः! । तथा ऐहिकं वैषयिकं सुखं त्यक्त्वा परभवसौख्याय धावितास्ते नरा उभयभ्रष्टास्तीव्रतपो-व्रतादिभिः स्वं वञ्चयन्ते" । एवं पुरोधसः कर्णसूचीं वाचं श्रुत्वा नृपो गाम्भीर्याद् रोषं गोपयन् मन्त्रिणो मुखमैक्षत । ततः सर्वविद्याविदग्रणीर्मन्त्री बभाषे—"रे मूढ! स्वसंवेदनसिद्धं जीवं कथं निह्नुषे? । दुःखितेऽप्यङ्के पुत्रजन्मादिना सुखं को भुङ्क्ते? । सुखितेऽपि शरीरे पुत्रमरणादिना दुःखमपि को भुङ्क्ते? । 'ममाऽङ्गं स्थूलं कृशं वा' इत्यादि स्वस्वामिभावं को बिभर्ति? । शाश्वते जीवे सिद्धे सति परलोकः सिद्ध एव, पुण्यपापे च सुख-दुःखफले सिध्यत एव । किञ्च, जीवं विना 'नाऽस्म्यहम्' इति को वक्ति?, 'अहं' च 'नास्मि' इति 'माता मे वन्ध्या' न्यायः समागच्छति । अतो दानादिना स्वर्गादि फलं स्यात्, हिंसादितश्च नरकादि फलं भवति" । इत्यादिभिर्हेतुगर्भितैर्मन्त्रिणः शास्त्रवचनैर्वसुसारो हतप्रतिभो निरुत्तरश्चक्रे । एवं सभायां

धिक्कृत एष राज्ञाऽप्यपमानितो निर्गतः। तद्दिनात् स लज्जया भूपसदसि नैति। राज्ञा सत्कृतः सभालोकैश्च संस्तुतः सचिवः स्वधाम जगाम। परेऽपि लोकाः स्वगृहाण्ययुः। एवं मन्त्री गुर्वादिभ्यो ज्ञात्वा यथावसरं राज्ञे बहून् विचारानाख्याति। एवं काले गच्छति अन्यदा नृपतेः प्रगाढा शीर्षवेदनाऽभवत्। वैद्यादिभिरौषधादिबहूपायैः कृतैरपि तस्यामनुपशान्तायां नृपः पुरोधसमस्मार्षीद्, यतस्तं मन्त्रं स जानाति येन वेदनोपशमो भवेत्। एवं विदित्वा नृपो नरैः पुरोधसमाजूहवत्। वसुसारोऽप्यागत्य सद्यस्तां वेदनां मन्त्रादपानयत्, यतो मणि-मन्त्रौ-षधीनां हि अचिन्त्यो महिमा। ततो नरेन्द्रस्तं विविधैर्भूषणादिभिः सच्चकार, यतो महान्तो हि कृतज्ञाः स्युः। तद्दिनादारभ्य स सभायां हर्षेण सदैवाऽऽयाति, जनेष्वपि प्रतिष्ठां प्राप। स च नीति-कामा-ऽर्थशास्त्रैः किञ्चिद्धर्ममिश्रितैर्नृपचित्तं विनोदयति। अन्यदा सचिवो नृपाग्रे पुरोधसं मान्यं वीक्ष्य जगौ–'स्वामिन्! अस्य चार्वाकचण्डालस्य सङ्गं नोऽर्हसि'। इति मन्त्रिगिरं श्रुत्वा नृपे मौनेन स्थिते क्रोधाध्मातः पुरोधाश्चिन्तयामास–"हहा! शुद्धविप्रकुलोद्भवोऽप्यहमनेन राजमानोन्मत्तेन मन्त्रिणा चाण्डालतां नीतः!। पूर्वं सभासमक्षं रङ्कवत् पराभूतः, पुनरधुना स पराभव उज्जीवितः। एवं सहमानः पुरुषाधमतां लभे, यतो मानिनः प्राणान् जहति परम् अभिभवं न सहन्ते। यतः—

"वरं प्राणपरित्यागो, न मानपरिखण्डनम्। प्राणनाशात् क्षणं दुःखं, मानभङ्गाद्दिने दिने" ॥ १ ॥

ततस्तेजो दर्शनीयं, परं न सहनीयोऽभिभवः। यतः-पङ्कः पादैर्मर्द्यते, परं तेजस्वी अनलो न। सापराधस्याऽपि तेजस्विनो मुखं सर्वैरीक्ष्यते, यतो गृहदाहे कृतेऽप्यनलः कस्याऽऽदेयो न स्यात्?। तस्मात् प्राणा

यान्तु, श्रियो यान्तु, सुखं यातु, परं केनचिदुपायेनाऽस्य मन्त्रिणोऽनर्थं तु करिष्ये" । इति ध्यायन् स्वं धा+माऽगमत् । 'अथ मन्त्रिणश्छलमन्वेषयति मयि नास्तिकत्वे सति राजा वश्यो न भविष्यति, राजानं च वश्यं विनाऽस्याऽनर्थाय न समर्थः' इति विचिन्त्य कस्यचित्साधोः पार्श्वे जैनी क्रियाऽभ्यस्ता । ततः कपटश्रावकीभूय निःशङ्को नृपं सेवते, मन्त्रिवच्च श्रावकाचारान् दर्शयन् नृपं व्युद्ग्राहयामास; यतो धर्मदम्भात् को हि न वञ्च्यते ? । मन्त्री तं मायिनं जानन्नपि उपेक्षते, उपायं विना नृपसंमतो नाऽपाकर्तुं शक्यते । पुरोधास्तु धर्मशास्त्रमुपदिशन्नन्तरा कामशास्त्रोपदेशेन नृपतेर्मनोऽरमयत् । क्रमात् कामरागं चित्ते तथाऽवीविशद् यथा भूपस्य धर्मरागः शनैः शनैरहीयत, यथा माञ्जिष्ठो रागः कज्जलसङ्गतो नश्यति, यथा चाऽगरुसम्भवो गन्धो लशूनदुर्गन्धाद् नश्यति । अथाऽन्येद्युः कार्यवशतः पुरोधा मन्त्रिणा गेहेऽगमत् । तदा आसनदाना-ऽऽलापाद्यैर्मन्त्रिणा बहु मानितः । यदुक्तम्—

"गेहा*गयाण उचियं, वसणावडियाण तह समुद्धरणं । दुहियाण दया एसो, सव्वेसिं सम्मओ धम्मो" ॥ १ ॥

पुरोधा इतस्ततः पश्यन् मन्त्रिणः प्रिये अद्राक्षीत् । सोऽचिन्तयत्—'अहो! अनयोर्जगदुत्तरं रूपम्, रूपानुमानेन ध्रुवं गुणा अपि सम्भवन्ति । अहो! धन्योऽयं मन्त्री यस्येदृग्भोगसङ्गमः । अथवा ईप्सितकार्यस्य सिद्ध्युपायो लब्धः' । ततो यत्तत् कार्यं निवेद्य मन्त्रिणा चोत्तरेऽर्पिते स्वगृहं जगाम । अथ पुरोधा लग्नादिबलात् किञ्चिदनागतादिकं निवेद्य सदा क्ष्मापं रञ्जयति । अन्यदा रहसि स्थितेन भूपेन विश्वासात्

+ गृहम् । * गेहागतानामुचितं, व्यसनापतितानां तथा समुद्धरणम् । दुःखितानां दया एष, सर्वेषां सम्मतो धर्मः ॥१॥

पुरोधाः पृष्टः–'हे पण्डित! मम राज्ये किमपि न्यूनमस्ति?' । तदा मन्त्रिणि द्वेषात् पुरोधा उवाच–"हे स्वामिन्! गजा-ऽश्वादिकं सर्वमन्यनृपतेरधिकं समस्ति, परं धर्मा-ऽर्थ-कामेषु पुमर्थेषु काम एवात्म-सौख्यकृत्, धर्मा-ऽर्थयोः फलं काम एव, तत्राऽपि भार्यैव कामस्य मुख्यं साधनम्, सा भार्या तव नास्ति, अतो मन्ये सर्वं राज्यादि निष्फलम्!" । अथ विस्मितो राजाऽब्रवीत्–'रे विप्र! किमनृतं भाषसे?, बह्व्योऽपि मम सुरूपा गुणसुन्दरा भार्याः सन्ति' । विप्रोऽवक्–"बह्व्योऽपि सन्ति, परं तासु तवाऽनुरूपा नास्त्येकाऽपि, अतः सत्तामात्रेण किम्? । यथा कोद्रवाद्यैरपि भोजनं, काचाद्यैरप्यलङ्कारः, क्षारनीराद्यैरपि तृट्छेदः, वल्काद्यैश्चापि वपुराच्छादनं स्यात्, परं घृतपूर्ण-कनक-द्राक्षाम्बु-सुरवाससां कार्याणि तु न तानि कुर्युः, तथा तवाऽङ्गनाः स्त्रीकार्यं नो कुर्युः" । नृप ऊचे–'मत्प्रियाभ्योऽपि रूप-सौभाग्य-गुणैरधिका किं काऽप्यङ्गना दृष्टा श्रुता वा?' । विप्रोऽवादीत्–'स्वामिन्! मयोभे स्त्रियौ साक्षाद् दृष्टे, यद्रूपं दृष्ट्वाऽहं ते प्रियास्तृणायाऽपि नो मन्ये!' । नृपोऽवादीत्–'द्विज! कस्य गृहे?, ते कन्ये वा परिणीते वर्तेते?' । स दुष्टात्माऽभाषिष्ट–'अशक्तस्याऽनुद्यमवतश्च तव किमनेन पृष्टेन?' । राज्ञोचे–'किमेवं भाषसे?, काऽह-मशक्तोऽनुद्यमश्च?' । विप्रेणोक्तम्–"यद्येवं शृणु–तव स्वायत्ते ते स्त्रियौ, यतस्तव सचिवस्येमे वल्लभे । तव किङ्करश्चायं, तत्र कः पराक्रमः? । उद्यमं विधाय स्वान्तःपुरे नय, ते हि तवैवाऽर्हे । यतः—

"स्त्रीरत्नं भाति नाऽस्थाने, स्थाने भाति च योजितम् । ऐभे कण्ठे मणिघण्टा, भ्राजते न तु गार्दभे" ॥ १ ॥

तवेदं रूपमैश्वर्यं पराक्रमो राज्यादि च सर्वं निष्फलं यदि ते प्रिये न स्याताम् । स्त्रिया आधिक्यं

किमपि न परम्, किङ्करे प्रियाधिक्यं सहमानः किं लज्जसेऽपि न ?। स्वामिनोऽतिशायिनं स्त्रीभोगं सेवको नाऽर्हति, गृहाद्यपि स्वामितो न्यूनं युज्यते। भक्ति-नयोज्झितो मन्त्री अद्यापि न वेत्ति, अतस्तत्प्रिये लात्वा शिक्षां दातुमर्हसि"। इति विप्रवाचं श्रुत्वा दीसकामोऽपि व्यचिन्तयत्–'परस्त्रीपरिहाराख्यं निजं व्रतं न लोप्स्यामि'। इति विचिन्त्य 'सर्वं साधु करिष्यामि' इत्युक्त्वा तं विससर्ज। अथ नृपस्याज्ञया मन्त्री चैत्यमचीकरत्, तत्र च जैनानि बिम्बानि प्रत्यतिष्ठिपत्। तस्मिन् महोत्सवे साधर्मिकाणां वात्सल्यं कुर्वन् सचिवः स्वगृहे भूपं न्यमन्त्रयत। ततः प्रागपि तत्पत्न्यौ द्रष्टुकामो नृप 'इष्टं वैद्योपदिष्टं' मन्वानस्तद्गृहेऽगमत्। सचिवः सप्रियस्तस्मै राज्ञे सपरीवारायाऽऽचमनादारभ्य सर्वमुचितमातिथ्यं व्यधात्। विश्वासाद् मन्त्रिपत्न्याद्याः खाद्यादिभोजनानि व्यञ्जनानि च क्रमतः पर्यवीविपन्। अथ भूप एते उभे रूपेणाऽप्रतिमे समीक्ष्य पुरोधसो वाचं श्रद्दधानः कामपरवशोऽभूत्, तथापि संवृताकारस्तद्गतमानसो धात्रीशो भोजनास्वादं न जानन्नपि अभुक्त। ततः सुगन्धिताम्बूलादि दत्त्वा मन्त्रिणा दिव्यदुकूलाभरणादिभिः सत्कृतो निजं धाम आजगाम। अन्येद्युर्नृपो रहसि पुरोधसमवादीत्–'मन्त्रिप्रियारूपं त्वदुक्तं सत्यं दृष्टम्'। द्विजोऽवादीत्–'भक्ता अनुजीविनः किं प्रभुं वञ्चयन्ते?, अधुना ते स्वान्तःपुरे नीत्वा स्वात्मानं कृतार्थय'। भूपतिर्जगाद–"इदं कथं कुर्वे?, यतः परस्त्रीपरिहाराख्यव्रतभङ्गे हि दुर्गतिः, परम् अपयशः, स्वकुलस्य मालिन्यं, तद्ग्रहणे च लोकापवादः प्रवर्धते। रहस्तु तद्ग्रहणे कश्चनोपायो नास्ति। तथा मन्त्री स्वामिभक्तो मम मित्रं च। अथ च सुश्रावकाग्रेसरः, धर्मसाहाय्यदानेनोपकारी, विनयी, नयी, पराक्रमी,

बुद्धिमांश्च; ईदृश्यदोषेऽपि दोषारोपादि कथं युज्यते ? । पुनर्विश्वस्ते विश्वासघातपापं कः कुर्यात् ?, तस्मात् पापमूलेन परस्त्रीग्रहणेनाऽलम् । इहभव-परभवविरुद्धं शुद्धबुद्धिः कः कुर्यात् ?" । भूपोक्तमित्याकर्ण्य दुर्धियां धाम पुरोधा बहिः शिष्टोऽन्तर्दुष्टः खिन्नः पुनर्जगौ—"स्वामिन् ! युक्तमुक्तम्, परं स्वसेवकैकवात्सल्याद् नीतिशास्त्रं नेक्षसे । तन्नीतिशास्त्रानुगं वचः शृणु—भक्तो हितं वक्ति, सुधीर्हितश्रावी स्यात् । यानि रत्नानि भुवि जायन्ते तेषां धान्यादिवत् त्वमेव प्रभुः, सर्वभूपानामयमेवाऽऽचारः । तव पृथिव्युत्पन्नानां त्वमेव प्रभुरसि, अतः सर्वाः स्त्रियस्तवैव, तव परस्त्री काऽपि नास्ति!, तेन मन्त्रिपत्नीग्रहे व्रतभङ्गः कथं भवेत् ? । 'मन्त्री स्वामिभक्त' इत्याद्युक्तं तन्न श्रद्दधामि, चेत् स्वामिभक्तः स्यात् तदा स्वप्रियं कथं नाऽर्पयेत् ? । किञ्च, कुतोऽपि मया ज्ञातमस्ति यत् तव वैरिणाऽसौ मन्त्री वशीकृतोऽस्ति, काले तवापि ज्ञानं भविष्यति, ततः कथमसौ स्वामिभक्तः ? । तव ऋजोरनेन मायिना सह मैत्री न युज्यते । तव द्रोहं ध्यायन् कथं सुश्रावकाग्रणीः ? । धर्मसाहाय्यकाद्यपि विश्वासायैव । अस्य बुद्ध्यादिशक्तिरपि न ते गुणाय, प्रत्युत दोषायैव । सदोषोऽयं न त्वयि विश्वस्तः, परं त्वयैवाऽस्मिन् विश्वासः कृतः, हे प्रभो ! एतत्सर्वमवसरे तव प्रादुष्करिष्यामि" । इति श्रुत्वा नृपो दध्यौ—'किमेतत् सत्यं स्यात् ?, अथवा काले समस्तं ज्ञास्यते' । इति विचार्य 'मित्र ! अवसरे ज्ञात्वा त्वदुक्तं कर्तास्मि' इत्युक्त्वा नृपः प्रीतं पुरोहितं विससर्ज । तद्दिनतो भूपो सचिवे संशयं कुर्वन् तत्प्रियाकामुको बहिर्वृत्त्यैव मित्रत्वं दर्शयामास । यतः—रिपुभटायुधैर्येषां हृदयं न भिद्यते तेषां शूराणामपि द्राक् खलवाक्याद् भिद्यते, खलोऽन्तःप्रविष्टो मैत्रीं विनाशयेत्, हंसचञ्चूः

क्षीर-नीरयोर्भेदं किं न विधत्ते ? । दुष्टः शिष्टानां कष्टाय भवति, किं पुनर्नृपमान्यः ?, अग्निः केवलोऽपि दहति, किं पुनर्वायुसङ्गमे ? ।

अथ गिरिसङ्गमे नगरे प्रचण्डदोर्दण्डखण्डितोद्दण्डशात्रवः समरवीरो भूपोऽस्ति । अन्यदा तेन सहाऽस्य नृपतेर्देशनिमित्तको भृशं विरोधोऽभूत् । ततो नृपादेशात् प्रतोल्यादौ स्थितैर्नरैर्गतागतकृतो लेखहारकाः शोध्यन्ते । तदा पुरोहितः शाकिनीवत् छलान्वेषी मन्त्रिणोऽपकारं कर्तुकामोऽवसरं ज्ञात्वा कूटलेखं लिलेख, बहुद्रव्येण च कञ्चिद् विप्रं प्रलोभ्य मृषामायां शिक्षयित्वा तं लेखं समार्पयत्, प्रपञ्चविच्च तेन लेखेन सह हेमपलचतुष्टयं विप्रायाऽदात् । अथ स्वर्ण-लेखौ लात्वा ब्राह्मणो ग्रामान्तरे गतः, कियत्कालं तत्र स्थित्वा दूरदेशान्तरागामीव वेषभृद् धूलिधूसरोऽस्मिन् पुरे आगतः । प्रतोलीस्थितपुरुषैः पृष्टः सन्न किञ्चिद् भाषते । ततस्तै राज्ञेऽर्पितः । राज्ञा 'कोऽसि ?' इति पृष्टोऽसौ जगाद—"अत्रैव नगरे वसन् निर्धनो द्रव्यार्जनोपायैः क्लिश्यमानो विप्रोऽस्मि । अन्यदा लोकाद् मया श्रुतम्—'गिरिसङ्गमे नगरे विप्रेषु भक्तिमान् दानी समरवीराख्यो नृपोऽस्ति, सोऽपूर्वविप्राय हेमपलचतुष्टयं दत्ते' । अहमपि स्वर्णलोभेन कतिभिर्दिनैस्तत्र गतः, मयाऽऽशीर्वादो दत्तः । तेन पृष्टः—'कुतस्त्वमागतः ?' । मयोक्तम्—'रतिवर्धननगरादागतोऽहम्' । ततस्तेन पलचतुष्टयं स्वर्णं दत्तम्, लेखश्चार्पितः । ऊचे च—'अयं मुद्रायुक्तो लेखो मतिसुन्दरमन्त्रिणो दातव्यः, न कस्यचिदन्यस्य' । ततोऽहं तल्लेखमादायाऽत्रागतः, लेखमध्यस्थं स्वरूपं न वेद्मि" । इति वादिनं विप्रं विसृज्य भूपतिर्लेखमुन्मुद्रयऽवाचयत्, यथा—"स्वस्तिश्रीगिरिसङ्गमनगराद् राजाधिराजः

श्रीसमरवीरनामा श्रीमति रतिवर्धननगरे निजम् आन्तरमित्रं महामन्त्रिणं श्रीमन्मतिसागरनामकं सस्नेहमालिङ्ग्य प्रीतिरसप्रसरं समादिशति यथा—वयं सर्वदा कुशलकमलासमालिङ्गनसुभगा विजेजीयामहे । भवताऽपि सततं निजकल्याणोदन्तनिवेदनेन प्रमोदपदवीं प्रापणीया वयम् । कार्यमथ यद् भवता ज्ञापितम्—'अहं विश्वासमानं राजानमवसरं लब्ध्वा बद्धा भवतो राज्यं प्रदास्यामि, तद् अवसरे भवता सर्वसैन्यपरिवारेण बलसारेण समागम्य परिकरं भिन्दानोऽसि' इत्यादि, भवता तत्कार्यविषये सदाऽवहिततया वर्तितव्यम्, तद्दिनं च ज्ञाप्यं, येन तद्दिनस्योपरि अहं सर्वाभिसारेण समागच्छामि, कृतार्थश्च भवामि। यच्छुभवते भवते राज्यार्धं मानितं तन्नियमेन प्रदास्यामि, नाऽत्र सन्देहः कार्यः । सर्वदा समाधानमत्राऽस्ति, ससमाधानं प्रधानविशेषकार्यादि च निवेदनीयमिति मङ्गलम्" । इति लेखार्थं विबुध्य नृपो व्यचिन्तयत्—'ही ! किमेतद् असम्भाव्यं यत् क्वचिन्न दृष्टं न च श्रुतम्। ईदृशे श्राद्धे मन्त्रिणि कस्याऽप्यकारणरिपोः स्फुटं कपटं किमीदृशं सम्भवेत् ?। अथवाऽत्र का विचारणा ?, मन्त्रिणः प्रिये जिघृक्षुणा मया क्षुधितेन भोजनमिव द्वारं लब्धम्। तद् अस्याऽपराधं लोके प्रादुष्कृत्य तत्प्रियं गृह्णामि, ममेष्टासिर्भविता, भाग्यतोऽपवादोऽपि न भविष्यति'। एवं विचिन्त्य लेखं मन्त्रिणोऽदर्शयत् । मन्त्र्यपि स्वधिया पुरोवसः कपटं संभावयन् व्यचारयत् 'छलवुद्धीनां खलानां क्वचिदप्यकार्ये स्खलना न भवेत्'। मन्त्र्याह—'नाथ ! इदं दुष्टस्याऽनर्थचेष्टितम्' । तदा भूपः क्रोधाविष्टो निष्ठुरमभाषिष्ट—'रे धृष्ट ! त्वमेव किं दुष्टो न यो विश्रब्धेऽपि मयि प्रभौ एवं चेष्टसे ?, स्वं दोषमन्यस्मिन् क्षिपन् मां किमु वञ्चयसे ?' । इत्युक्त्वा नृपस्तं लेखं सभ्यानदीदृशत्। ते सभ्या इदं मन्त्रिण्य-

सम्भाव्यं मत्वाऽनन्यगतिका अजानानाः श्यामास्या मौनमादधुः । ततः स्मर-क्रोधाभ्यां विधुरो राजा मन्त्रिणं निजैर्नरैर्निगडितं कृत्वा चारकेऽचिक्षिपत्, अस्य च मनःप्रिये प्रिये आनाय्याऽन्तःपुरेऽक्षैप्सीत्, परिकरे च नष्टे गृहे मुद्राम् अदीदपत् । स्वं कृतकृत्यं मन्यमानो भूपः सभां विसृज्य स्वकृत्यकरणार्थं गतः । ततः खिन्नो मन्त्री दध्यौ—"धिग् धिग् नृपाधमं यः सहस्रश उपकारैर्न गृह्यते स्म । यतः—

"सर्पः खलो नृपो वह्निरर्थी नारी यमो विधिः । शस्त्रा-ऽपथ्या-ऽम्भो-विषाश्च कस्यापि स्वा भवन्ति न" ॥ १ ॥

नृपेणाऽयं सर्वः प्रपञ्चो मम प्रिये हर्तुं कृतस्तद् भोजनावसरेऽपि दृष्टिचेष्टितैर्ज्ञातम् । हहा! स्मरं धिग्, यतो नीतिज्ञोऽपि कुलीनोऽपि जैनधर्मज्ञोऽपि भूपः स्निग्धे निर्दोषेऽपि मयि यदेवमचेष्टत । यदुक्तम्—

"विकलयति कलाकुशलं, हसति शुचिं पण्डितं विडम्बयति । अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः" ॥१॥

अथवाऽयं सर्वोऽपि दोषश्चार्वाकस्य पुरोधसः, यो हि मुग्धं भूपतिं नानाकुप्रपञ्चैरविभ्रमत् । अथवा धर्मविदो ममाऽन्यस्मिन् दोषारोपो न युक्तः, यतः स्वकृतं कर्मैव सर्वस्य सुख-दुःखकृत् । अधुना विपरीते भूपे न किञ्चन मम त्राणं, प्रिययोश्चाऽपि शीलस्य रक्षोपायः कोऽपि नास्ति, तच्चिरमाराद्धो जैनधर्म एवाऽस्माकं शरणं, धर्मं प्रपन्नानां प्रायः सुराः प्रार्थितप्रदा भवन्ति । चेत् कदापि आप्रतिपत्तिदिनात् शील-सम्यक्त्वे किञ्चिन्न विराधिते तद् मम विपद् द्रुतं नश्यतु" । इति ध्यात्वा मन्त्री कायोत्सर्गेण तस्थिवान् । तदाकृष्टा शासनदेवता सद्यः साक्षादभवत् । साऽवोचत्—'तव विपदः क्षयं गताः, अतः कायोत्सर्गं पारय; प्रातर्भूपेन स्वयं सत्कारे विहिते सति ज्ञास्यसि' । इत्युदित्वा सा गता । मन्त्री धर्ममाहात्म्यं चिन्तयन्

कायोत्सर्गमपारयत् । इतश्च मन्त्रिपत्न्यावपि शीलभङ्गस्याशङ्कया चित्रशालायां संस्थिते परिदेवनं[1] चक्रतुः । महीपतिरात्मवशीकर्तुं तयोः पार्श्वे दासीः प्रैषीत्, तदा ते कोपाटोपात् ता दासीर्धिक्कुरुतः । स्वर्गविमानोपमायां चित्रशालायां स्थिते अपि कारागारस्थितमिवात्मानम् अमन्येताम् । दध्यतुश्च—"स्वधवस्यापत् स्वजनादिवियोगिता च न तथा दुःखाय यथा शीलभ्रंशनभयम् । यदि भूप आवयोः शीलमालिन्यं विधास्यति तदा केनचिदुपायेन मरिष्यावः । यतः—

"वरं प्राणपरित्यागो, न तु शीलस्य खण्डनम् । प्राणत्यागे क्षणं दुःखं, नरकः शीलखण्डने" ॥ १ ॥

"अनार्यैः परिभूतानां, सर्वेषां शरणं नृपः । स एव यद्यमर्यादः, किं त्राणं नौ[2] ततोऽधुना?" ॥ २ ॥

अथवा धर्म एव नौ त्राणम्, अत एव विकटे सङ्कटे प्राप्ते स एव नौ रक्ष्यात् । स च सम्यक्त्व-शीलादिर्धर्मो यदि आवाभ्यां मनसाऽपि अविराधितस्तदा शासनदेवता नौ शीलं रक्षतात् । सुनिश्चिलं कायोत्सर्गं तावन्न पारयिष्यावो यावद् आवयोः शीलभङ्गभयक्षयो न भविता" । एवं कृतप्रतिज्ञे मन्त्रिपत्न्यौ कायोत्सर्गेण तस्थतुः । तदा सैवाऽऽकृष्टा देवी तयोः प्रत्यक्षाऽभूत् । 'कायोत्सर्गः पार्यताम्, तथा विधास्ये यथा युवयोः शीलभङ्गो न भावी' इत्युक्त्वा च तिरोदधे । राजा तु कामार्तो मन्त्रिपत्न्योः सङ्गं लिप्सुर्[3]निशायामन्तःपुरमागत्य शय्यास्थश्चित्रशालायास्ते आनेतुं दासीरादिशत् । ताभिर्गत्वा पारितोत्सर्गे मन्त्रिपत्न्यौ नृपसमीपे आनीते । ततस्तेन सोत्कण्ठं पश्यताऽऽदिमा मन्त्रिपत्नी देव्यनुभावतः पाद-मुखं मुक्त्वा कुष्ठग्रस्ता

१ पश्चात्तापम् । २ आवयोः । ३ लब्धुमिच्छुः ।

दृष्टा। नृपस्तामपृच्छत्–'भद्रे! तव कुष्ठः कथमभूत्?'। साऽप्यवादीत्–'हे नरोत्तम! स्वकर्मणा चिरकालीनोऽयं वैद्याऽसाध्यः'। ततो द्वितीयां यावदालिङ्गितुं याति तावद् दुर्धरात् शरीरदुर्गन्धाद् आधिधुरो जातः। नृपः पप्रच्छ–'तवाऽङ्गे दुर्गन्धः किंप्रभवः?'। साऽवोचत्–'अयं मम कर्मणा चिराद् वैद्याऽसाध्यो जातः'। तदा विरक्तो भूप इमे चित्रशालायां प्रेष्य व्यचिन्तयत्–"धिग् दैवं येनेदृशं स्त्रीरत्नद्वयं दूषितम्। भोजनावसरे मयाऽनयोरेवंविधो दोषः किंकिलु दुकूलाच्छादितत्वाद् दूरस्थत्वाद्वा न ज्ञातः!। अविचारितवादिनं तं पुरोहितं धिग्, येनैवंविधं पापं कारितोऽहम्। एतदर्थं मया ही! सर्वगुणोऽपि मन्त्री कष्टं निन्ये, धर्मे कीर्तौ कुले यशसि च मालिन्यं कृतम्। मन्त्रिणि वैरिगृह्यत्वादिकं कोऽपि विज्ञः पुरुषो न मन्येत, अतः पुरोधस इदं कपटम्। स हि सदम्भोऽधमो मन्त्रिणा पुरा धिक्कृतः, अतस्तेन पापिना मन्त्री अपाये क्षिप्तः। अथ प्रातर्बुद्धिसम्भवैरुपायैर्निश्चित्य मन्त्रिणं पुनः प्राक्तने पदे न्यसिष्ये, तस्य प्रिये अर्पयिष्यामि, दुर्जनांश्च शिक्षयिष्यामि"। इत्यादि विचिन्त्य खेदा-ऽऽश्चर्यमयीं निशामनैषीत्। अथ प्रात राजन्यमण्डितां सभां नृप उपविष्टः, तं च लेखहारकं विप्रं नरैराह्वाय्य पप्रच्छ–'रे! सत्यं वद, अयं लेखस्तव केनाऽर्पितः?'। भियाऽवदन्तं तं नरैर्बहुताडयत्, तदा ताड्यमानो विप्रोऽब्रवीत्–'रे रे! मुधा किमु मारयथ?, बहुहेम्ना प्रलोभ्यैतत् पुरोधसा कारितोऽस्मि'। ततो लेखे पुरोहिताक्षरसदृशान्यक्षराणि दृष्ट्वा बुद्धिमान् भूपः सर्वं यथास्थितं निश्चिक्ये। ततो नृपः स्वनरैर्निगडभञ्जनेन मन्त्रिणमाहूय क्षमयित्वा भूषणादिभिर्गाढं सच्चक्रे, सप्रियं

१ चित्तव्यथाविह्वलः। २ कस्माज्जातः?। ३ कोपा-ऽश्रुद्वयोर्याप्रियमाणमव्ययम्। ४ स्थापयिष्ये।

च तं राजन्यश्रेणिसंयुतं गजारूढं वादित्राद्याडम्बरपुरस्सरं गृहे प्रैषीत्। मन्त्री प्रिये च देवताभापणादिकं स्ववृत्तान्तं पृष्टा बुद्धा च धर्ममाहात्म्यं वर्णयन्त आसते। भूपः पुरोधसं कोपाद् धिकृत्य दण्डयित्वा च लेखहारकेण सह स्वदेशाद् निरवासयत्। तदारभ्य राजा कुसंसर्गं त्यक्त्वा प्राग्वद् मन्त्रिणा सह गोष्ठीं चकार।

अन्येद्युर्धीसखं क्ष्माभृत् सदसि प्रीत्या पप्रच्छ–'मन्त्रिन्! तव प्रिये सदोषे, अतोऽन्यां किं नाऽङ्गीकरोषि?'। मन्त्र्युवाच–'स्वामिन्! यस्य तस्याऽपि वञ्चने महापापं भवति, किं पुनः स्वस्वामिवञ्चने?। अतो यथास्थितं वच्मि–एते सदोषे नैव स्तः, किन्तु सर्वाङ्गसुभगे, परं तदा तच्छीलरक्षायै देव्या तव तथा दर्शिते'। 'कथमेतद्?' इति राज्ञा पृष्टे मन्त्री कायोत्सर्गादिकं पूर्ववृत्तान्तं सर्वमादितो जगौ। नृपो दध्यौ–'अहो! भाग्याद् देव्याऽनुकम्पितोऽहम्, तदा दुष्टोऽप्येवं शिक्षितो न तु भस्मीकृतः'। ततस्तेषामद्भुतं धर्ममाहात्म्यं प्रशशंस, स्वं चाऽकृत्यकारिणं मन्त्रिसमक्षं निनिन्द। एतादृशं सम्यक्त्वादिमाहात्म्यं ज्ञात्वाऽखिले पुरे प्रायः सर्वेऽपि स्वशक्त्याऽऽर्हतं धर्मं प्रपेदिरे। अन्यदा भूपो गुरुपार्श्वे परस्त्रीकामोद्भवं पापमालोच्य प्रायश्चित्तादिभिर्बहु अक्षिपत्। प्रतिपुर-ग्रामं विहारान्[3] निरमापयत्, गुरूनपूजयत्, साधर्मिकाणामिष्टदानाद्यैः करमुक्त्या च सुखं चक्रे, तीर्थयात्रादिपुण्यानि दीनदानानि च व्यधात्। स्वदेशेऽमारिं प्रवर्तयामास, एवं नृपः कालमगमयत्। सचिवोऽप्युग्रभावत एतान्यखिलानि पुण्यानि स्वशक्त्या प्रिया-

१ मन्त्रिणम्। २ जैनम्। ३ जिनमन्दिराणि।

न्वितो विशेषतश्चक्रे । तौ भूपा-ऽमात्यौ समं प्रत्यहं जिनान् त्रि[1]रार्चताम्, द्विः प्रत्य[2]क्रामताम्, तिथ्यादिपु पर्वसु च पौषधं विदधाते । मन्त्रिप्रिये अपि स्वशक्त्या पुण्यान्यकार्ष्टाम् । एवं ते कियतीर्वर्षकोटीर्धर्ममयीरनयन् । अन्येद्युस्तत्रोद्याने सोऽतिवलगुरुः केवली भगवान् अनेकमुनिपरिवृतो भूयोऽपि समवसृतः । तत उद्यानपालकैः सद्यो राजा वर्धापितस्तेभ्यो मुदितः पारितोषिकं ददौ । ततः सचिव-सामन्त-सेनान्यादिपरिवृतो नृपः सर्वर्द्ध्या नागरैः समं वन्दितुमगात् । भूपस्त्रिः प्रदक्षिणीकृत्य नत्वा स्तुत्वा च परिवारादिभिः सार्कं यथास्थानमुपाविशत् । गुरुरपि धर्मलाभाशिषं दत्त्वा भवसागरतरीतुल्यां देशनां प्रास्तावीत् । तथाहि—'वपुरनित्यं, राज्यश्रियोऽपि गत्वराः, अतोऽगत्वराऽऽनन्दपदाय अगत्वरं धर्मं भजध्वम्' । इति नृपादयः सम्यग् निशम्य विशिष्य संविग्नहृदो वभूवुः । अथ सचिवोऽपृच्छत्—'हे मुनीन्द्र! भवान्तरे मया पुण्यं पापं च किं कृतम्?' । ततः सभाप्रवोधाय जिनार्चा-महिमवृद्धये च केवली मन्त्रिप्राग्भवमुवाच । तथाहि—

"अत्रैव भरते रत्नसञ्चये नगरे नरदत्ताख्यो नृपो वभूव । तस्य नृपतेर्मान्यो नन्दनो नाम मालिक आसीत् । तस्य सुनन्दा—सुभगानाम्न्यौ प्रिये अभूताम् । नन्दनो नृपदत्तात् स्वयं प्रवृद्धिं प्रापिताद् मालती-यूथिका-जाति-चम्पकादिद्रुमान्विताद् आरामाद् नित्यं ग्रथिता-ऽग्रथितानि पुष्पाणि देवपूजा-ऽङ्गभोगादौ नृपस्य पूरयति । पौष्पा[3]न् मुकुटाद्यलङ्कारान् पुष्पगृह-शय्यादि च कृत्वा स मालिका भूपं रञ्जयति । तत्रा-

१ त्रिवारम् । २ प्रतिक्रमणमकुर्वाताम् । ३ पुष्पैर्निर्वृतान् ।

द्यानेऽभ्रंलिहे चैत्ये महर्द्धिभिः पौरैर्युगादीशं पूज्यमानं वीक्ष्याऽचिन्तयत्–'कश्चिदयं महान् देवो यो लोकैरेवं पूज्यते'। इति विचिन्त्य लोकैर्बीजपूराणि ढौक्यमानानि निरीक्ष्य स्वयमपि जिनाग्रे बीजपूरमढौकयत्। तद्दिने च पुष्पालङ्काररञ्जितो भूपोऽधिकं प्रसादं चक्रे, स तु जिनार्चाफलं मेने। तद्दिनाद् एष गुणाद्यजानन्नपि अन्वहं कुसुमैः पत्रैः फलैश्च विशेषतोऽर्हन्तमानर्च। अधिकं राजमानादि दृष्ट्वा तस्य प्रिये अपि जिनमानर्चतुः, यतो दृष्टफले हि कार्ये कोऽलसायते?। तस्य मालिकस्यैकः किङ्करः सकण्ठनामाऽभूत्, स चाऽऽरामाद् नृपगृहानयनाय पुष्पभारं वहति। अन्यदा पुष्पभारं वहन् मालिकस्याऽमिलत्। मालिकेन स उक्तः–'रे मूढ! द्रुतं किं नैषि? किं निगडितोऽसि?, नृपस्य देवार्चावसरोऽतिक्रामति'। अनेन वचसा क्रुद्धः सुकण्ठः पुष्पभारमुत्सृज्य देशान्तरे गत्वा तादृक्संसर्गात् तापसोऽभवत्। मालिकोऽपि कोपं कृत्वा तं दुराशयमुपेक्ष्य भारं च स्वयमुत्पाट्य गत्वा भूभुजे समढौकयत्। जिनपूजाप्रभावात् तस्य श्रीरवर्धत। श्री-सुखादीनां वृद्ध्या मालिकस्तस्य पत्न्यौ च प्रत्यहमधिकाधिकं पूजां विदधुः। अथ मालिक आयुः प्रपूर्य हे मन्त्रिन्! त्वं जातः, प्राग्भवपत्न्यौ अत्रापि तव पत्न्यौ बभूवतुः। सोऽपि सुकण्ठस्तापसोऽज्ञानतपस्तस्माऽऽयुषः क्षये पुरोहितः समभवत्। प्राग्भववैरसंस्कारवशतोऽत्राप्येवंविधो जातः। त्वया 'निगडितोऽसि?' इति गिरा पुरा धिकृतः, ततः कूटप्रपञ्चतस्त्वां राज्ञा निगडयामास, यतो 'यद्गिराऽर्ज्यते कर्म, तत्साक्षादेव भुज्यते'। एवं ज्ञात्वा भो भव्याः! संवरं कुरुध्वम्"। एवं श्रुत्वा मन्त्रिणो जातिस्मरणमुत्पन्नम्। मन्त्री जगौ–'हे मुनीन्द्र! यत्त्वया गदितं

तत्सर्वं सत्यमेव, मया तथैव दृष्टम् । अव्यक्ताया अपि जिनार्चाया यदि एवं नृभव-भोगादि फलं, तदा व्यक्तायाः कियत्फलं भविष्यति ?' । इत्यादि चिन्तयतो मन्त्रिणः प्राग्भवं श्रुत्वा भवभीरवो नृपादयोऽधिकं संवेगं प्रापुः । नृप-मन्त्र्यादयो यथाशक्ति धर्मं प्रतिपद्य केवलिनं च नत्वा स्वगृहेषु जग्मुः । मन्त्रिप्रिये अपि गुरोर्वाचा जातजातिस्मृती परमं संवेगं प्राप्य गुरुं नत्वा गृहं प्रापतुः । क्रमाद् नृपतेर्मन्त्रिणश्च बहवः पुत्रा बभूवुः, ते च सुरूपाः कन्याः परिणिन्यिरे । अन्येद्युर्वैराग्याद् राजा मन्त्री च राज्यभारं गृहभारं च निजे निजे ज्येष्ठे नन्दने स्थापयामासतुः । नृप-धीसखौ सचित्तपरिहारिणौ ब्रह्मचर्यं प्रपद्य प्राय आरम्भादिविरतौ जज्ञाते । नित्यमर्हद्भक्ति-गुरूपास्ति-सुसमाहितमानसौ स्वाध्यायध्यानतत्परौ तादृक्पुण्यपरीवारौ स्तः । अन्यदा पौषधे कायोत्सर्गेण स्थितौ, तदा पुरे प्रदीपनकं लग्नम् । भटैर्धूलि-जलादिभिर्विध्याप्यमानोऽप्यग्निर्वर्धिष्णुः पौषधागारसमीपमागात् । ततः पौषधस्थितनृपपरिवारो भयसम्भ्रान्तमानसः प्राणसंशयी बभाषे—'स्वामिन्! आयात एवाभितोऽग्निः, अतो निर्याहि निर्याहि' । इति श्रुत्वाऽग्निं च दृष्ट्वा नृप-मन्त्रिणौ दध्यतुः—"अद्य उत्सर्गः प्रतिज्ञातः, तस्य भङ्गः कथं क्रियेत ?। मृत्युर्वा जीवितं वाऽस्तु, परं पौषधखण्डनं माऽस्तु । यतः—

"सर्वत्र सुलभाः प्राणाः, शुद्धो धर्मस्तु दुर्लभः । प्राणान्तेऽपि ततोऽत्याज्यो, धर्मोऽयं शिवशर्मकृत्" ॥१॥

बहूक्तेऽपि यदा नृप-धीसखौ न निर्यातौ तदा परे पौषधिकाः सर्वेऽपि शीघ्रं निर्ययुः । ततः प्रभूतमग्निं जनानां च भयारवं श्रुत्वा यावद् मरणं निश्चित्य स्थितौ तावद् न कोऽप्यग्निः, न कोऽपि लोकोद्भवः

कोलाहलः, परीवारादि च स्वभावस्थमपश्यताम् । ततो 'अस्मत्क्षोभाय केनापि देवेनेदं दर्शितम्' इति विस्मयापन्नौ यावत् क्षणं चिन्तयतस्तावत् कश्चित्सुरस्तदुपरि पुष्पवृष्टिं व्यधात्, तौ च प्रणम्य सर्वतो दिशः प्रद्योतयन् एवं बभाषे–'सौधर्माधिपतिः स्वयं निश्चलव्रतयोर्युवयोः प्रौढपर्षदि पौषधव्रतदार्ढ्यं प्राशंसत्। एतद् अश्रद्दधानोऽहमत्रागत्य परीक्षां कृतवान्। तत्र युवामेवं दृढतरौ, अतो वां नमोऽस्तु'। इत्युक्त्वा विश्वचमत्कारकारिकां सुवर्ण-रत्नादिवृष्टिं कृत्वा तौ प्रणम्य सुरोऽगात् । ततोऽवसरे उत्सर्गं पौषधं च पारयित्वा जनतामुखाद् धर्मप्रशंसां शृण्वानौ पापवारणं पारणं चक्रतुः । अन्यदा सर्वाः श्रावकप्रतिमा व्यधत्ताम् । प्रतिमाश्चैवम्—

"+दंसण वये सामाईय–पोसह-पडिमा-अबंभ-सचित्ते । आरंभ-पेस-उद्दिट्ठ–वज्जए समणभूए यँ" ॥ १ ॥

आत्मन आयुःप्रान्तमवधार्य समाहितौ आराधनामनशनं च कृत्वा कृतपञ्चपरमेष्ठिध्यानौ मृत्वा शुक्र-देवलोके शक्रसामानिकौ सुरावुत्पन्नौ । तथैव मन्त्रिणः पत्न्यावपि सुसेविताद् धर्माद् मन्त्रिदेवस्य सुहृदौ सुरौ अजायेताम् । सेवकामरैरप्सरोभिश्च सस्नेहं जयजयारवैः स्तूयमानगुणा नवीनोत्पन्नकृत्यानि पूर्वं कृत्वा वाचामगोचराणि ते सौख्यानि बुभुजिरे । नन्दीश्वरादितीर्थेषु यात्रापुण्यानि कुर्वते, शुद्धसम्यक्त्वाश्च ते

---

+ दर्शन-व्रत-सामायिक–पौषध प्रतिमा-ऽब्रह्म-सचित्ते (अब्रह्म-सचित्तवर्जनविषये प्रतिमा) ।
आरम्भ-प्रेष्यो-द्दिष्ट–वर्जकः श्रमणभूतश्च ॥ १ ॥

* एतासामेकादशश्रावकप्रतिमाना विस्तारो द्रष्टव्यः प्रवचनसारोद्धारे १५३ तमे द्वारे ॥

तीर्थंकृत्पार्श्वे धर्मं शृण्वन्ति । एवम् अमेयसुखलीनानां तेषां वर्षकोट्योऽपि क्षणादिव यान्ति । मन्त्रिजीवः पूर्वभवे मुनिदानात् किञ्चिदधिकं सुरसौख्यमभुक्त । वसुसारः पुरोहितस्तदा राज्ञा निर्वासितश्चित्रेषु देशेषु भ्राम्यन् क्वाऽपि स्थानं नाऽऽसदत् । मुग्धान् जनान् कुवासनाभिर्वासयन् रौद्रा-ऽऽर्त्तध्यानयुग् मृत्वाऽऽदिमं नरकमासदत् । तत्र प्राच्यकर्मणा क्षेत्रजं परमाधार्मिककृतं परस्परविहितं च दुःखं सेहे । नरकाद् उद्धृत्याऽसंख्यशस्तिर्यग्भवान् भ्रान्त्वा क्वापि निःस्वो दुःखी दुर्भगो विप्रोऽभूत् । तत्र दौस्थ्यादिदुःखोद्विग्नस्तादृशगुरोः सङ्गमात् पारिव्राज्यं प्रपेदे, दुस्तपं च तपस्तेपे । ततो धूमकेतुनामा ज्योतिष्कदेवोऽभूत् । स मिथ्यादृष्टिर्महर्द्धिकदेवः सौख्यं भुङ्क्ते । केवलज्ञानी राजर्षिरतिबलश्चिरं भुवि विहृत्याऽनेकान् भव्यजीवान् प्रतिबोध्य निःश्रेयसं पदं प्रापत् । एवं दानादिधर्मस्य फलं निशम्य भो भव्याः! तत्रोद्यमं कुरुध्वम् ।

इति तपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे तत्प्राग्भवत्रय-नरवीरनृपभवद्वय-वसुसारपुरोहितस्वरूपा-ऽतिबलराजर्षिदृष्टान्तचारित्रप्रभावादिवर्णनो नाम द्वितीयः सर्गः ॥

## अथ तृतीयः सर्गः ।

नौमि श्रीनेमिनामानं, जिनं सद्ब्रह्मचारिणम् । राजीमतीप्रशास्तारं, रैवताचलसंस्थितम् ॥१॥

अथाऽस्मिन् जम्बूद्वीपे भरतक्षेत्रमध्यगो वैताढ्यः शैलोऽस्ति । स च कीदृशः?—प्रौढशोभाढ्यः, पूर्वा-

पराऽऽयतः, पञ्चाशतं योजनानि मूले पृथुः, दश उपरि, पञ्चविंशतियोजनोच्चः, पूर्वापराम्बुधी स्पृष्टः। यत्राऽर्हद्गुणगणगायिनां किन्नरयुग्मिणां गीतप्रतिशब्दैर्गुहा अपि गायन्तीव भासन्ते, यत्र चाऽऽदिमे श्रेणियुग्मे दक्षिणस्यां दिशि पञ्चाशद् उत्तरस्यां च षष्टिर्नगराणि स्वर्ण-रत्नमयैर्गृहैर्भान्ति, द्वितीये तु श्रेणियुग्मे सौधर्मेन्द्रलोकपालाऽऽभियोगिकसुरालया नानामणिमयाः सन्ति। पुनर्यस्य शिरः सिद्धायतनयुक्सिद्धकूटादिनवकूटभृद् क्रीडद्देवा-ऽप्सरोगणैर्विभ्राजते। अत्र उत्तरश्रेण्यां मणि-स्वर्णमयैर्गृहैर्नित्यमुद्योतमयं रम्यं गगनवल्लभं पुरं समस्ति। निजाः प्रजाः सदाऽऽनन्दमयीः कुर्वन् विद्याधराग्रणीः सहस्रायुधनामा तस्य पुरस्याऽधीशोऽभूत्। तस्य भूपतेः शीलादिगुणमालिनी कान्ताऽनुरक्तान्तःकरणा करुणान्विता मालिनी नाम कान्ताऽभूत्। साऽन्यदा स्वप्ने चक्रिणमद्राक्षीत्, ततः सा भूभुजे आख्यत्, भूपोऽपि चक्रिसदृशं भाविनं पुत्रमूचे, ततः सा राज्ञी जहर्ष। अथ नरवीरजीवो देवः शुक्रदेवलोकाच्च्युत्वा तस्याः कुक्षौ अवातरत्। ततः सद्दिने सुमुहूर्ते तेजोभिर्दिशो भासयन् सर्वलक्षणरम्याङ्गः पुत्रोऽजनि। पिता वर्द्धापनकसङ्कुलं जन्मोत्सवं चक्रे। अथ पिता स्वप्नानुसारतस्तस्य चक्रायुध इति नाम चक्रे। स च धात्रीभिर्लाल्यमानः प्रियदर्शनः प्रजामनोरथैः सार्द्धं कल्पद्रुमाङ्कुर इव ववृधे। शिष्टधीः कुमारोऽवसरे शास्त्र-शस्त्रानुगाः सकलाः कलाः कलाचार्याद् विनैव कष्टमध्यैष्ट। समये पिता विनीताय सौभाग्यनिधये तस्मै प्रज्ञप्त्याद्या महाविद्याः सहस्रशो ददौ। कुमारोऽपि ताः समग्रा लीलया यथाविधि भाग्य-सत्त्वाभ्यामसाधयत्। ततः पूर्वपुण्यानुभावेनाऽनेकशो दिव्यास्त्राण्यपि सिध्यन्ति स्म। क्रमात् पिता विद्याभृतां शतशः स्वयंवराः कनीस्तेन पर्य-

णाययत् । स्नेहार्द्रचित्ताभिस्ताभिः समं चिरं भोगसुखं भुङ्क्ते । अन्येद्युस्तत्र नाम्ना भुवनानन्दनश्चारणश्रमणो ज्ञानवान् गुरुः सपरिच्छद आगमत् । सहस्रायुधभूपः पुत्र-परीवारयुग् विद्याधरसमूहान्वितः सर्वर्द्ध्या गत्वा तं गुरुं नत्वा धर्ममश्रौषीत् । राजा प्रबुद्धः सन् चक्रायुधं सुतं राज्ये विन्यस्य तद्गुरूपान्ते यथाविधि प्राव्राजीत् । चक्रायुधनरेन्द्रोऽपि सम्यक्त्वादि प्रपद्य गुरुं पित्रादींश्च महर्षीन् प्रणम्य गृहेऽगमत् । अन्येऽपि भूरिशो जना यथाविधि सम्यक्त्वाद्यङ्गीकृत्य सर्वेऽपि यथास्थानमगुः । गुरुरप्यन्यत्र विजहार । सहस्रायुधराजर्षिर्गुरुणा सह विहरन् संवेगरससागरो द्विविधां शिक्षामभ्यस्य, अङ्गानि पूर्वाणि चाऽधीत्य तपोरतः क्रमाद् आचार्यपदमवाप्तः ।

अथ महादोर्दण्डविक्रमश्चक्रायुधनृपो विद्यादेव्यर्पितचक्रेण सान्वयाभिधः समभूत् । अन्यान्यपि रत्नानि विद्यया कृत्रिमाणि कृत्वा स्वस्य चक्रित्वं ख्यापयामास । सर्वान् नृपान् अजयत् । अन्यदा सप्रियो नन्दीश्वरे गत्वा जिनान् अर्चयित्वाऽर्हतां पुरः स्वयं नृत्यं चक्रे, तत्प्रिया भक्त्या विचित्राणि वाद्यानि अवीवदन् जिनगीतानि च जगुः । नाट्यं भक्तिं च दृष्ट्वा कश्चित् तुष्यन् सुरोऽर्हद्भक्तिवशात् तस्मै कामितकरीं विद्यां ददे । तां ससाधनविधिं विनयेन गृहीत्वा, जिनान् तं देवं च नत्वा सप्रियः स्वपुरे ययौ । अन्यदा नृपः सुरदत्तां तां विद्यां क्वचित् शाड्वलवने शैले तपोध्यानैः साधयितुं प्रचक्रमे । अथ लङ्केशः शतकण्ठो नृपो मेरौ जिनेश्वरान् नत्वा सप्रियो लङ्कां प्रति व्रजन् विद्यां साधयतस्तस्य सप्तमे दिने मूर्द्धन्यागमत्, तदा तस्य विमानमस्खलत् । ततोऽधो विलोक्य ध्यानस्थं नृपं ज्ञात्वा क्रोधान्धो भूत्वा वृक्षेण सह विद्याविकुर्वितैर्नागैर्बद्ध्वाऽगात्,

तथाप्यचलध्यानस्याऽस्य विद्या सिषेध, सा च नागान् वित्रास्य—'वत्स ! तव सत्त्वेनाऽहमतुष्यम्, मत्प्रसादेन त्वं जगज्जय, त्वयाऽहं कार्ये स्मर्तव्या' इति प्रोच्य तिरोदधे । चक्रायुधेन प्रज्ञप्त्या लङ्केशचेष्टितं ज्ञातम् । ततः सिद्धविद्यः कृतमङ्गलः स्वपुरे प्राविशत् । अन्येद्युर्विद्याधरयुगं व्यजिज्ञपत्—'प्रभो ! अयोध्यापतेरष्टौ कन्या अनन्यसदृशाः सन्ति । स्त्रीषु ताः सर्वोत्तमाः, पुंसु त्वं सर्वोत्तमः, अतः पाणिग्रहणं कर्तुमर्हसि' । इति निशम्य पुराऽपि दिग्यात्रार्थाऽर्थिकीश्चक्री प्रौढसेनयाऽयोध्यापुरीं प्रति प्राचलत् । तत्रोद्यानं प्रापत् । ततः पुरीं त्रासाकुलां पश्यन् तदीशस्य श्रीचन्द्रस्य इदमजिज्ञपत्—'प्रागेव कन्याष्टकयुतं दण्डं देहि' । तच्छ्रुत्वा सोऽभिमानवान् कन्याप्रदानं दूरेऽस्तु, परं दण्डमपि नाऽदात् । महासैन्यं च मेलयित्वा चक्रिणा समं युद्धाय निर्ययौ । महान् कलहो जातः । अथ वीरहीरश्चन्द्रखेचरश्चक्रिबलमभाङ्क्षीत्, तदा दुर्धरक्रोधेन चक्रिणा धनु-र्वर्म-शिरस्त्राणच्छेदाद्यैः स भृशं व्याकुलितः । ततश्चन्द्रखेचरः पूर्वाराद्धं नाकिनं सस्मार । प्राप्तं सुरं सोऽवादीत्—'खेचरेन्द्रं बद्ध्वा ममाऽर्पय' । सुरोऽवादीत्—'अस्य भाग्यान्नाऽहं समर्थः, परमन्यदुच्यताम्' । नृपोऽवक्—'तद् गुरोः पार्श्वे मां मुञ्च, तत्राऽहं प्रव्रजामि, येनाऽन्यपराभवम् इहाऽमुत्र च न पश्यामि' । ततः सुरः स्वशक्त्या चक्रिणोऽस्त्राणि स्तम्भयित्वा तमुत्पाट्य च तत्पुरोपवने गुरोः पार्श्वेऽमुचत् । प्रागपि क्ष्माभृद् गुरोर्गिरा च विशेषेण संविग्नस्तद्भवसिद्धिको धीरः प्राव्राजीत् । अथ स्खलितास्त्रश्चक्री तं नृपं पुरःस्थितं न दृष्ट्वा विस्मितस्तत्स्वरूपबुभुत्सया खेटान् प्राहैषीत् ।

१ दिग्यात्रां कर्तुमिच्छुश्चक्रायुधः । २ देवम् । ३ चक्रिणम् । ४ तत्स्वरूपस्य बोद्धुमिच्छया ।

तैर्ज्ञात्वा यथावत्स्वरूपोक्तौ विस्मितश्चक्री सैन्यद्वययुक् तत्र गत्वा गुरुं तं च राजर्षिमवन्दत। नृपस्य सत्त्वं वीक्ष्य भोगनिःस्पृहा मन्त्र्याद्याः पञ्च शतानि गुरुणा बोधिताः प्राव्रजन्। इदं वृत्तान्तं श्रुत्वा राज्ञोऽन्तःपुर्यः पञ्चशतसङ्ख्यास्तत्रागता गुरुणा प्रतिबोधिताः प्रवव्रजुः। चक्री राजर्षिं क्षमयित्वा तत्सुतं राज्ये न्यस्य तद्गिरा ताः कन्या उद्वाह्य निजपुरीमगात्। 'भूचरेषु श्रीचन्द्रः प्रबल आसीत्, तस्मिन् जितेऽन्ये सर्वे जिताः, अतः प्रबलाः खेटनृपा जेयाः' इति विमृश्याऽन्यदा शतकण्ठस्याऽपराधं स्मृत्वा लङ्कां प्रत्यचलत्। लङ्केशोऽपि चरैस्तमायान्तं मत्वा विद्यया स्वपुर्याः समन्ततः षष्ट्या योजनैर्वह्निदुर्गं व्यधात्। सेवकैर्दह्यमानैर्व्याघुट्य चक्रिणे विज्ञप्तम्, तदा चक्री ज्वालिनीविद्ययाऽग्निं व्यध्यापयत्, दुर्गं च मृत्तिकाभाण्डवद् वज्रमुद्गरेणाऽभाङ्क्षीत्। दुर्गं भङ्क्त्वा चक्रायुधं समायान्तं मत्वाऽतिदर्पवान् शतकण्ठो महासैन्येन सह सम्मुखं निर्ययौ। द्वयोः सैन्ययोर्विश्वभयङ्करो रणो जज्ञे। एवं घोररणे जाते लङ्कापतेर्बले भग्ने सति स निजं सैन्यं संधीरयन् स्वयमुत्तस्थे। अस्मिन् वीरे शरासारं विदधति सति भटानां मदा जम्बूफलानीव अञ्जसाऽगलन्। हस्तिराजो रम्भावनमिव लङ्कापतिर्द्विपत्सैन्यमभाङ्क्षीत्, तदा क्रोधदुर्धरश्चक्रायुधो युद्धे समुत्तस्थे। 'मया पुरा ध्यानस्थेन तव स्थाम दृष्टम्, वीर! अधुना द्वन्द्वयुद्धे पुनस्तत् प्रकटीकुरु' इत्यादिमर्मवेधीनि वचनानि जल्पतस्तस्य शतकण्ठेन सह घोरं रणमजायत। तयोः सैन्ये तद्बाणमण्डपच्छन्नाऽर्कातपे शर्मणा स्थिते आहवे तद्युद्धचित्रेक्षा विस्मृता। अथ लङ्कापतेश्चापं चक्रायुधः शरैरच्छिदत्। पुनर्नवं चापं लात्वा युयुधे, तमपि चक्री अच्छैत्सीत्। एवं चक्री शतकण्ठस्य सप्त चापा-

न् अच्छिनत्। अथ शतकण्ठः शरसन्धानाद्यसमर्थो विह्वलो जातस्तदा चक्रायुधे सहस्रशो विद्यासर्पानमुञ्चत्। चक्री तान् भीष्मान् गारुडविद्ययाऽनीनशत्। ततः शतकण्ठः क्रुधा आग्नेयादीनि विद्यास्त्राण्यमुञ्चत्, चक्री प्रतिपक्षविद्यायुधैस्तान्यपि प्रतिजघान। ततो बली लङ्कापतिर्लोहभारसहस्रात्ममुद्गरेण चक्रिणं मौलौ अताडयत्, सोऽपि मुद्गरो न तथा चक्रिणे प्राभवत्, किन्तु तत्कृतां मूर्च्छामप्रियां नारीमिव एष क्षणं मुक्त्वाऽमुञ्चत्। ततश्चक्रायुधः स्ववज्रमुद्गरेण लङ्कापतिं जघान, तद्व्यथया रुधिरं स्रवन् मूर्च्छयाऽपतत्। तथाभूतं लङ्कानाथं शक्रपराक्रमश्चक्री विद्यानिगडैर्वटपादपे दीनं पशुमिव बद्ध्वा, तत्र रात्रावारक्षकान् मुक्त्वा तस्य च सैन्यमाश्वास्य निःशङ्कं निद्रासुखमभजत्। अथ शतकण्ठो निदध्यौ–"अहो! जीवा अत्र परत्र च स्वकृतैरेव कर्मभिर्दुःखानि सहन्ते। चेत्तदा ध्यानस्थितं तं न पराभविष्यं तदा मम दुःखं नाऽभविष्यत्, अतोऽत्र दोषो ममैव। यथाऽत्र दुष्कृतं कर्म सद्यः फलितं तथैव हा! आरम्भादीन्यपि कर्माणि दुःखदायीनि भविष्यन्ति; अतो महारम्भात्मकं राज्यं त्यक्त्वा दीक्षामुपाददे"। इति ध्यात्वा स धीरः पञ्चमुष्टिं लोचं चकार। ततो भावयतस्तस्य बन्धान् शासनदेवता छित्त्वा वेषमर्पयामास। स तत्रैव कायोत्सर्गेण तस्थौ। अथ चक्री आरक्षकेभ्यस्तद्वृत्तं श्रुत्वा विस्मितः सन् प्रातः सेनाढ्ययुतस्तत्र गत्वा मुनिं ननाम। तं स्तुत्वा क्षमयित्वा च लङ्कां प्रविश्य प्रपन्नाऽऽज्ञं शतकण्ठसुतं राज्ये न्यवीविशत्। तद्दत्ता गुणवत्यः शतं कन्याः परिणिन्ये। ततस्तद्द्वीपनायकान् अन्यानपि लीलयाऽजयत्। सर्ववधूलीत्वा चक्रभृद् वैताढ्ये ययौ। वैताढ्यस्य दक्षिणश्रेणौ महासरसि तस्थिवान्। तत्र क्रीडानिमित्तं खेचरेन्द्राणां सहस्रं

कनीरागताः, ताः सुरूपाः स्वानुरक्ताश्च निबुध्य स उपजहार । ततः कन्याकञ्चुकैस्तद्वृत्ते तत्पितॄणां निवेदिते सति तत्रैत्य युध्यमानांस्तान् चक्री काकनाशमनाशयत् । तस्मिन्नवसरे तत्र दक्षिणश्रेणौ रथनूपुरनगरे निखिलखेचराणां सेव्योऽधिपो वह्निवेगोऽस्ति । तस्मै स्वामिने तैर्विद्याधरैः स्वकनीवृत्ते निवेदिते वह्निवेगः क्रोधाद् दूतमुखेन चक्रिणोऽज्ञापयत्—'त्वया कनीर्बलात्कारेण हृताः, अतो मुञ्च, अथवा रणाय सज्जो भव' । चक्री क्षुधितस्य भोजनमिव रणनिमन्त्रणं मेने । ततश्चक्री रथनूपुरे नगरेऽगात्, वह्निवेगोऽपि बलोन्मदः सम्मुखं सद्य आगात् । तयोरनीकयोस्तद्दिने दारुणः सङ्ग्रामो जातः, तदा वह्निवेग इभपत्त्यादीन् बहून् मृतान्दृष्ट्वा कृपालुश्चक्रिणमूचे—'आवामार्हतौ, तत् सैन्ययोर्बहुसत्त्वघातनैरलम्, आवां द्वन्द्वयुद्धेनैव युध्यावहे' । तच्चक्रभृत् प्रपेदे । ततस्तौ वीरौ शराशरि खड्गाखड्गि दण्डादण्डि गदागदि च चिरमयुध्येताम्, परं समविक्रमः कश्चित् केनाऽपि नाऽजीयत, यत उभयोः सिंहयोर्युद्धे कः केन जीयते ? । ततश्चक्री खिन्नः सन् चक्रमस्मार्षीत् । तद् ज्वलत्तत्रागमत् । तेन वह्निवेगं हृदये जघान । ततोऽयं वातेन जरद्वृक्ष इव मूर्च्छितोऽपतत्, तदा चक्री साधर्मिकधिया तम् अवीजयत् । ततो लब्धसंज्ञो बलवान् वह्निवेगः समुत्तस्थौ, यतो वज्रकायः शुद्धश्राद्ध इव चिरं मूर्च्छां न भजेत् । वह्निवेगश्चक्रिणः पराक्रमं दयां च वीक्ष्य दध्यौ—"यदि पित्रा समं प्राव्रजिष्यं तदा इमामभिभूतिं रणे नाऽद्रक्ष्यम्, अथवा चक्राहतो यद्यमरिष्यं ततो ध्रुवं दुर्गतौ प्रायास्यम्, यतः पुण्यहीनानां सद्गतिः कथं स्यात् ? । अनया चेष्टयाऽयं दयालुर्जैनवत्सलः, ततः प्रणामाद्यैरेनं संतोष्याऽवसरोचितं कुर्वे" । इति ध्यात्वा तं स्माह—'हे राजन् !

तवाऽद्भुता कृपा, या मयि कृतापराधेऽपि न ह्रासं नीता, ततो मम राज्यं गृहाण, बन्धुना सार्धं नाऽहं युध्ये, अहं तु व्रतमेव चरिष्यामि, बलिनं त्वामहं नमामि'। चक्री साह–'तव राज्येन नास्ति मे कार्यं, प्रणाममेवैकमिच्छामि, स तु त्वया कृतः, अतो भुङ्क्ष्व स्वराज्यम्'। इत्युक्ते सति वह्निवेगश्चक्रिणं स्वपुरान्तर्नीत्वा स्वा-ऽन्यविद्याधरकुलोद्भूताः कन्याः पञ्चशतान्यदात्, पूर्वं च याः कन्या बलाद् हृतास्तास्तत्पितरो मुदा ददुः। दक्षिणश्रेणिगाः सर्वे खेटाश्चक्रिणं प्रणेमुः, वशवर्तिनश्च प्रौढानि गजा-ऽश्वादिप्राभृतानि चक्रुः, रूप-यौवनशालिनीश्च सहस्राणि कन्या अदुः। दक्षश्चक्री मुख्यान्यष्टौ नगराणि वह्निवेगाय ददौ, शेषाणि शेषविद्याधरेभ्यो दत्तानि। अथोत्तरश्रेण्यां गत्वा तत्रस्थान् विद्याधरान् लीलयाऽजयत्, तैर्दत्ताः सहस्रं कन्नीरुपयेमे। अथ वह्निवेगः संविग्नो भवाद्विरतो गुर्वागमं यावद् गृहे तिष्ठति। अन्येद्युः स्वपितरं चतुर्ज्ञानधरं महावेगं गुरुमुद्याने आगतं श्रुत्वा जहर्ष, मुदा तत्र गत्वा नत्वा च पुंसां स्त्रीणां च सप्तशत्या संयुतः प्राव्रजत्। क्रमेण श्रीचन्द्रः श्रीवह्निवेगः श्रीसहस्रायुधश्च त्रयोऽपि राजर्षयः शिवं प्रापुः, लङ्केशोऽपि संयमात् पञ्चभिर्भवैः शिवं यातः। एवं हे बुधाः! चारित्रधर्मस्य महिमा बुध्यताम्।

॥ इति श्रीतपागच्छाधिराज–श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे सहस्रायुधादिराजर्षिचतुष्टयचरित्रेण चारित्रधर्ममहिमवर्णननामा श्राद्धधर्मकलितश्रीचक्रायुधचरित्रवर्णननामा च तृतीयः सर्गः॥

# अथ चतुर्थः सर्गः ।

श्रीशत्रुञ्जयभूषणं जिनवरं श्रीनाभिभूपात्मजं,
सेन्द्रैर्नाकिवरैर्नरेन्द्रनिकरैर्भक्त्या प्रणुन्नैर्नतम् ।
ज्ञानं यस्य त्रिकालवस्तुविषयं लोकेतराभासकं,
सर्वेषां हितदं कृपारसमयं वन्दे तमादीश्वरम् ॥ १ ॥

अथाऽत्रैव भरते सर्वपुराणां विजयात् सान्वयाह्वयं विजयपुरं पुरमस्ति । विधिः स्वर्गार्थिनां दानादिपुण्यादरवृद्धये स्वर्गस्य वर्णिकामिव यत्पुरमदीदृशत् । यत्र धर्मान् धर्मफलानि च प्रत्यक्षं दृष्ट्वा तत्त्वश्रद्धानतः कोऽपि नास्तिको नास्ति । तत्र जयश्रिया राजमानो जयो नाम राजाऽभवत् । अस्य विजयो नाम भ्राता युवराजोऽभवत् । सूर्या-चन्द्रमसोरिव तयोः सन्न्यायरुचिभिः पृथ्वीं द्योतयतोः क्वाऽप्यनीतितमो नैवाऽऽसीत् । यौ सुहृदां द्विषतां च तुष्टौ रुष्टौ च सविवेकौ क्षितिमेव ददतुः । तयोः क्रमेण हरदग्धं स्मरं त्यक्त्वा सपत्न्यसुखवारणार्थं किल पृथक् पृथगाश्रिते रति-प्रीती इव विमला-कमलाभिधे पत्न्यौ बभूवतुः । अन्यदा सुखसुप्ता विमला स्वप्नमैक्षत । तद्यथा—'सिंहयुतः शूकरः स्वान्तिकमागमत्, शूकर उत्सङ्गम्

१ इन्द्रसहितैर्देववरैः । भूपसमूहैः । ३ प्रेरितैः । ४ सुहृदां पृथ्वीम्, शत्रूणां च क्षयम् । ५ शङ्करेण भस्मीकृतम् ।

अभ्यास्त, हरिस्त्वन्यत्र काप्यगात्’। प्रबुद्धा तं स्वप्नं भर्तुर्न्यवेदयत्। राजाऽप्यवादीत्–‘तव सुतो गुणैः शूकराभो भावी, पुनरन्यस्याः कस्याश्चित् सिंहोपमो भावी, तयोर्मिथः प्रीतिर्भविष्यति’। इत्याकर्ण्य सा हर्ष-खेदभाग् अभूत्। अथ वसुसारस्य जीवो धूमकेतुसुरो ज्योतिष्कायुः प्रपूर्याऽस्याः कुक्षौ रात्रौ अवातरत्। मातुर्गर्भानुभावतो हिंसा-द्रोहादिभावेषु क्रौर्या-ऽविनय-नैष्ठुर्यादयो दोषाः प्रोद्भूताः। समये तया पुत्रः प्रसूतः। दास्या वर्द्धापितो नृपस्तस्यै महादानं दत्त्वा पुत्रजन्मोत्सवं व्यधात्। स्वप्ने मातुर्हरिदर्शनमात्रेण सूनोः सिंहगुणाशया नृपः ‘सिंहसार’ इति नाम व्यधात्। कमलाऽप्यन्यदा रात्रौ शयिता सुखसङ्गता ‘सिंह-कोलौ उपेतौ, तत्र कोलः क्वाऽप्यन्यतोऽगमत्, सौम्यदृष्टिर्बलवान् सिंहस्तु उत्सङ्गम् अध्यास्त’ इत्येवं स्वप्नं वीक्ष्य प्रबुद्धा सती भर्त्रे न्यवेदयत्। युवराजोऽवक्–‘तव सिंहसमः पुत्रो भावी, अन्यस्याश्च कस्याश्चित् कोलसदृशो भविता, अथवाऽभूत्’। इति स्वप्नार्थं श्रुत्वाऽतितरां मुमुदे। अथ मतिसागरमन्त्रीशजीवः सप्तदशसागरायुर्देवसुखैः प्रपूर्य शुक्राच्च्युतस्तस्यामेव तमस्विन्यामस्याः कुक्षौ अवातरत्। गर्भे-वर्धमाने तस्याः शुभा धर्म-शौर्यानुगा दोहदा अभूवन्, ते च सर्वेऽपि युवराजेन पूरिताः। समये च सा शुभे लग्ने पूर्वा दिग् भास्करमिव भासुरं पुत्रं प्रासूत। अस्मिन्नवसरे शङ्खपुराधीशो मानवीरो भूपतिरस्ति, तस्य द्विषतो जयाय यान्तं जयभूपतिं युवराजो विनयाद् विनिवार्य चमूवृतो गत्वा युद्धेन तं बद्ध्वा भूपान्तिके आनैषीत्, तावद् दास्या भूप-युवराजौ कमलापुत्रजन्मना वर्धापितौ। तदैवाऽन्यया दास्या इति

१ सिंहः। २ कोलः शूकरः। ३ रात्रौ। ४ शत्रोः। ५ सैन्यपरिवृत्तः।

नृपौ वर्द्धापितौ—'साम्प्रतं जातस्य सूनोर्नाभिनालस्य निक्षेपार्थं खन्यमानायां धरित्र्यां निधिकुम्भः प्रादुरभवत्'। तच्छ्रुत्वा हृष्टौ तौ निधिकुम्भं खनरैरानीनयताम्। तं कुम्भं रत्नपूर्णं पितृनामाङ्कितं च वीक्ष्य नृपावूचतुः—'अहो! गतोऽपि निधिः पुत्रपुण्येन लब्धः'। एवं पुत्रजन्म-रिपुजय-श्रीप्राप्तितोऽत्यानन्दमेदुरौ तौ दासीभ्यां मुदा यथेष्टं पारितोषिकं प्रददाते। ततस्तौ समन्ताद् आगच्छद्वर्धापनकबन्धुरां बन्दिप्रोक्तजयजयारावां गीत-नाट्यमनोहरां दीयमानमहादानाऽऽनन्द्यमानाखिलप्रजां युगपद्वाद्यमानाऽनेकवादित्रनादध्वनद्दिशं पुत्रजन्ममहोत्सवपरम्परां व्यधत्ताम्। तौ दत्तदण्डं प्रपन्नाज्ञं च मानवीरनृपं चारकस्थैरपरैः साकं मुमुचतुः। नृपौ दान-मानादिभिः स्वजनान् संतोष्य भाग्य-सौभाग्यशालिनोऽस्य सर्वलक्षणोपेतस्य सूनोः 'श्रीजयानन्द' इति नाम चक्रतुः। तौ भूप-युवराजतनूद्भवौ धात्रीभिः पाल्यमानौ पित्रोर्मनोरथैः सहाऽवर्धेताम्। क्रमात् पांशुभिश्चित्रैः क्रीडनकैश्च क्रीडन्तौ कलाग्रहणोचितौ सहचरौ जातौ। ततो भूपस्तौ धीमते कलाचार्याय आर्पयत्। तौ कुमारौ यथाभाग्यं कलाविदौ जातौ। नृपः कलाचार्यं धनादिभिः सच्चकार। अथ प्राप्तयौवनौ क्रीडासरो-वापी-वनादिषु यथोचितं मित्रैः समं चिक्रीडतुः। एवं कुलादिसामग्रीसमत्वेऽपि तयोः प्रकृतेर्भेदोऽभूत्, यतः सा हि कर्मभेदेन भिद्यते। तथाहि—आद्यः क्रूरतरो, दुर्नयादिभिर्लोकोद्वेजको, निर्धर्मा, दुर्भगः, किञ्चिदविनीतः, अप्रियंवदश्च। युवराजसुतस्तु

१ जयनृप—विजययुवराजौ।

चन्द्रवाह्वादयो वीरास्तथाऽयुध्यन्त यथा खेटचक्रिणः पृथुरपि पृतनोऽभज्यत । वीराणामाहवेऽश्रान्तिं वीक्ष्य सत्रस्मादिव चण्डांशुः पश्चिमाम्भोधौ स्नात्वा किल श्रान्तिमच्छिदत् । अथ कर्मलब्धजया-ऽजया वीराः सेनान्योराज्ञया रणकर्म निमुच्य स्वं स्वं पदमुपागमन् । खेटचक्रिणश्चमूर्वीरसकबन्धनाद् मन्दायितोत्साहा सङ्ग्रामभूमेः किञ्चिदपासार्पीत् । गर्जद्वीरगणाऽऽतोद्यं मङ्गलपाठकैश्च स्तुतं राज्ञो बलं कैरविणीवनमिवाऽमोदत । भूप औषधीवारिणा सर्वान् भटान् पशूंश्च पूर्ववत् सज्जयामास, चक्र्यपि तथैव सज्जांश्चक्रे। औषधीपानीयमज्जितास्ते मदनाद्या भूपाः पवनवेगेन लोहादिपञ्जरेषु क्षिप्ताः ।

इति श्रीजयानन्दकेवलिचरित्रे युद्धाधिकारे द्वितीयदिने भोगरत्यादिसुहृदष्टकादिजयनामा नाणैरेव युद्धाधिकारः २।

जयश्रियो योग्यो भूपः श्रीजयानन्दः, परं युद्धं विना जयश्रीर्न स्यात्, अतो युद्धावकाशाय सूर्यः पूर्वाचलमारोहत् । केचिद्रुष्टाः पराभववशात्, केचिद् अर्धजयात्, केचिच्च रणोत्सुका मङ्गलातोद्यैरबुध्यन्त । पूर्ववद् द्वयोरपि पताकिन्योर्वीराः सेनान्योराज्ञया सज्जतां कृत्वा सङ्ग्रामार्थमुपतस्थिरे । यतः—

"मद्यैः शौण्डो धनैर्भूपाः, परान्नैरिव वाडवाः। न तृप्यन्ति महावीरा, रणैर्भुजबलोन्मदाः" ॥ १ ॥

भटाः प्रतिभटान् ध्वजाद्यैरुपलक्ष्योपलक्ष्य दानवीरा भोक्तुम् अर्थिन इव योद्धुं न्यमन्त्रयन्त । द्वयोरपि सैन्ययोः सुभटाः स्वकुलोत्कर्षं वदन्तः, अन्यकुलानि निन्दन्तः, मिथो मर्म-नर्मवचनैराक्षिपन्तः, कांस्यताला भुजास्फोटं कुर्वाणाः क्रुधाऽधिकं युयुधिरे । वीरमुक्ता बाणा व्योम्नि मिथः प्रास्फलन्तो युध्यमानाः

१ सेना । २ युद्धभूमम । ३ मदिरामत्ताः । ४ ब्राह्मणाः । ५ याचकान् ।

सपक्षाः पन्नगा इव विरेजिरे । वीरमुक्तानि चक्राणि नभसि बहुरूपा भानव इव भ्रेमुः । मिथो योद्धृभिर्योद्धुं प्रेरिता वाहनगजाः स्वस्वामिशौर्यसङ्क्रान्त्याऽधिकपराक्रमा डुढौकिरे । मिथ आस्फलन्तो दन्तघातोद्यद्दहनार्चिषो गर्जन्तो गजा अभ्रे तडित्वन्तो मेघा इव भ्रेजिरे । दृढं युध्यमानाः, पादाघातैः क्षुण्णक्ष्मातला, मदाऽम्भोभिः सनिर्झरा, बद्धखड्गाद्यैर्दन्तैर्गृहीतमुद्गरादिभिश्च दन्तैः परस्परं दृढं घ्नन्तो, गर्जद्वदनकन्दरा, उत्पतन्तः पतन्तश्च सपक्षाः पर्वता इव गजाः कस्याऽद्भुताय भयाय च न बभूवुः? । सिंहनादत्रसद्गजसमूहाः पुच्छाच्छोटै रसद्रसाः सिंहा मिथो दंष्ट्रा-नखैर्घ्नन्तोऽयुध्यन्त । स्फारफूत्कारदुर्धराः स्फटाऽऽच्छोटप्रस्फुटन्मणिसन्धयः पन्नगा युद्धं वितेनुः । घोरघुर्घुरदुर्धरास्तीक्ष्णदंष्ट्राभिः आघ्नाना उच्छलन्तः स्फालयन्तश्च कोलाः कलिं चक्रिरे । एवं शरभ-शार्दूल-महिषप्रमुखाण्यपि खेचराणां वाहनानि परस्परं पशवोऽपि अनादिभवाऽभ्यासाद् वीरसंसर्गतश्च उद्यत्क्रोधा-ऽभिमानाद्यैः स्वामिप्रेरणया च प्राणानपि तृणीयन्तः शत्रुक्षयं यावद् अदत्तपृष्ठा वीरा इव चिरं कलहं चक्रुः । इत्थं पशूनामपि शौर्यं दृष्ट्वा अधिकोत्साहगर्विता वीराः सकलौजसा अञ्जसा सङ्ग्रामयामासुः । अथ कोपाटोपाद् युध्यमानाः खेचरचक्रिणो भटा भूपस्य दैन्यं दधत् कियत्सैन्यमभाङ्क्षुः । तदा अभिनवोर्जितदुर्धरा रणविख्यातकीर्तयो विश्ववीराणां किल शक्तीराच्छिद्य ताभिर्निर्मिताः पञ्चशतीसङ्ख्या मायास्त्रीतनवो वीराङ्गद-महाबाहु-सुघोषप्रमुखा भटा मत्तकरिस्थिताः सैन्यं नश्यत् पश्यन्तः सङ्ग्रामाय युयुत्सुं स्त्रीरूपं भूपं स्वामिभक्तितो निवार्य रिपून् आह्वयन्त । ते हि शिलीमुखान् गृह्णन्तो मुञ्चन्तश्च नाऽलक्ष्यन्त, केवलं तैर्हताः पतिता द्विप एव ऐक्ष्यन्त । तैः सायकैर्भटा भूमौ

दीर्घनिद्रया शायिताः, अन्ये तु मृतिभीत्या तदन्तश्छद्मनिद्रया शयिताः। ते हि शस्त्रै रथिनोऽरथांश्चक्रुः, तथैव रथान् अरथिनश्चक्रुः, सादिनोऽतुरगान्, तुरगान् असादिनः, निषादिनोऽगजान्, गजान् अनिषादिनः, योधनान् अविमानान्, विमानानि चाऽयोधनानि चक्रुः। इत्यादिप्रकारेण खेचरचक्रिणो बलम् अबलं जातम्। एवं बले भग्ने नष्टुं च लग्ने सति गजवाहनो गजसिंहः सङ्गराय दधावे, अन्येऽपि गजानन्द-गजदेवादयः पञ्चशतानि भटाः सर्वे गजारूढा आजौ दधाविरे। युध्यमानैर्मायास्त्रीतनुभिर्वीराङ्गदादिभिर्वीरैस्ते सर्वे आह्वानपूर्वकं रुरुधिरे। जगसिंहादयोऽवोचन्–'रे रण्डाः! रणं नाऽर्हथ, अतो गत्वा अम्बुघटान् वहत, सूत्रं च कर्तयत, यद् वयम् अरीणामपि नारीणां हत्यां न कुर्महे'। तदा स्मितेन सुभगानना मायानार्यः समाचख्युः–"वयं हि वैरिनारी रण्डयामस्ततो रण्डाः स्मृताः, तत् सपदि युध्यध्वं यत् सान्वया भवामहे। युधि युष्मासु हतेषु जलाञ्जलिं दातुं जलं पूर्वमेव सज्जीकृतमस्ति, तद् अम्बुघटान् न वहामः। बहूनामपि वैरिणां बन्धाय अस्माकं बह्वपि सूत्रं प्रगुणं वर्तते, ततः किमर्थं कर्तयामः?। नूनम् अधुना रणेऽस्मत्तो बन्धने पलायने वा जाते स्वकीर्तिस्त्रीवधाद् युष्माकं स्त्रीहत्या भविष्यति"। एवं मर्माविद्भिः वचोबाणैर्व्यथितास्ते भटाः शरासारान् मुक्तवन्तः। मायास्त्रियस्तान् बाणान् वातोच्चयैरिव बाणोत्करैरहरन्, यतोऽभाग्यानां विघ्नैर्हता मनोरथाः कुतः सिध्यन्ति?। स्त्रीभटाः सुप्रयुक्तैर्महायुधैर्द्विषां दर्पान् भिषजो भेषजै रोगिणो रोगानिव निजघ्नुः। तेषां ससैन्यानां सहस्रसङ्ख्यानां महान् रणस्तदा कृतान्त-

१ दीर्घनिद्रा–मृत्यु'। २ द्वितीयाबहुवचनम्। ३ परस्मैपदिनोऽपि भूधातोः कचिदात्मनेपदं भवति।

स्यैव तोषाय पोषाय चाऽभवत्। वीराङ्गदो महान् वीरः स्त्रीरूपोऽपि तत्सङ्ग्रामेऽनेकशूराणामन्तकृत् कृतान्तोपमतां दधौ। गजसिंहोऽपि सायकैश्चिरं युद्ध्वा वीराङ्गदं व्याकुलं कृतवान्। ततो वीराङ्गदो नगविद्यया शैलं मुमुचे, गजसिंहोऽशनिविद्यया तं चूर्णीचकार। ततो गजसिंहो विद्यया वीराङ्गदे सिंहममुचत्, स क्रोधोद्धुरः सिंहो यावद् वीराङ्गदस्य यानगजम् अत्ति तावद् वीराङ्गदो द्रुतं शरभविद्यामस्मार्षीत्, तया रिपून् निघ्नन् शरभः प्रादुर्भूतः। तदा गजसिंहस्तं शरभं हन्तुं निरन्तरं वाणान् असि-गदादीनि चाऽऽयुधानि सहस्रशो मुमुचे, परं शरभो गर्जन् व्योम्न्युत्पतन् सर्वायुधोच्चयं भित्त्वा नखैराहत्य गजसिंहम् अपीपतत्। तं पतितं वीराङ्गदो नागपाशैर्बद्ध्वा गजमिवाऽग्रहीत्। अथ स्त्रीरूपो महाबाहुश्चिरं शराशरि कृत्वा गजानन्दाय ज्वलनवर्षिणीं शक्तिं मुमुचे, गजानन्दोऽपि प्रतिशक्त्या सुधीरनित्यभावनया भवतृष्णामिव तां लीलया जघान। ततो महाबाहुर्वैरिणे मोहनास्त्रं मुमुचे, तेनाऽसौ प्राप्तमोहं तं बद्ध्वा जग्राह। एवं सुघोषाद्या अपि वीराः स्वान् स्वान् प्रतियोधनान् लोह-दिव्यास्त्रभीषणैर्युद्धैश्चिरं खेदयित्वा नानास्त्रजर्जरान् श्रान्तांस्तान् नागपाशादिभिर्युगपद् निबध्य दैवान्निजे शिबिरे निन्यिरे। एवं पञ्च शतानि निजान् भटान् बद्ध्वा नीतान् वीक्ष्य, समस्तं च स्वबलं त्रस्तं व्यस्तं च प्रपश्यन् खेटचक्री क्रोध-माना-ऽभिभूतिभिर्युगपद् व्यथितः सन् यावद् युद्धभूमिमायाति तावत्तस्य तृतीयः पुत्रः समरे सतृष्णो मणिमाली कृताञ्जलिर्भक्त्या व्यजिज्ञपत्–'हे तात! पराक्रमाऽस्तविडौजसस्तव कीटिकाप्रायासु रण्डासु कोऽयं

१ भक्षयति। २ पराक्रमेण परास्तो विडौजा–इन्द्रो येन, तस्य।

सङ्ग्रामोपक्रमः ?। ता हि मया स्त्रीत्वेनोपेक्षिता उच्छृङ्खलतामगुः, परमधुना सापराधास्ता निग्रहीष्ये, तद्ग्रहाच्च भटान् ग्रहीष्ये'। इत्युक्त्वा तातं निषिध्य गजकुम्भस्थलस्थितो मणिमाली द्विपच्छ्रेणिं दलन् अरिबलेऽविशत्। महिषे सरोवरं गाहमाने सति रवैर्द्दर्दुरैरिव तस्मिन् बलं गाहमाने सति योधैर्मार्गा मुमुचिरे। मणिमाल्यूचे–'रे रण्डाः! कपटश्रियां करण्डाः! आयात, क्षुरप्रैर्युष्मान् अनक्र–तुण्डा मुण्डमुण्डाः करोमि'। इति साधिक्षेपं श्रुत्वा ते स्त्रीभटा दधाविरे, यतो वीरा हर्यश्च धिक्कारं न सहन्ते। तेषु वीराङ्गदो वीरो नगेऽब्दो धाराश्रेणीरिव तस्मिन् शरश्रेणीर्वर्षन् मणिमालिनं रुरोध। योषितो रूपेण युध्यमानं वीरं वीराङ्गदं मणिमाल्यप्युदग्रौजा बाणश्रेणिभिः प्रास्तृणोत्। अथाऽस्य मणिमालिन एकोनानि पञ्च शतानि किरणमाल्याद्या भ्रातरो युद्धाय प्रधाविरे। तेऽपि वीराङ्गदाद् अन्यैः स्त्रीरूपैर्बलशालिभिर्बाणौघवर्षिभिर्द्राग् आहवाय आहूयन्त। तेषां सङ्ख्ये न दिशो नाऽपि विदिशो नाऽऽकाशं न च भूरप्यलक्ष्यत, किन्तु सर्वतः शरा एवाऽलक्ष्यन्त। अथ मणिमालिना ज्वालाकुला शक्तिर्मुमुचे, तां वीरो वीराङ्गदः प्रतिशक्त्या रयाद् अभैत्सीत्। ततो वीराङ्गदो विद्यया वैरिप्राणाऽपहारिणो घोरघुर्घुरदुर्धरान् शूकरानमुञ्चत्, इमान् आपततो दृष्ट्वा महाभटो मणिमाली विद्यया सिंहमसुचत्, स सहसा तान् जघान। ततस्तं सिंहमभ्यापतन्तं वीक्ष्य वीराङ्गदो द्रुतं प्रागिव शरभममुञ्चत्, स सिंहमभक्षयत्। ततस्तं शरभं रभसाऽऽयान्तं विलोक्य मणिमाली विद्यया मुक्तेन गर्जता मेघेन मृतिम् आपिपत्। अथ मणिमाली शरैर्वीराङ्गदस्य गजम्

१ शब्दयद्भिर्मण्डूकैः। २ नासिका-मुखरहिताः। ३ सिंहाः। ४ युद्धे।

अपीपतत्, तदा पवनवेगस्तस्य वीराङ्गदस्य सिंहयुक्तं रथमार्पयत्। वीराङ्गदो मुदा तमास्थाय शरपङ्क्तिभिर्मणिमालिनो मत्तं मतङ्गजम् अपीपतत् । अथ क्रुद्धो मणिमाली विद्याकृतं नव्यं रथमास्थाय बाणैर्वीराङ्गदं व्याकुलीचक्रे, वीराङ्गदस्य क्रमात् सप्त धनूंषि अच्छिदत्, तत एष शरान् ग्रहीतुं मोक्तुं च न शशाक । अथ मणिमाली प्रस्वापनाऽस्त्रेण वीराङ्गदं परांश्च खेभटान् निखिलानपि असूषुपत् । ततो मणिमाली निद्राणं वीराङ्गदं मूढमङ्गिनम् आरम्भः कर्मभिरिव नागपाशैरबध्नात्, एवमेव चिरयुद्धश्रमाकुलं निद्राणं महाबाहुं किरणमाली अबध्नात्, तथैव चक्रिणोऽन्येऽपि सूनवः प्रतियोधनान् निद्राणान् खेभटान् पृथक् पृथग् बबन्धुः । अथ मणिमाली बद्धांस्तान् विद्याकृतमहापटे धीवरो झषान् जाले इव यावद् गृह्णाति तावत् पवनवेगाद्याः सङ्ग्रामाय तम् आह्वासत। सोऽपि खेभटान् मुक्त्वा पुनः सङ्ग्रामयितुं डुढौके । यतः—

"वीराणामाहवाह्वानं, भुक्त्याह्वानं द्विजन्मनाम् । सर्वेषामेव कार्याणाम्, अन्तर्धानं हि गीयते" ॥ १ ॥

परेऽपि भोगरत्यादयो बहवः खेटवीरा विचित्रास्त्रैर्द्विपारिं द्विपा इव तम् अयूयुधन् । स चैकोऽपि वीरः शस्त्रैर्बहून् अमर्दांश्चक्रे, यथैकोऽपि सूर्यो ग्रहान् निस्त्विषः सृजति । अथ युध्यमानेन मणिमालिना भ्रूसंज्ञया प्रेरितो भ्राता किरणमाली यावत्तान् बद्धानादातुमेति तावच्चन्द्रगतिना ज्ञापनात् श्रीजयो भूभुग् आपतत्, स्तम्भिन्या च विद्यया किरणमालिनमस्तम्भयत् । ततो निजान् भटान् गारुडविद्यया नष्टनागबन्धनांश्चक्रे, प्रबोधिन्या च विद्यया प्राबूबुधत् । ततः सज्जास्ते खेभटाः पटं भित्त्वा छिन्नजालतश्चटका

इव भूपसमीपमाययुः । भूपतिस्तान् याना-ऽश्वादिप्रदानैः सच्चक्रे, कारुण्याच्च किरणमालिनं गतस्तम्भं[1] चक्रे । अथ किरणमाली स्वस्य स्तम्भात् परेषां च बन्धमोक्षात् क्रुद्धोऽनात्मज्ञोऽसिमुद्यम्य नृपं हन्तुं धावितः । वीरमानी सोऽसिना यावद् भूपं प्रहरते तावद् नृपोऽसिमुद्दाल्य तं मुष्ट्या मृदु अताडयत्, कृपालुना सोऽहतोऽपि मूर्च्छितो भूमावपतत्, मृगारेर्मृद्वीमपि चपेटां किं मृगः सहते ?। तं चन्द्रगतिर्विद्याधर नृपादेशाच्च औषधीनीरेण सज्जितं गृहीत्वा पूर्ववद्धेष्वमीमिलत् । अथ नाम-प्रतापाभ्यां समं किरणमालिनं वद्धं मत्वाऽर्को[2] भयादिव पश्चिमाब्धौ निलिल्ये । भटानां सूनोश्च बन्धात् चमूयुतः खेटचक्री सूर्याक्रान्तकरश्चन्द्र इव निच्छायतां ययौ । बहूनां वैरिणां बन्धाद् बन्धार्हाणामर्थानां काव्ये निबन्धनात् कविरिव भूपसैन्यममोदत ।

इति श्रीजयानन्दराजर्षिचरित्रे खेचरचक्रि-श्रीजयानन्दनृपयुद्धाधिकारे तृतीयदिनयुद्धविस्तरः ३ ।

अथ भटैर्द्वि-त्रान् प्रहरान् निद्राऽभिसारिकाः संभुज्य सूर्ये उद्गमोन्मुखे सति विसृष्टा द्राक् पलायन्त । म्रियमाणैर्भटैः स्वपुत्रं कृतान्तं तोषयितुं किल कृतान्तजनको युद्धारम्भवारणमुज्जहे । द्वयोरपि वरूथिन्योः भटोच्चय उद्यद्भिः करैर्दिवाकर इव रणोत्साहैरदीपिष्ट । अथ समग्रसामग्र्या स्फुरितोग्रतेजसी दृढौजसी ते द्वे अनीके सङ्ग्रामाय डुढौकाते । फलसंहतीर्[3] दधद्भ्यः सपत्रेभ्यः[4] शूरवर्गेभ्यः पत्रिणः[5] तरुभ्यश्च पतत्रिण[6] उड्डिड्यिरे । मिथो मुक्तैर्बाणैर्व्रणिता रुधिराऽरुणा वीराः प्रफुल्लान् किंशुकद्रुमान् तुलयाञ्चक्रुः । वीरमुक्ताः

१ स्तम्भरहितम् । २ सूर्यः । ३ फलकसमूहान्–ढालनिकरान् । ४ सवाहनेभ्यः । ५ बाणाः । ६ पक्षिणः ।

पत्रिणः खे मिथः संघट्टिताः पक्षोत्ताला व्याला[1] इव तुण्डातुण्डि अचरीकरुः । असिभिः केषाञ्चिद् युगपच्छिन्ना मौलय उच्छलिता व्योम्नि किं राहवो दन्तादन्ति चक्रुः ? । एवं घोरे रणे चक्रिसुभटैर्भूपसैनिकाः सरिदूर्मयो[2]ऽब्धेः कल्लोलैरिव अपासार्यन्त । तान् अपसरतो वीक्ष्य शत्रुकक्षदवानलः सिंहयुग्यरथो वज्रवेगः सङ्ग्राममास्थितः । स यतो यतो योद्धृन् अद्राक्षीत् ततस्ततो जघान, यतो यतो हि कक्षं[3]ततस्ततो दावाग्निर्दहेत् । अथ पवनवेगोऽपि रणपारयियासया विपक्षवाहिनीं क्षेप्तुं रथस्थित उपास्थित । चन्द्रगतिरपि यशःश्रियं स्पृहयालू रणे वीरान् प्रहरन् तैरस्खलद्गतिः प्रासरत् । भोगरत्यादयोऽपि भटा यशसि रतिं बिभ्रतो युयुधिरे । सर्वे ते निजचमूत्राणैर्वैरिप्राणैककौणपै[4]श्च बाणैश्चक्रिसैन्यं तत्तरुः । एते विचित्रास्त्रैर्युध्यमानाः कषायाः संयममिव शत्रूणां बलमुपदुद्रुवुः । ते हि बाणैः केषाञ्चिच्चापान्, केषाञ्चिद् धन्वशिञ्जिनीः[5], केषाञ्चिच्च मृत्युसंशयान् अच्छिन्दन् । ततश्चक्रिसैनिका भवभीरवो भविनो मिथ्यात्वात् सम्यक्त्वमिव युद्धादपसृत्य चक्रिणं शरणं ययुः । एवं पवनवेगाद्यैर्निजां सेनां भग्नां वीक्ष्य भृशमुज्जागरक्रोधश्चक्री खेटानां जगौ–'ये बाल्यादपि ममैव सेवका भूत्वा ममैव आज्ञैकजीविनस्तेऽपि मम सैन्यं भञ्जन्ति !, सुतादिकांश्च बध्नन्ति ! । तथापि हहा ! जीवन्नपि अहं एवं पराभूतिं सहे, चक्रित्वाऽभिमानं च वहामि, तद् मां धिगस्तु । ततो दुष्टाः पवनवेगाद्या मया द्रुतं वध्या एव' । इत्युक्त्वा युयुत्सया यावद् रथमारोहति तावत् तृणीयितद्विषच्चक्रः प्रथमः सुतश्चक्रवेगो भक्त्या तं खेटशक्रं व्यजिज्ञपत्–"तव शरैश्चकितः शेषः पाताल-

१ सर्पाः । २ नदीतरङ्गाः । ३ शुष्कतृणम् । ४ कौणपो-राक्षसः । ५ चापरज्जूः ।

मूलेऽविशत्, देवलोकश्रुतरतयो वह्निभक्षिणो देवाः किं विजेयाः ?, तव पुरः सङ्ग्रामे न कश्चिद् वीरः स्थाता, तत् तात ! कं जेयं जेतुं रणरणकं शस्त्रं धत्से ?। गाढापराधेऽपि भटमानिनो निःसारा नरास्तव न वध्याः । सम्प्रति कोऽपि हरिश्चक्री वा युद्धाद्यतो नास्ति, दैत्येन्द्रा रसातलबिले विविशुः, देवास्तु वने वनेऽटन्ति, तत् तव रणकौतुकाय कः पर्याप्तवीर्यो भविता ? । तात ! हीनयोद्धृषु भग्नेषु तव कः खेदः ?, किं द्रोणकाकाः अपि कृपणान् कीटान् न त्रासयन्ति ?। तत् तेषु किं संरभसे ?, अमून् रभसेन जयामि, लताश्छेत्तुं पर्शुरेव योग्यः, न तु नगभिद् वज्रम् । विश्वत्रयीजैत्रे त्वयि सति रणः सुलभो न, परम् अद्याऽवसरागतं स्वपुत्रस्यापि शौर्यं पश्य । किं धात्रीं प्रविभिद्य पन्नगपतिं त्रासयामि ?, किम् उडुगणान् पक्वाम्रवद् बाणैर्भूमौ पातयामि ?, किं पीताब्धिवद् जलधिं शक्त्या परिशोषयामि ?, किं वा गिरीश्चूर्णयामि ?। एवं स्वसुतं मां समग्रशक्तिकलितं स्वानुरूपं विद्धि" । इत्युक्त्वा हर्षितं तातं निषिध्य तातेनाऽनुमतः स चक्रवेगोऽनानुपूर्व्या द्विपां चक्रं निघ्नन् आक्रामत् । स महानदीपूर इव रणे प्रसरन् न पादातैर्न रथ्याभिर्नाऽश्वीयैर्न च हास्तिकैः स्खलितः । अथ पवनवेगस्तत्शात्रवं तमाह्वास्त, तदा तं पवनवेगं रणार्थिनमालोक्य चक्रवेगोऽवभमणीत्–'रे मूर्ख ! दर्पान्धं बुद्धिस्त्यजति, यद् दुर्धियाऽग्रेतनस्तिष्ठन्नसि अतः खलु मत्तो मुमूर्षसि । रे मूढ ! आबाल्याद् मम तातस्य सेवको भूत्वाऽपि यस्या नार्या बलाद् विपक्षत्वं भजन् प्रगल्भसे सा ध्रुवं मयाऽद्य हन्यमानं त्वां न त्रास्यते, यतः सिंहेन ग्रस्यमानं मृगं किं मृगी रक्षति ? । तया

१ काकोलाः–काकविशेषाः । २ पर्वतभेत्तृ । ३ नक्षत्रसमूहान् । ४ अगस्त्यवत् । ५ रक्षिष्यति ।

आत्मानं रक्षन्त्या मम रणे त्वम् अक्षिप्यथाः, किं व्याधैर्व्याघ्रमुखे प्राक् श्वा एव न क्षिप्यते ? । त्वां भटंमन्यां च तां लीलया निग्रहीष्यामि, उष्णांशुः[1] शीतांशुर्वा[2] राहोर्भक्ष्यमेव'। पवनवेगोऽपि जगौ—'त्वत्तातो मम प्रभुरेव, परं परिणीतां वधूमिच्छन् उन्मार्गगोऽहायि[3]। यतः—नासाहीनो देवो नाऽर्च्यः, नयहीनः प्रभुर्न सेव्यः, अन्यायिनां च श्रीर्नैव स्थात्री, इति अनुभविष्यस्येव। अस्य सैन्यस्य या प्रसिद्धा स्वामिनी सा भामिनी न, किन्तु युष्माकं क्षयकालाय दुर्दैवमेव। त्वत्तो मम मृत्युर्मत्तो वा त्वद्मृत्युस्तत्सर्वं युद्धेनैव भोत्स्यते[4], तद् वचोडिण्डिमडम्बरं विमुच्य युध्यस्व'। इति तद्वाचा वात्यया[5] दवानल इव प्रज्वलन् चक्रवेगो वैरिवनं दग्धुं शराऽर्चिषोऽमुचत्, पवनवेगोऽपि मेघ इव गर्जन् आयान्तीरेताः शरधोरणीधाराभिर्निरवापयत्। अथ द्वितीयश्चक्रिसुतो महावेगो वृद्धभ्रातरं युध्यमानं दृष्ट्वा युधेऽधावत, स च विरोधिध्वान्तसूर्येण चन्द्रगतिनाऽरोधि। तयोः शराशरि चिरमासीत्। भटाग्रणीस्तृतीयोऽपि चक्रिभूर्मणिमाली युधे धावन् द्राग् भोगरतिवीरेण अरुध्यत। धन्वधारिणं धावन्तं चण्डवेगं सेनान्यं वज्रवेगश्चमूपतिः स्थिरं योद्धुमुपास्थित। ततस्तेऽष्टावपि दिग्गजा इव महाहवे गर्वतो गर्जन्तो मरुत्पथं[6] घोरम् अजगर्जन्। तद्बाणास्तनुत्राणादिभेदिन उदडीयन्त, केषाञ्चित् पश्यतामपि प्राणा भयाद् निस्त्राणा जाताः। द्वयोः सैन्ययोरन्येऽपि सैनिकाः सैनिकैरन्योन्यं नामग्राहं महाहवे आह्वायिषत। एवं कोटिशोऽपि सुभटाः कटकयुग्मस्था मिथो रणाय सकार्मुका उपतस्थिरे। पवनवेगेन समं चक्रवेगस्य असमरोपतः सुदुर्धरः सम-

१ सूर्यः। २ चन्द्रः। ३ (मया)त्यक्तः। ४ ज्ञास्यते। ५ वायुसमूहेन। ६ आकाशम्।

रोऽभूत् । चक्रवेगो द्विपो धनुरभिदत्, सोऽपि तद् नवमादाय तपः कर्मवत् तस्य धनुरभिदत् । तौ परस्परं भिन्दिपालास्त्रेण दुर्धियौ बन्धू दुर्वचसा स्नेहमिव युगपत् स्यन्दनं चूर्णितवन्तौ । अथ चक्रवेगा गदामुद्यम्य पवनवेगं प्रति दधावे, सोऽपि गदयैव अश्मनाऽश्मानमिव ताम् अचुचूर्णत् । ततस्तौ योधौ मुद्गराभ्यां गजाविव अयुध्येताम्, परम् आस्फल्याऽऽस्फल्य तावेव अभज्येतां, न तु भटौ । ततश्चक्रवेगो व्योम्न्युत्प्लुत्य आशु एकां महीयसी शिलां पवनवेगाय मोहोऽङ्गिने तृष्णामिव मुमुचे, पवनवेगोऽपि मुद्गरेणैतामाहत्य सुधीः सम्यक्त्वलाभेन दीर्घां भवस्थितिमिव बभञ्ज । अथ द्वावपि भटौ विद्याऽर्पितरथौ आरुह्य वीरमदज्वरहरान् शरान् चिरं व्यमुञ्चताम् । ततश्चक्रवेगो जयश्रियो मूलं शूलममुचत्, पवनोऽपि काण्डैस्तत् कदलीकाण्डवद् अखण्डयत् । अथ चक्रवेगो यैस्तैः शस्त्रैस्तम् अजय्यं ज्ञात्वा द्विषां घस्मरां भीष्माम् अर्चिष्मतां शक्तिमस्मार्षीत्, तां च झटत्कारकरीं प्राणापहारिणीं प्रासां करे भ्रमयित्वा वेगात् पवनवेगायाऽमुचत् । ततः पवनवेगोऽन्येऽपि च वीरास्तां भेत्तुं शस्त्रसंहतीरमुञ्चन्, परं ता दुर्जने सत्क्रिया इव सफला न जाताः । तया शक्त्या हृदि आहतः पवनवेगः स्यन्दनेऽपतत्, सा च चटकार्दिनी श्येनीव मोक्तुः करेऽयासीत् । पवनवेगं मूर्च्छितं ज्ञात्वा चक्रवेगो नागपाशकैरबध्नात् । अथ महावेगश्चन्द्रगतिना साकं सायकैश्चिरं युद्धाऽपि नाऽजैषीत् । ततो महावेगोऽतिदारुणम् आग्नेयास्त्रममुञ्चत्, तत् चन्द्रगतिः वारुणास्त्रेण द्राग् निरवीवपत् । ततो महावेगो दर्शनादपि वैरिणां मौलिशूलकृत् त्रिशूलममुचत्, तदपि चन्द्रगतिः शरैरच्छिदत् । ततो महावेगो यन्त्रेण अयोगोलं व्यमुचत्, शस्त्रैरस्खलता तेन तु चन्द्रगतिर्हृदि

आहतो मूर्च्छया स्यन्दनेऽपतत्। ततस्तं महावेगो नागपाशैर्बबन्ध। मणिमाल्यपि अयो-विद्योद्भवैर्नानाविधैरायुधैश्चिरं युद्ध्वा भोगरतिं भूरि अशिश्रमत्, ततस्तं नागपाशैस्तथाऽबध्नाद् यथा श्वास-प्रश्वासादिविधावपि नाऽशांशक्[1]। अथ चण्डवेगः सेनानीर्वज्रवेगसेनापतिं सुचिरसङ्गरैः श्रान्तं चक्रवेग इवाऽबध्नात्। एवं भूपस्य चत्वारो भटाश्चक्रिणो भटैर्मोहस्य कषाया धर्मस्योपशमादिभिरिव बद्धाः। ततश्चक्रवेगादयो नियन्त्रितान् पवनवेगादीन् कक्षासु निक्षिप्य यावत् स्वस्वरथस्थिता यान्ति तावद् वीराङ्गदेनाऽऽशु तत्स्वरूपे निवेदिते श्रीजयो भूप आगत्य तान् शरासारै रुरोध। तद्बाणैर्व्यथिताश्चक्रवेगादयो बद्धांस्तान् मुक्त्वा योद्धुं ढुढौकिरे। तैः सह युध्यमानो नृप आकर्षिण्या विद्यया बद्धान् पवनवेगादीनाकृष्य स्वरथेऽनयत्, गारुडविद्यया च तेषां नागपाशान् त्रोटयित्वा वीराङ्गदेन औषध्याः पाथसा तानसज्जयत्। ते चत्वारोऽपि स्वरथान् आस्थाय पुनः सङ्ग्रामायाऽधावन्त, वीराणां हि पराभवो वायुरग्निवृद्धये इव तेजोवृद्धये स्यात्। अथ पवनवेगो भूपेन सह योधिनं चण्डवेगं वीक्ष्य पुत्रपराभववैरेण क्रुधा रदान्[3] पिंषन् आह्वास्त। सोऽपि सिंह इवागत्य क्रुधा पवनवेगमूचिवान्–'रे! प्राणसन्देहमपि प्राप्य अन्यौजसा किं प्रगल्भसे ?। प्रायः परौजसा लब्धमदश्चिरं न नन्दति, उष्णभानुकरोत्तप्ता हि वालुका कियत्तपति ?। अहं चक्रवेगवत् त्वां शिथिलं बद्ध्वा न मोक्ष्यामि, यदि मम शक्तिं न वेत्सि तद् निजम् अङ्गजं पृच्छ। तव कोऽपि मोचयिता सोऽपि चक्रवेगेण प्राणसंशयं नीतोऽस्ति, यस्य वीर्यं त्वयाऽप्यनुभूतम्। तत् त्वां स्वाम्येकत्वाद् विमुञ्चामि,

१ 'शक्'धातोर्यङ्लुबन्ताद् ह्यस्तन्याम् अन्यपुरुषैकवचनम्। २ जलेन। ३ दन्तान्।

याहि, अथवा स्वामिद्रोही म्रियस्व' । पवनवेगोऽपि प्राह—'सकृद् अन्यकृतं जयं बालजयं वा वदन् गर्वेण किं गर्जसि ? । सकृद्[1]मज्जयदर्पान्ध्यात् स्वयं शालभमार्गगं चक्रवेगं वैराज्जिघांसुरप्यहम् उपैक्षिषि । ततो बालाऽर्दनेन त्वां पापिनं हन्तुमागमम्, किं पञ्चास्यो[2] निजपुत्राऽर्दिनं किरिं सहते ? । अथवा उक्ति-प्रत्युक्तिभिः किम् ?, अमूर्हि शास्त्रवादे वरम्, समरे तु शस्त्रमेव, अतश्चेद् भटोऽसि तदा तत् कुरुष्व' । इत्युक्त्वा चण्डपराक्रमश्चण्डवेगः कुपितो बाणैः पवनवेगं तिरयामास, सोऽपि चण्डवेगं बाणैराच्छादयामास । एवं चिरं शराशरि कृत्वा पवनः श्रमातुरं चण्डवेगं हृदि त्रिशूलेन दृढं जघान, मूर्च्छया च पतितं तं द्रुतं नागपाशैर्बद्ध्वा वैरिनिर्यातनाहृष्टः पवनवेगो निजे शिबिरेऽनयत् । अथ श्रीजयानन्दश्चक्रवेगादिभिः समं युध्यमानस्तेषां बन्धूनां रथान् अभनक्, ततो व्योम्नि[5] उत्प्लुत्योत्प्लुत्य युध्यमानान् शरार्दितांस्तान् स्रवच्छोणितपङ्किले भूपीठे बाणैरलूलुठत् । अतिशौर्यात् पुनर्विद्याकृतान् रथान् समास्थाय युध्यमानांस्तान् नृपो लीलया तथैव पृथिव्यामलोठयत् । इत्येवम् असकृदभूत्, कृपालौ नृपेऽनिघ्नति सति सुरा राज्ञः कृपां तेषां च साहसं प्रशशंसुः । ततो नृपस्तान् समं नागपाशैरबध्नात्, सुपर्णेन[3] सह युद्धं सर्पाः कियन्निर्वहन्ति ? । तान् नृपाज्ञया चन्द्रगतिः स्कन्धावारे निन्ये, किरणमाली तान् दृष्ट्वा बन्धुसङ्गमाद् मुमुदे । अथ शस्त्रक्षतवीराङ्गोच्छलितैः शोणितैर[4]क्तो रक्तश्च रविः स्नातुमपरवारिधौ अगात् । ततः स्वस्वस्वाम्याज्ञया द्वयोः सैन्ययोरवहारो जज्ञे । भटा निजं स्थानं जग्मुः । सैन्ये जया-ऽजयभवाऽऽनन्द-शोकाभ्यां दिनरात्र्यु-

---

१ सकृद् मम जयेन दर्पान्ध्यात् । २ सिंहः । ३ गरुडेन । ४ लिप्तः । ५ प्रथमाद्विवचनम् ।

ज्वलश्यामभेरुपार्श्वद्वयोपमां दधतुः । खेटचक्री बद्धांस्तनयान् तद्रक्षायै युद्धे स्वस्य प्रमादितां मन्यमानो निशि भृशं शुशोच । चक्री प्राक्तनं सेनान्यं बद्धं ज्ञात्वा तत्पदे द्विधा महाबलं निजात्मजं न्यास्थत् । कण्ठगतप्राणा अपि भट-हस्त्यादय औषधीजलात् सज्जिता रणश्रमच्छिदे नद्यां मज्जनं व्यधुः । सुभटा निद्रालिङ्गनसौख्येन निद्रोज्झितान् देवानपि निनिन्दुः, स्वप्रियाणां च न सस्मरुः ।

इति श्रीजयानन्दराजर्षिचरित्रे श्रीजयानन्द-खेचरचक्रिमहायुद्धाधिकारे चतुर्थदिनयुद्धम् ४ ।

भानुमान् दानादिशुभवस्तूनां सौप्तिककृत् तमो ज्ञात्वा तत्रासाय क्रोधादिव अरुण आक्रामत । अथ राजा चिन्तामणिप्रभावतः सुभटेभ्यो वाहन-शस्त्रादि निखिलं यथेष्टमददात् । वीरा अन्धतमसं घ्नतः सूर्यकरान् दृष्ट्वा तैर्नु स्पर्धतः शात्रवं हन्तुमौत्सुकायन्त । पृतनाद्वितयस्थिता योधाः प्राग्वत् समग्रसामग्र्या स्वस्वपराक्रमं बोद्धुं योद्धुं डुढौकिरे । निरन्तरापातैः शरैः सूर्ये पिहितेऽपि परस्परं वीरशस्त्रसङ्घट्टजाऽनलै-रुद्द्योतोऽभूत् । पवनवेगादिभटैः खेटचक्रिबले भग्नेऽथ शक्रपराक्रमो वीरो महाबलः समुत्तस्थौ । स योद्धा सङ्ग्रामे प्रतियोद्धॄणां सायकानां च पृष्ठान्येव ददर्श, न तु वदनानि । तेन त्रस्तभटं भूपस्य बलं महिषगाहनम्लानकमलावलिपल्वलम् अतूतुलत् । अथ अन्यसुभटाऽजय्यं तं ज्ञात्वा शत्रुध्वान्तरविर्भू-पतिः शरकरावलीः[1] किरन् योद्धुमुपास्थित । समरैकधुरो धीरो भूपः प्रबलं धनुरास्फाल्य सबलं महाबलं शरैस्तिरयन् अरौत्सीत् । भूपः काण्डीरा[2]काण्डघातिनः काण्डान्[3] मुञ्चन् सेनयाऽन्वितं सेनान्यं व्याकुलतां

१ शरा एव कराः—किरणास्तेषामावलीः—पङ्क्तीः । २ काण्डीरो धनुर्धरः । ३ बाणान् ।

निन्ये । तद्बाणघातभीतानां नश्यतां वीराणां पाणिभ्यः शस्त्राणि, कटिभ्यश्च वस्त्राणि पतितानि । भूपे द्विपत्सैन्यं निघ्नति सति तम् उपद्रोतुं पञ्चोनानि द्वादशाऽपि सहस्राणि कुमाराः परेऽपि च वीरवर्गाऽग्रणिंमन्या[1] नानायाना-ऽऽयुधाः क्रुधा युगपद् अधावन्त । सर्वेऽपि शरधोरणीर्वर्षन्तः स्त्रीरूपं भूपं सत्वरं तिरयामासुः । रणकौतुकी भूपोऽपि तान् सुबहून् दृष्ट्वा मुमुदे, वैरिप्राणाऽपहारिणश्च बाणान् नुनोद[2] । एकोऽप्ययम् अनेकशो युध्यमानान् वीरान् जघान, पञ्चास्यो बहूनपि मृगान् निघ्नन् प्रयासं न याति । भूपतिः क्षणाद् रथस्थः क्षणाद्गगनस्थः क्षणाच्च भूमिस्थः सेनाया धुरि मध्ये प्रान्ते च भ्रमन् कांश्चिद् द्विपद्वीरान् पदाघातैः, कांश्चित् करतलाहतैः, कांश्चिद् वज्रसदृशैर्मुष्टिभिः, कांश्चित् कठिनकूर्परैः, कांश्चिच्च गदा-मुद्गर-दण्डा-ऽसिप्रभृतीनाम् अन्योन्यास्फालनैः पृथक् पृथग् अपीपतत् । एवं नृपो विविधायुधैर्योधयित्वा इमान् निस्त्राणान् निस्तनुत्राणान् निरस्त्रांश्च व्यधात् । तेषु सर्वेषु पुरोगान् महाबलादीन् शतं कुमारकान् रणश्रान्तान् नागपाशैर्ववन्ध, तांश्च वीरप्रधानानि बद्धानि वीक्ष्य परे समस्ताः कुमाराश्चटका इव नेशुः । नृपस्तान् भिया नश्यतः कुमारान् उपैक्षिष्ट, सारेषु कणेष्वात्तेषु[3] तुषाः[4] किं न प्रोड्डाय्यन्ते ? । अथ राज्ञा भ्रूसंज्ञया प्रेरितः पवनवेगो बद्धांस्तान् स्तेनान् कारागारे इव रयात् स्कन्धावारेऽनयत् ।

चक्री स्वान् पुत्रान् भग्नान् वीक्ष्य तथा कांश्चन बद्धान् ज्ञात्वा तान् मोचयितुं क्रोधाध्मातोऽभ्यधावत । 'शीर्षच्छेद्या सा रण्डा क ?, ते च बद्धाः कुमारकाः क ?' इत्यादि प्रलपन् चक्री अस्खलितः शत्रुसेनाम-

१ आत्मानम् अग्रणीम्–अग्रेसर मन्यन्ते इति अग्रणिम्मन्याः । २ प्रेरयामास–चिक्षेप । ३ गृहीतेषु । ४ धान्यत्वचः ।

विशत्। भीष्मक्रोधो धनुर्धरस्तूणीरधारी सोऽतिरथी भटैः कृतान्तस्य मूर्त्यन्तरमतर्कि। तं वीक्ष्य भटाः सर्वतोऽनेशन्, तावत् शक्रजिद्विक्रमः खेटचक्री संजातकरुणोऽवदत्–'हे भटवर्गाः! भवन्तो मङ्गलानि दधतां, रिपवोऽपि सुस्थिता भवन्तु, अहं युधि हीनान् न हन्मि, यतो जगत्सु मम समोऽधिको वा नास्ति, तस्मात् सर्वे यूयं निर्भीकाः स्थ। परमधुना मम तां रण्डां दर्शयत, यद् अस्या गर्भतो निजान् पुत्रानाकर्षामि'। इति श्रुत्वा स्त्रीतनुर्भूभृत् त्वरितमागत्य तं जगाद–'भो भोः! साऽहं रण्डा या तव प्रियां[1] रण्डयिष्यति। चेत् पुत्रैः सह संजिगंससे[2] तद् भोः! सत्वरं युध्यस्व, यदहं तत्समां दशां नीत्वा त्वां तैः सङ्गमयामि'। इति मर्मवचोऽस्त्रेण विद्धः खेचरचक्री 'एतां युधैव निहत्य उत्तरयिष्यामि, न तु प्रत्युक्तिभिः' इति विचिन्त्य, धनुरास्फाल्य शिलीमुखान् वर्षन् तैर्नभोऽभ्रमयं चक्रे। भूपोऽपि स्वबाणवात्यया तद्बाणाऽब्दसंहाराद् दिग्मुखानि वीराननानि चोज्ज्वलीचक्रे। तयोर्युद्धे लग्ने प्रदीपने इव स्फूर्जति[3] सति अन्येऽपि सर्वे चक्रिसैनिका युद्धे युगपद् दधाविरे। पवनवेगाद्यैश्चन्द्रगत्यादिभिश्च सुभटाग्रिमाः खेटेन्द्रसुताद्या आह्वायिषत। वीराऽस्त्रहतपत्त्य-श्व-गजरुधिरैर्विष्वग् दिवि उच्छलितैरकाले सन्ध्यारागो व्यजृम्भत। एवं द्वयोरनीकयोः सर्वाभिसारेण सङ्ग्रामे जायमाने विष्वक् प्रलयशङ्किनी पृथिवी चकम्पे, सागरा उद्वेला आसन्, शैलाः कम्पात् पतापता जाताः, विश्वानि चलाचलानि अभूवन्, दिशश्च अस्त्राऽन्धकारिता अजायन्त। एवं घोराऽऽहवस्य दम्भाद् वेधा[4] जया-ऽजयफलार्पणाद् भटान् पुण्य-पापयोर्न्य-

१ द्वितीयाबहुवचनम्। २ सङ्गमं कर्तुमिच्छसि। ३ वर्धमाने। ४ विधाता–ब्रह्मा।

क्तिम् अदीदृशत् । अथ विश्वनीराग्रण्योर्महीश-चक्रिणोः सुरेश-दितिजेशयोरिव परमो रणोऽभूत् । द्वयो-रपि तयोर्जयो वल्लभः, पराजयोऽनिष्टः । यस्मै कामाक्षा अभेद्यवज्रपृष्ठं धनुः अक्षय्येषू च बाणधी ददे स श्रीजयानन्दो भूपः केन जीयताम् [1] । यस्य विद्यया चाप-बाणाद्यानि शस्त्राणि भूयो यथेष्टं नवनवानि स्युः स हि चक्र्यपि दुर्जयः । अथ नृपः काण्डैश्चक्रिणश्चापं खण्डशोऽसृजत्, सोऽपि विद्यया नवं लात्वा तथैव युयुधे । भूपस्तदपि अविच्छेदात् चिच्छेद, एवं विद्ययाऽर्पितान् चक्रिणो नवनवान् शतं चापान् अच्छैत्सीत् । ततः खेटेश्वरो रणसिन्धोः कूलं शूलममुचत्, तच्च भूपः शूलेनैव दारुणा दार्विवाऽभिदत् । ततश्चक्री अयोभारसहस्रीयं गोलं शत्रवेऽमुचत्, तमपि नृपस्तेनैव मोदकेन मोदकमिवाऽभिनत् । अथ भूपो गदया खेटचक्रिणो रथं बभञ्ज, सोऽपि गदयैव नृपस्य रथं बभञ्ज, यतो यत्कृतं तद्भुज्यते । अथ खेटचक्री सूर्यहासं खड्गमुद्यम्य दधावे, नरेन्द्रोऽपि चन्द्रहासं जग्राह, ततस्तौ खड्गाखड्गि व्यधत्ताम् । तौ चिरं दण्डादण्डि गदागदि मुद्गरामुद्गरि मुष्टामुष्टि पदापदि च विदधाते, परम् एतेषु युद्धेषु कोऽपि कञ्चन नाऽजैषीत्, यतः परस्परं पञ्चास्ययोः सङ्ख्ये सद्यो हि जयो दुर्लभः । अथ चक्री पुनर्विद्याकृते रथेऽस्थात्, नृपे च शरासारं व्यमुञ्चत्, नृपोऽपि तथैवाऽकरोत् । ततः क्रुद्धः क्ष्माभृद् महौजसा तथा बाणानमुचद् यथा तैर्बाणैश्चक्री रथादुत्पाट्य भूपीठे लोठितः, रथं च गदयाऽभनक् । पुनश्चक्री रथे स्थित्वा प्राग्वद् विशिखै-र्युयुधे, भूपोऽपि विशिखैस्तथैव स्यन्दनं भित्त्वा भिन्नसन्नाहं व्रणितं रुधिराक्तं च तं भुवि अलूलुठत् । तत-

१ देवेन्द्रा-ऽसुरेन्द्रयोरिव । २ तूणीरौ । ३ बाणै. । ४ नैरन्तर्यात् । ५ तटम् । ६ काष्ठेन । ७ युद्धे ।

श्चक्री विद्यावलेनैव वर्म-धन्व-रथान् नव्यान् विधाय क्रोधदुर्धरः पुनर्युयुधे, भूनाथोऽपि तथैव तम् आशुगैराशु आहत्य स्यन्दनस्य भङ्गेन स्ववदस्रम् उर्व्यामपीपतत्। एवं महीभुजा एकविंशतिकृत्वः कृतोऽप्ययं रणाद् न विरराम, अहो वीरव्रताग्रहः ! । अथ भूभुजा चक्रिणोऽपि रथान् भग्नान् वीक्ष्य सूर्यः स्वस्य तद्भङ्गभियेव अस्ताचले तिरोऽधात्। ततः स्वस्वेशाऽऽदेशतः सैन्ये रणाद् विरेमतुः। स्कन्धावाराऽऽगमशस्त्रार्तसज्जनादि पूर्ववत्।

अथ चक्री निजं स्थानमागतः, स्वसुतानां च वन्धात् शोकाकुलस्तन्मोक्षोपायं स्वधीसखानप्राक्षीत्। तेऽपि मन्त्रिणः खेटचक्रिणं परिणामहितं जगदुः—'स्वामिन् ! त्वत्पुत्राणां वन्धनकर्ता श्रीजयो भूपोऽस्ति, न तु अङ्गना काचित्। तत् तादृग्मौलि-कङ्कणधारणे कदाग्रहं मुक्त्वा कन्यां दत्त्वाऽदत्त्वा वा तं दुरुक्तं क्षमयस्व। उत्तमत्वात् कृपालुत्वाच्च स एवं तव सुतान् मोक्ष्यति, तव राज्याऽस्पृहश्च कृतार्थः पुनः स्वपदे याता'। एवं श्रुत्वा स मानी स्वां प्रतिज्ञाम् अमुमुक्षुर्मन्त्रिणो विसृज्य सुशिक्षितं दूतं पवनवेगान्तिके प्राहैषीत्। दूतो गत्वा तमभाषिष्ट—"हे शिष्ट ! चक्रिणाऽऽदिष्टोऽसि यत् 'त्वज्जामाता मम सुतानां वन्धनकर्ता' इत्यहं जनाद् जानामि। ततस्तेन सह मे सन्धेहि, मम बद्धान् मोचय, तस्मै पञ्चशतकन्यायुतां स्वकन्यां दास्यामि, अर्धवैताढ्यं च प्रदास्ये। स तादृशं मौलिं ससाहमेव धत्ताम्, आवयोः प्रीतिराभवमस्तु"। पवनवेगस्तन्निशम्य गत्वा पृथिवीपतिमाचख्यौ, राज्ञश्च प्रत्युत्तरं श्रुत्वाऽऽगत्य च दूतमुवाच—"रे दूत ! याहि, स्वस्वामिनं च वद—त्वत्सुतवन्धकृद् वक्ति यत्, तव कन्याभिर्वैताढ्येन च मम प्रयोजनं

नास्ति, त्वं मदाहाऽङ्कं तादृशं मुकुटं समाहं वह, तव भरतार्धं दास्यामि, आवयोश्च सदा सन्धिरस्तु" । दूतोऽपि गत्वा इदमाचख्यौ । तच्छ्रुत्वा क्रुद्धश्चक्री अचिन्तयत्–'अयं जितकाशी गर्वितोऽधुना सन्धिं न विधाता । अथवाऽयं चक्रभृद् न, शक्रो न, त्रिविक्रमो न, किन्तु नृमात्रो ममाऽस्त्रमुद्वीक्ष्य आशु नङ्क्ष्यति । तत् शस्त्रान्तरैरजय्यम् अमुं प्रातर्विद्यायुधैर्हत्वा स्वान् सुतान् मोचयिष्यामि, मम च यशो भावि' । ततोऽयम् अखिलाश्च सुभटा निशि स्वापसुखं प्रापुः, निशाशेषे च जागरिताः ।

इति श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दनृप-विद्याधरचक्रियुद्धाधिकारे पञ्चमदिनयुद्धम् ५ ।

अथ 'वीराः कौशिकान् त्रासयन्तं मां वीक्ष्य सस्पर्धं शात्रवान् त्रासयन्तु' इति ध्यात्वेव रविरुदगमत् । ततः पृतनाद्वितये रणतूर्यप्रणादोऽभूत्, तेन संवर्द्धितोत्साहा भटा रणाङ्गणमुपागमन् । कृतसामग्र्या युध्यमाना भटा अल्पशोऽस्त्रैर्बहून् शत्रून् घ्नन्तः कीनाशतां ययुः । अथ रणोन्मदैर्भूपवीरैश्चक्रिणः सैन्ये भग्ने सर्वेऽपि कुमाराः क्रुधा युगपद् युधेऽधावन्त । भटान् घ्नन्त इमे कुमारा वीरैः पवनवेगाद्यैर्धर्मान् नाशयन्तो दुर्विकल्पाः शुभध्यानैरिव रुद्धाः । अथ तथा दृष्ट्वा स्फारविक्रमैश्चक्रिकुमारैरक्रमात् तैः सह योद्धुमुपचक्रमे । क्वचित् चक्रैरर्कमयं, क्वचित् शक्तिभिरुल्कामयं, क्वचित् परस्परं संघट्टिताऽनेकशस्त्रोत्थाऽग्निमयं, क्वचिद् असङ्ख्यशरव्राताऽभ्रकृत्, क्वचिच्च मुद्गराद्यैर्भ्राम्यद्गृध्रपङ्क्ति नभोऽभवत् । ते चक्रिवीरा अनेकान् शस्त्रव्रातान् आर्हता धर्मानिव उद्गिरन्तो विपक्षान् व्यजयन्त । ततः श्रीजयो नृपः स्वभटसंहारशङ्कया सिंहयुग्यरथा-

१ विष्णुः । २ घूकान् । ३ यमताम् ।

रूढः स्त्रीतनू रणे प्राविशत्। भूपं चक्रिणः सुता रणकर्मणि आह्वासत। सोऽपि हसन् जगौ—"किं रे! यूयं बद्धान् बन्धून् व्यस्मार्ष्ट?। रे मुग्धा! द्रुतं नश्यत, वीरजयार्जितं यशः सुरक्ष्यताम्, यतो नृ-सुराऽसुरेषु तं न वीक्षे यो मम सकृत् चपेटामपि सहेत। यतः—

"मृत्पिण्डत्वमिभा[1]ः पुरो मम हयाः काष्ठात्मतां चाऽखिला,
योधा बिभ्रति लेपपुत्रकतुलां लौहा रथाः पर्णताम्।
शस्त्रौघास्तृणतां सुरा-ऽसुर-नराधीशास्त्वनुग्राह्यतां,
तत् कैः केन कदा क वाऽहह! कथं जेयोऽहमप्याहवे ॥ १ ॥
ये शूरा भटकोटिकुट्टनमदोत्ताला भिये स्वर्गिणां,
ते नः सङ्गरसार्थिनां खलु मुदे दिष्ट्या स्थिता दृक्पथे।
स्फूर्जत्फूत्कृतिदुर्धरोत्फणगणा भेको-न्दुराणां[2] दरं[3],
ये दद्युः प्रमदं हि ते फणभृत[4]स्तार्क्ष्यस्य[5] भक्ष्यैषिणः" ॥ २ ॥

रे भटा! युद्धेऽस्माद्दृग्जिगीषया दुर्घटैर्विकटैः परिश्रमैर्मुधा किं क्लाम्यथ?। अस्माकं चपेटामपि सोढुं सुरेन्द्रोऽपि न समर्थः, तद् रे मूर्खा! यूयं मुमूर्षावशाद् मम रणे किमुपस्थिताः?"। इति तद्वचनैः क्रुद्धा युद्धाऽतृप्तास्ते भटाः सर्वे सहस्रशो बाणान् मुमुचुः। क्षोणिपालस्तु केषाञ्चित् स्यन्दनान् रथादभाङ्क्षीत्,

१ हस्तिनः। २ मण्डूक—मूपकाणाम्। ३ भयम्। ४ सर्पाः। ५ गरुडस्य।

कानपि भूमौ अलूलुठत्, कांश्चिच व्योम्नि उदलालयत्। एवं तं युध्यमानं निबुध्य खेचरचक्री स्वपुत्राणां वधाऽऽशङ्की योद्धुमुद्यतो दधावे, स च शरैः शत्रुसेनां विदुद्राव। भूपोऽपि तमाह्वास्त। तौ मिथो बाणैर्युद्धं विदधतुः, तथा पृतनाद्वयगा योधाः स्वामियुद्धवृद्धक्रुधः सर्वे सर्वाभिसारेण युयुधिरे। ते भटाश्चिरं धनुर्धनुपि दोर्दोपि मुष्टामुष्टि गदागदि शक्ताशक्ति चक्राचक्रि च युद्धं व्यधुः। अथ कौतुकोक्तिः—

"निसाण घमघमइं, ढोल ढमढमइं, दमामा दमदमइं, झल्लरि छमछमइं, योगिणी डमरु डमडमइं, दिसि गमगमइं, वयरी कोपें धमधमइं, झूझवाट मटमटइं कायर कमकमइ, जिम जिम भट भीडइं तिम तिम रस चढइं, एके हण्या पडइ, बीजा गाढे राजडइं, काहला त्रडत्रडइं, दर्दरी दडदडइं, खाडां खडखडइं, सन्नाह कडकडइं, भड पडतां थडथडइं, पडिआ फडफडइं, एकें वडवडइं, गिरिशिखर खडहडइं, शिला रडवडइं, भूमि धडहडइं, पातालें सुर भडहडइं, भोगीओ दडवडइं, प्रेत हडहडइं, वृक्ष कडकडइं, त्र्यंबक त्रहत्रहइं, धीर गहगहइं, तेहंना जस महमहइं, महाधज लहलहइं, दिग्गिरि टलवलइं, सायर हलहलइं, नगर खलभलइं, वीरहाथ चलवलइं, पडिआ टलवलइं, भल्ल झलहलइं, रुधिर खलखलइं, लोक कलकलइं, नारी वलवलइं, झूझार घाय न चूकइं, नासतां मूकइं, हाथी चालें हलफाइं, पगे नेऊर खलकइं, एकना अंग टलकइं, एक तेजें झलकइं, रथ भांजइं, शस्त्र वाजइं, नीच नासता न लाजइं, एक एक हुइ ताजइं, नलिआ हरखे गाजइं"

१ सर्पा। २ शङ्करः। ३ तेषाम्—धीराणाम्। ४ एतत् कौतुकमात्राद् लिखित, न च सर्वत्रैव वाच्यम्। यतो विज्ञाः कञ्चय श्रोतॄनपेक्ष्यैव व्याख्यान कुर्वन्ति। ( इति ग्रन्थकारः )

अथाऽधिकृतैर्नरैः अयानानां यानानि, अशस्त्राणां विचित्राणि शस्त्राणि, क्षुधितानां खाद्यानि, तृषितानां च जलानि सेनायां श्रमं श्रमं दीयन्ते, सुहृदादिभिश्च श्रान्तानामवहारा दीयन्ते। चक्रि-भूभुजौ मरुतामपि चमत्कारं कुर्वाणौ आयसैः शस्त्रैः सुचिरमयुध्येताम्। अथ तौ भटौ मिथो गदाघातैर्भग्नस्यन्दनौ रोषतो बाहुबाहवि मुष्टामुष्टि चाऽयुध्येताम्। ततश्चक्री भूशक्रे महातरुं व्यमुचत्, सोऽपि रोषाद् रदान् पिंषन् तरुणैव तं पिपेष। ततस्तौ महाशिलाभिरयुध्येतां, तद्दलनरजोवृष्टिं जना उत्पातं मेनिरे। चक्री सवृक्षं शैलं समुत्पाट्य भूभुजेऽमुचत्, भूपस्तं कामाक्षादत्तमुद्गरेण अचूर्णयत्। भूभुजा खण्डितस्याऽस्य शैलस्य पतद्भिर्ग्रावखण्डकैः अकाले करकाणां वृष्टिर्लोकैरतर्क्यत, पिष्टेभ्यश्च तरुभ्यः पतन्तः कुसुमोत्कराः सुरैर्निर्मितां पौष्पीं वृष्टिमवर्धयन्। अथ रौद्ररणाऽजय्यं द्विपं ज्ञात्वा चक्री विद्याकृते रथे स्थितोऽग्निज्वालाभयङ्करीं महाशक्तिममुञ्चत्, भूपोऽपि विद्याऽर्पितरथस्थायी प्रतिशक्त्या मुनिरनित्यचिन्तया भवतृष्णामिव तां विभेद। ततः खेटचक्रभृद् ज्वालाकुलं चक्रं व्यमुञ्चत्, यद् दृष्ट्वाऽपि सर्वे सैन्या भयाद् नेत्रे न्यमीमिलन्। भूनेताऽपि दैवतं प्रतिचक्रं व्यमुञ्चत। प्रलयाम्भोदनिर्घोषे ते द्वे चक्रे मिथ आपस्फलतुः, यथा यथा च ते मिथ आस्फल्य आस्फल्य युध्येते तथा तथाऽग्निज्वालावनदवौ इव दृश्येते, तदुत्थैः स्फुलिङ्गैर्दाहभीरवो देवता विमुक्तरणकौतुकाः साराव नेशुः। उत्पतन्तौ पतन्तौ च मिथोगृध्राविव आस्फलन्तौ चक्रौ कान् विस्मितान् न चक्राते ?। एवं ते चक्रे सुचिरं युद्ध्वा दलितारे गतार्चिषी प्रतिहतौजसी च पश्चादपसृत्य स्वं स्वम् ईशमभजताम्। ततश्चक्री राज्ञो बले तामसास्त्रं व्यसृजत्, तेन मेघान्धतमसाऽ-

श्चिता अमावास्यारात्रिर्जज्ञे । ततो भटा यावत् स्व-पराऽविभागेण मिथो युध्यन्ते, दुर्धरायुधैश्च द्विपद्भिर्हन्यन्ते, महागजा अन्योन्यम् आस्फल्याऽऽस्फल्य पतन्ति, आश्वम् आश्वेन मर्द्यते, रथाश्च रथैर्भज्यन्ते, तावद् नृपो भानवीयेन शस्त्रेण तदुद्योतमतनोद् यत्पुरः सूर्योऽपि त्रपास्पदं स्यात् । ततो भूपो भृशं क्रुद्धो शरासारं तथा चक्रे यथा चक्री भिन्नसन्नाह-शिरस्त्राणो धनुर्लातुं शरान् वा संधातुं नाऽशशक्त् । द्विपः सैन्येऽपि तच्छिन्ना वीराणां मौलयः क्षुधितस्य कृतान्तस्य सज्जिताः कवला इवाऽपतन् । केचित् सुभटास्तच्छराहता मूर्च्छया पतिता मांसगृध्रगृध्रच्छदानिलैर्वीजिता उत्तस्थुः । तेन सर्वतोगामिशरधोरणिनिर्मिते नीरन्ध्रे कारागृहे स्तेना इव द्विपः क्षिप्ताः । तत्र खेटचक्रिबले स न नृपो न पत्तिर्न तुरङ्गमो न च सामजोऽभूद् यस्तद्बाणैर्नाऽङ्कितः । तेन बलिना वैरकारिणं स्वामिनं निन्दन्तश्चक्रिसैन्यास्तं मुक्त्वाऽनशन्, सर्वस्य हि जीवितं प्रियं भवति । तेन शतशः पातितोऽपि खेटेन्द्रोऽतिशूरत्वात् पुनः पुनरुत्थायोत्थाय नानाऽस्त्रैरयुध्यत । 'अयं भूपोऽस्त्रेणापि मद्विजित्वरमुद्द्योतं चक्रे' इतीव सत्रपो भानुरस्तगिरौ क्वचिद् निलिल्ये, यद्वा 'प्रतापेन मम सुहृदं चक्रिणं मदुद्द्योताद् अयं भूपो मा वधीत्' इति ध्यात्वा भानुः अस्तमासदत् । ततो रणाऽपसरणादि शस्त्रार्तोज्जीवनादि च पूर्ववत् सर्वं द्वयोः सैन्ययोर्बभूव । 'अहिंसादीनि पुण्यानि जया-ऽऽरोग्य-सुखसञ्चयान् ददुः, हिंसादीनि च पापानि पराजय-रोग-दुःखसञ्चयान् ददुः' इति रणस्तदा सर्वेषां व्यञ्जयति स्म । अथ रात्रौ चक्री अस्खलन्मुक्तयेऽखिला विद्याहेतीः धीधनो

१ मांसलोलुपगृध्रपक्षिपक्षपवनैः । २ हस्ती । ३ विद्याऽस्त्राणि ।

वादी तर्कोक्तियुक्तीरिव सस्मार । निद्राश्लिष्टा वीराः स्त्रीवशा नराधमाः कृत्या-ऽकृत्यादीव सुख-दुःखादि नाऽविदुः ।

इति श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दभूप-श्रीचक्रायुधखेटचक्रिद्वययुद्धवर्णनो नाम षष्ठदिनान्तर्गतो युद्धाधिकारः ६ ।

अथाऽऽदित्यो धर्मोपदेष्टा गुरुर्मोहनिद्रया शयितानिव सुप्तान् वीरान् गोभि[1]रबूबुधत्, अथवा सूर्यः सुप्तान् वीरान् क्ष्वेडमूर्च्छया[2] पतितान् जनान् जाङ्गुलिक[3] इव उदस्थापयत् । विश्वदुःखाकृत् कलिस्तत्त्वतः सुहृदोरपि किम् ?, तत् तं कलिं शान्तिं नेतुमिव जगत्साक्षी[4] उदयं ययौ; अथवा जयश्रियोऽर्हो भूपः, सा च जयश्रीर्युद्धं विना न, इति युद्धावकाशाय रविः पूर्वाचलमारोहत् । ततः पृतनाद्वये रणतूर्याणि प्रणेदुः, तन्नादो गुरूणामुपदेशो भव्यान् शुद्धधर्मोद्यममिव वीरान् विशेषतः प्रवर्धितोत्साहं निन्ये । शूरा बहु युद्धाऽपि अतृप्सितो वाडवा[5] बहुशो भुक्त्वाऽपि श्राद्धभोजनमिव, अथवा जीवा यथेष्टं भुक्त्वाऽपि द्वितीयेऽह्नि भोजनमिव रणम् ऊरीचक्रुः । चक्रिकुमाराः सुभटान् घ्नन्तः सरसि झषा[6]ऽर्भकान् भक्षयन्तो बलाका इव रणे प्रासरन् । अथ अङ्गनारूपवीरपञ्चशतीयुजा पवनवेगेन ते विविधायुधैर्बहुधा चिरं योधयित्वा अग्रिमा विंशतिर्योधिनो जालिकेन दृढैर्जालैस्तिमिङ्गिलगिला इव नागपाशैरबध्यन्त । चन्द्रगत्यादयो भोगरत्यादयश्च शूरा लक्षसङ्ख्यां चक्रिसेनामभाङ्क्षुः । ततः क्रुद्धश्चक्री मदान्धो गजः कदलीवने कदली-

१ सूर्यपक्षे किरणैः, गुरुपक्षे वाणीभिः । २ विषमूर्च्छया । ३ विषहरवैद्यः । ४ सूर्यः । ५ ब्राह्मणाः । ६ मत्स्यविशेषाः ।

द्रूनिव वैरिवीरान्निपातयन् अधावत, स धन्वधारिणा कुमारभूपेन रुरुधे। तं वीक्ष्य अतिक्रोधाक्रान्तो दुष्टधीश्चक्री अभाषिष्ट—"रे रण्डे ! किमद्यापि मत्तो दूरं न यासि ?, गतदिने स्त्रीत्वेनोपेक्षिताऽसि इति प्रगल्भसे ?। भेषजैर्गदर्गणान्[1] हन्तुं समर्था वैद्याः पदे पदे सन्ति, दानैर्दुर्गतदौःस्थ्यसन्ततिसंहारका दातारोऽसङ्ख्या विद्यन्ते, परं जगत्सु स नास्ति यः शस्त्रैर्मम दोर्दण्डकण्डूचयं व्यपनयेत्। यतः—

"मृगैर्मृगारिर्भुजगैर्गरुत्मान्[2], सुरैः सुरेन्द्रस्तपनस्तमोभिः[3]।
अग्निः पतङ्गैर्मुरजिच्च[4] दैत्यै—र्यद्वत् तथाऽहं सुभटैरसाध्यः" ॥ १ ॥

अहो मुग्धे ! काचित्त्वं रणे मामपि जेतुं प्रगल्भसे !, अस्माकमग्रे शक्रोऽपि तृणमिति किं न जानीषे ?, परे पुनः के ?। अतो रे ! याहि, मुक्ताऽसि, नारीणां वधाद् मम बलं दुष्यति, यदि स्थास्यसि तदा मम विद्यास्त्राऽनले शलभिष्यसि"। भूपोऽवक्—'त्वत्सुतावचनेन बहुशो भुवि लोठितोऽपि न हतोऽसि, तथाप्येवं वक्षि, तत्तव वाक्शूरता न वा ?। त्वं नारीणां वधेऽशक्तः, तत् तवाऽसद्बलं क दुष्यति ?। तस्माद् ममाज्ञां प्रपद्य याहि, हे जरन्[5] ! दयया मुक्तोऽसि। अथ भटानां तव पुत्राणां स्वभुजानां शस्त्राणां च बलं षट्स्वपि पूर्वयुद्धेषु त्वया दृष्टम् !। हे चक्रिन् ! अधुना यच्च विद्यास्त्राणां बलमवशिष्यते येनैवं माद्यसि तदप्याशु विलोकय। यतः—

"शूराः सन्ति सहस्रशो भुजबलप्रोत्सर्पिदर्पोद्धुराः, शस्त्राणि प्रतिवीरजीवितरमालुण्टाकवृत्तीन्यपि।

---

१ रोगसमूहान्। २ गरुडः। ३ सूर्यः। ४ कृष्णः। ५ वृद्ध !।

कोदण्डायितसायके मयि पुनर्निःशूरजन्मा मही, शस्त्राङ्कस्तृणमेकमेव हि हितं वक्त्रे धृतं तद् द्विपाम्" ॥ १ ॥

इति तस्य गिरा क्रुद्धः खेटराड् भूभुजा सह कियत्कालं शराशरि कृत्वा, धाराधराऽऽयुधम् अमुञ्चत्, इदं धारासारैर्गजेन्द्रा-ऽश्व-पत्त्याद्यां सेनाम् उपद्रवद् भूपतिर्वायव्यास्त्रेण आशु जहार। ततश्चक्री वायव्यास्त्रं गिरिशृङ्गाणि पातयद् मुमुचे, येन शत्रुसैन्यं सहसा पात्यते। भूपोऽपि लक्षशः सर्पान् विचक्रे, तेऽनिलं पिप्यिरे। ततश्चक्री नागास्त्रं मुमोच, तदा कोटिशोऽहयो बभूवुः। स्वां सेनामुपद्रवतस्तान् सर्पान् भूपतिः सुपर्णास्त्रेण अनीनशत्। ततश्चक्री वृश्चिकास्त्रम् अमुचत्, तत्कृतान् लक्षशो वृश्चिकान् सेनां दशतो वीक्ष्य भूपो मयूरास्त्रोद्भवैर्मयूरैस्तान् व्यनाशयत्। ततो भूपतेर्विद्याशक्त्या चमत्कृतो विद्याभृच्चक्री क्रोधोद्धतः प्रस्वापनायुधं सद्योऽमुचत्, परं नृपेऽङ्गदानुभावतोऽप्रभुष्णुना तेन निद्राणः कटको यावद् वैरिभिर्हन्यते तावत् प्रबोधनास्त्रेण भूपस्तम् उज्जजागार, चक्रिचम्वा च सह रोषतो विशिष्य युयुधे। ततश्चक्री त्रटत्त्रटितिकारि आग्नेयास्त्रममुञ्चत्, तदा भूभुजा वारिदास्त्रेण दहत्सैन्यं तद् व्यध्यापि। ततश्चक्री फूत्कारिभिर्नागपाशैर्द्विपमवध्नात्, नृपस्तान् कमलनालवद् द्रुतम् अतुत्रुटत्। 'ये तैर्नागपाशैर्निबद्धास्तिष्ठन्ति ते परे' एवं स नाऽवैत्, यथा जाले झषा निबध्यन्ते तथा गजा नैव बध्यन्ते। ततश्चक्री गारुडास्त्रममुञ्चद् यतो गरुडो रिपुमत्ति, भूपतिर्गोविन्दास्त्रेण तत् सत्वरं अनीनशत्। ततः खेटचक्री मोहनास्त्रं मुमोच, येन मोहिता वीरा निर्जैरेवाऽयुध्यन्त, ततो वीरा अस्त्रग्रह-मोक्षादौ विभागाऽज्ञा जाताः।

१ पपुः। २ असमर्थेन। ३ स्वकटकम्। ४ चक्री। ५ नाऽज्ञानात्।

नृपस्तदपि ज्वालामालिन्या विद्यया [1]व्यपीफलत् । एवं चक्री अन्यान्यपि विद्यास्त्राणि अमुचत्, परमेकं साहसं नाऽमुचत्, यतस्तदेव हि धीरस्य जीवितम् । तानि च विद्यास्त्राणि भाग्यनिधौ नृपे अद्रिमूर्धनि ससानि बीजानीव फलग्राहाणि नाऽभूवन् । यो हि स्वभुजयोर्जगदुत्तरं शौर्यं धत्ते, पुनर्यो विद्या-ऽङ्गदौषधीनां बलं धत्ते स नृपः कथं जेयः ?। एवं विद्यायुधैरपि भूपम् अविजितं विभाव्य विषण्णः खेटेशो दध्यौ— "अयं शात्रवः कथं जेयः ?। अस्याऽङ्गनारूपं दृश्यते, परं शौर्यं तु शक्रादिजित् !। अयं कोऽपि अलक्ष्यो विद्याऽजेयः, तद् मामपि जेता। ततः किमेतत्कृतेऽदो वैताढ्यस्य राज्यं मयाऽऽर्जि ?, कीटिकाभिः सञ्चितं धान्यं किं तित्तिरिर्नैवाऽत्ति ?। अथवा निःसत्त्वं दुष्टविकल्पिनं मां धिक्, मम पराऽऽयुधैरसाध्यो दैवतो मुद्गरोऽस्ति, तद् युद्धान्तरैश्चिरं रिपुं श्रमयित्वा तेन द्रुतं हनिष्यामि, विद्यास्त्रैः किं न सिध्यति ?" । ततश्चक्री रथारूढो निर्घोषैर्भ्रमिताम्बरं धनुरास्फाल्य भूपतौ शरासारं व्यधत्त । भूमिपतिरपि दम्भोलेरपि[2] भिदेलिमैर्बाणैस्तस्य सेनां तं चोपदुद्राव । एवं भूशक्रश्चिरं युधा श्रान्तं चक्रिणं शरैः सर्वाङ्गव्रणितं स्रवद्धिष्णुशोणितं चक्रे । ततः कोपाक्रान्तश्चक्री द्रुतं मुद्गरमुत्पाट्य लब्धलक्षस्तेन धात्रीधवं मूर्ध्नि जघान, तद्घातव्यथितो भूपो मुकुलितेक्षणो हाहारवपरे बले क्षणं किञ्चिन्नाऽचेतयत । ततस्तं निहतं मन्यमानश्चक्री यावदमोदत तावद् लब्धसंज्ञो नृपो मुद्गरं समुपाददे, स च कामाक्षया दत्तो वज्रात्मा सर्वशस्त्रभित् । अथ चक्री अभग्नस्तं नृपं वीक्ष्य यावत् पुनर्हन्ति तावन्नृपस्तेन चक्रिणं तथा मूर्धनि जघान यथाऽसौ

१ विफलता प्रापयत् । २ वज्रस्याऽपि । ३ श्रीजयानन्दः । ४ मुद्गरेण ।

मूर्च्छितो वज्रच्छिन्नच्छदाद्रिवत् पपात । ततो भूपतिस्तं नागपाशैस्तथा दृढमबध्नाद् यथोच्छ्वसितुमपि नाऽशाशक । तं गृह्णतश्चक्रिभटान् नृपः कोटिशः शरैर्न्यषेधत्, ज्वालामालाभिर्ज्वलयन् ज्वलनः किं किलाऽऽप्यते ?। स्वस्वामिनं तथा बद्धं दृष्ट्वा तद्दुःखार्त्या मुमूर्षवो वीरा रणान्न विरेमुः, ते हि स्वाम्यनुकारिणो भवन्ति । अथ भूपतिस्तान् हन्यमानान् अवेत्य उभयरक्षार्थं मोहिन्या विद्ययाऽमून् अमूमुहत् । ततस्ते स्व-परविभागाऽज्ञाः शस्त्रा-ऽशस्त्रं न विदन्ति, मिथो गज-रथाद्यैश्चास्फल्याऽऽस्फल्य भुव्यपतन् । ततस्तान् विसंस्थुलान् घ्नतः स्वभटान् भूपो न्यषेधत्, यतो वह्नौ विध्यातार्चिषि किं कैरपि धूमः क्रुध्यते ? । नृपो मृत्युसमीपान् शत्रून् वीक्ष्य कृपया तान् असस्वस्थत्। तत आकर्षिण्या विद्यया तं खेटचक्रिणमाकृष्य नृपः सानन्दाय पवनवेगायाऽऽर्पिपत् ।

इति श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दभूप-खेचरेन्द्रयुद्धाधिकारे सप्तमदिनयुद्धम् ।

अथ कुमारे सुरैः कृता व्योम्नः पुष्पवृष्टिरभूत्, दिवि दुन्दुभयो नेदुः, सुरा मुदा ननृतुः, समन्ततो दिशि महातूर्याण्यवाद्यन्त, भटाश्च हर्षिताः सर्वतो जयजयारावं व्यधुः । ततश्चक्रायुधनरेन्द्रस्य निःस्वामिकं सैन्यम् अत्राणं विषाद-भयविह्वलमभवत् । तन्मध्ये महारथ्य-तिरथ्याद्याः कोटिशो भटाः सन्ति, परं नाथं विना सर्वे खेद-भयावृता आसन्; राहुणा ग्रस्तेऽस्तमिते वा ग्रहाधिपे घास्रं प्रकाशं कर्तुं किं ग्रहादयः प्रगल्भन्ते ? । ततः श्रीजयानन्दराजेन्द्रादेशात् पवनवेगराट् खेटराट्चमूं नश्यन्तीम् एवमाश्वासया-

१ ज्ञात्वा । २ सूर्ये । ३ दैवसिकम् ।

मास—"भो निःस्वामिका सैन्या ! मा भैष्ट, मा पलायध्वम् । अस्माकं भवतां चैकः श्रीजयानन्दो नृपः स्वामी, तत् तमेव प्रतिपद्यध्वं, राज्यसुखानि च भुङ्ग्ध्वम् । युष्माकं नाथमपि प्रणतवत्सलोऽयं नृपो मोक्ष्यति" । एवं पवनवेगोक्त्या खेचरचक्रिणः सैन्यं श्रीजयानन्दं प्रभुं प्रपद्य निर्भयं शर्मणा तस्थौ । भूपो ज्वालामालिन्या प्रदत्तैर्निगडैः खेटचक्रिणं निगडयामास, ततो नागपाशान् विनीय औषधीनीरैश्च सज्जयित्वा तयैव देव्याऽर्पिते वज्रपञ्जरे तम् अचिक्षिपत् । परानपि भटान् गारुडविद्यया निःसर्पबन्धनान् कृत्वा औषध्यम्बुभिरसज्जयत् । एवं स्वा-ऽन्याऽविभागेन सुखाकृतैः सेवकीभूतैः प्रणतैः सर्वसैन्यैः सर्वतः परिवारितो, मागधव्रजैः प्रोच्चैः पठ्यमानगुणो, जयजयारवमुखरैर्वृद्धैः स्तुतविक्रमः, आसन्नसेवकैः पञ्चशतैः स्त्रीभटैर्युक्तो, महावाद्यप्रणादैर्दिशो नादयन्, गायनैर्गीयमानो, रथस्थेन खेटचक्रिणा सहितः कुमारेन्द्रो गजारूढः स्वोत्तारकालयमलञ्चक्रे । अन्येऽपि खेचरनृपा भूपाज्ञया विसृष्टाः सन्तस्तद्गुणस्तवपवित्रवदनाः स्वं स्वमुत्तारकं ययुः । अथ कृतस्नान-जिनार्चादिः सदाचार-दयालयो नृपः खेटेन्द्रं भोजयित्वा ससैन्यो बुभुजे । नृपो महोत्सवमयैर्विविधैर्मङ्गलाचारैस्तं दिवसं सुखनिद्रया च निशामतिचक्राम । प्रातर्मङ्गलतूर्याणां नादैः संजातजागरं सिंहासनासीनं श्रीजयानन्दं पवनवेगादयो नेमुः । अथ चन्द्रसुन्दरी पितृदुःखाद् आगत्य व्यजिज्ञपत्—'स्वामिन् ! हृदि करुणां निधाय मम पितरं मुञ्च' । कुमारेन्द्रो 'मोक्ष्यामि' इत्युक्त्वा वज्रपञ्जरस्थितं तं खेचरचक्रिणं खेचरैरानीनयत् । जगाद च—"रे महाभाग ! तं मौलिं तच्च कङ्कणम् इष्टनामाङ्कम् आनायय, येन पवनवेगस्य जामाता पुत्री च परिधाप्यते !,

आजीवितं च तव महिमा तिष्ठति ! । ते यदि घटिते न स्यातां तद् अधुनाऽपि घटयस्व, यतस्त्वं पञ्जरस्थोऽपि समर्थः !, अहं चौत्सुक्यं न भजामि । हे नरेश ! बन्धात् सुसाध्येऽपि वधे यद् न हतोऽसि तत्र तव पुत्र्यर्थना शक्तस्यापि च मम दया हेतुः" । इति भूपगिरा मर्मणि हतः खेटचक्री युधि वज्रादिपातेभ्योऽप्यतिदुःखभाग् रुरोद । तं रुदन्तं वीक्ष्य जातकृपः पवनवेगो जगौ—'खेटेन्द्र ! मा रोदीः, त्वं हि चिरकालीनोऽस्माकं प्रभुरसि, तत्त्वां कृपालोर्नृपात् प्रणतेर्द्राग् मोचयिष्यामि' । तं खेटराजो जगाद—'भो ! मम मोचनेन नाऽर्थः । जगद् विजित्य खेटचक्रितां च सुचिरं भुक्त्वा देव-मनुष्यसमक्षं बन्धपराभवं प्राप्नवम् ! । वीराणां हि यशः-स्वर्गप्रदानतो मृत्युः श्लाघ्यते, न तु दुर्जनधिक्कारपदं बन्धविडम्बना । तत् सम्प्रत्यपि चेत् स्वामिभक्तिं दधासि तदा असिमर्पय, येन स्वं शिरश्छित्त्वा बन्धविमोक्षं कुर्वे' । इति तं खेटेशं मुमूर्षुं निश्चित्य पवनवेग उवाच—"नाथ ! शास्त्रज्ञस्याऽपि तव केयं मूढता ?, त्वं भामिन्या न बद्धोऽसि । एते विद्या-शौर्यादयो गुणाः किं भामिन्यां सम्भवन्ति ?, हे ईश ! इयदपि न वेत्सि ? । यस्त्वाम् अबध्नात् स भुवनवीराणां जेता, योगिनीमानमर्दनः, सर्वविद्यानिधिः, देव-देवीदत्तमहावरो, वज्रवक्त्रादिदेवानां विजयी, शक्रविक्रमो, भवज्ज्ञातेन हेतुना विद्याकृताऽङ्गनारूपः श्रीजयानन्दो नृपोऽस्ति; तत् खेटेश ! प्रमोदस्व, यत इन्द्रादिभ्योऽपि बलाद्यैरुत्तरोत्तराः स्युः' । इति तद्गीःसुधासिक्तः खेटाधिपः पराभवाग्नितापार्दितोऽपि किञ्चित् शीतिमानम् अभजत् । पुनः पवनवेगोऽवक्—'राजन् ! यत्तवाऽपि हृदये गर्वाग्निर्विवेकवृक्षं दहति तदत्र कर्मैव दुष्यति । जगति ख्यातावदातोऽपि,

स्वमन्त्रिभिर्ज्ञापितोऽपि, सुरी-विद्याधरीगीयमानोऽपि, येन स्त्रीरूपेणाऽपि लीलया त्वचमूभङ्गकृतेऽपि, अहो ! गर्वेण त्वया श्रीजयो नृपोऽवाज्ञायि, तत इमां दशां प्राप्तोऽसि । स्वामिभक्त्याऽहं प्रागेव प्रधानैः सह उपदेष्टारं पण्डितं प्रैषिषम्, तस्योपदेशपीयूषेणाऽपि असमञ्जसवादिनस्तव गर्वाग्निर्न व्यध्याप्यत ! । सामान्यजनोऽपि कस्याऽपि नामाङ्कितां दासतां पत्न्याश्च दासतां न सहेत, तदाऽयं वीरः कथं सहते ? । ततोऽतिगर्वतस्त्वम् एतमपि वीरम् अभ्यबीभवः, एषोऽपि त्वयि स्त्रिया भङ्गाऽयशो दातुम् इत्यचेष्टत । तद् असुमतां क्रोधा-ऽमर्ष-गर्वाद्या दोषा एव द्विषः, अत एतान् मुक्त्वाऽस्याज्ञां प्रपद्यस्व, येन सोऽपि त्वां मोचयेत्" । खेटेन्द्रोऽपि बन्धदुःखाऽनलेन्धनम् इदमाकर्ण्य अनन्यगतिकत्वेन भूपाज्ञां प्रत्यपद्यत । अथ पवनवेगो गत्वा कुमारेन्द्रं व्यजिज्ञपत्–'स्वामिन् ! यथा त्वया स्वशौर्यादिगुणाः प्रकटितास्तथा निजं स्वाभाविकं रूपं प्रकटय, यतस्तद् निभालयितुं सर्वेषां नेत्राणि ताम्यन्ति' । परेऽपि खेटराजा विनयात्तं व्यजिज्ञपन्–'स्वामिन् ! अद्यापि मायया अस्मान् कियद् मोहयिष्यसि ?' । इति तेषामभ्यर्थनया नृपो विद्यानलात् स्वस्य भटानां च पञ्चशत्याः स्वाभाविकं रूपं व्यधात् । तच्च शङ्कातिगम् अद्भुतं वीक्षितुं द्रुतं मिलिता भटकोटयो हर्षा-ऽऽश्चर्य-त्वराकुलास्तं प्रणेमुः, हर्षतूर्याणि निनेदुः, मङ्गलपाठकाः पेठुः, चक्रसुन्दर्यपि सन्दिग्धं तत्त्वं निर्णीय मुमुदे । अथ पवनवेगादिप्रार्थनया दयया च 'कृतापराधोऽपि महान् अतिविडम्बनां नाऽर्हति' इति सञ्चिन्त्य भूनेता श्रीजयानन्दो विद्यया पञ्जरं भित्त्वा निगडानि च

१ प्राणिनाम् । २ द्रष्टुम् ।

च्छित्त्वा खेरचक्रिणं व्यमुञ्चत्। चक्र्यपि भूपस्य तद्रूपं वीक्ष्य तदाश्चर्यम् अध्यगाद् यत् पराभूतिदुःखं हर्षाद्वयेन व्यसस्मरत्। नृपेण सिंहासनेऽध्यासितं खेटचक्रिणं पवनवेगाद्याः सर्वे खेचरेश्वरा मुदा नेमुः। स्वस्वामिनं मुक्तं कनकासने च समासीनं दृष्ट्वा चक्रिणः सर्वं सैन्यं नदत्तूर्यगणम् अमोदत। अथ भूपश्चक्रवेगादीन् अपरानपि परःसहस्रान् वद्धान् भटान् द्रागानाय्य, गारुडविद्यया तेषां नागपाशांस्त्रोटयित्वाऽमुञ्चत्; व्रणार्तांश्च औषधीवारिणाऽसज्जयत्। ततस्ते मुदिताः खेटेश्वरान्वितं भूपं प्रणेमुः। तान् दृष्ट्वा परिवारान्वितश्चक्री मुमुदेतमाम्।

अथ श्रीजयानन्दनरेन्द्रश्चक्रसुन्दरीं समाहूय खेटराजायाऽऽर्पिपत्, बहुमानाच्चोवाच–'इमां निजां पुत्रीं गृहाण, स्वैरं च वराय देहि। ममाऽनया नैव प्रयोजनं, कौतुकमात्रत एवैषा धृता'। साऽपि पादयोः पतिता रुदती निजं पितरं जगौ–'तात! मया स्वेच्छया वरं वृत्वा सङ्कटे क्षिप्तोऽसि। एवं रणाद्यनर्थानां हेतुतामहमेव अगाम्, तत् पापस्य कदपत्यस्याऽखिलमपराधं मर्षय'। पिता जगौ–'चक्रसुन्दरि! तवाऽपराधो न मनागप्यस्ति, प्रतिपच्चन्द्रो धेन्वा इव त्वयैष उपलक्षितः। त्वया विश्वोत्तमगुणोऽयं संश्रितस्तद् युक्तमेव, यतः क्षितीशानां दक्षा हि कन्या वरं स्वयं वृण्वते। जगत्ख्यातावदातोऽप्येष गोपेन चिन्तामणिरिव मया नोपालक्षि, तथा चाऽवाज्ञायि, तदेवं स्वस्यैव गर्वदोषेण विपदोऽन्वभूवं, यतो महतां हि अवज्ञाऽतिगर्वश्च आयतिशर्मणे न भवति। तवैवाऽर्थनयाऽयं राजा मां नाऽवधीत्, व्यमुचच, तद् वत्से! पितृरक्षणात् प्रमोदस्व। त्वया हि विज्ञया एतत् साधु वृतं प्रमाणीभवतात्, को हि कौमुदी-कौमु-

दीश्वरयोर्योगं न श्लाघेत?'। इत्यादिवचनामृतसेकात् खेद-तापाऽपनोदतस्तनयां प्रमोद्य पिता दासीवृतां तां गृहे प्रैषीत्। अथ संतप्तं श्यामास्यं नम्रवदनं च खेचरचक्रिणं श्रीजयानन्दनृप उवाच—"नृपोत्तंस! 'अनेनाऽहं जितोऽस्मि' इति मा विषीद, अयं हि जयो मया काकतालीयो मन्यते । त्वत्समः सुरा-ऽसुर-नरेष्वपि सुभटो नास्ति, यो हि मां दिव्यबलोपेतमपि इयच्चिरम् अयोधयः। साधनादिविशेषेऽपि कर्मणोऽधिकं न भवेत्, क्वचित् किञ्चिद् विद्याबलं, परं न तेन जय एव, किन्तु असामान्यप्राग्जन्मतपसा जयो भवति । जया-ऽभ्युदय-लाभादयः सर्वे शुभावहा भावाः प्रायः प्रकृष्टपुण्यस्य फलम्। जयः पराजयो वा शूरे एव, न कातरे, हेमनि न्यासो वेधो वा मणावेव, न तु उपले। सकृज्जितोऽपि वीरो वीरतां न जहाति, एकशो व्यर्थफालोऽपि सिंहो हस्तिनो हन्त्येव । सुरैर्मथितस्याऽप्यम्बुधेर्महिमा न हीयते, मेरोर्मन्थानकत्वेऽपि समस्तपर्वतेषु गरिमैव, ग्रस्तमुक्तोऽपि भानुर्ज्योतिषां रुचो हन्त्येव, अमावास्यायां लुप्तकरोऽपि चन्द्रोऽमृतैः सुरान् प्रीणात्येव, जातराजिरपि गोधूमः कणेषु ईशतां धत्ते, घृष्टोऽपि वैडूर्यमणिर्न हि काचमणीयते, शर्करा अन्तःप्रविष्टशल्याऽपि मधुराग्रणीः, कर्दमावलिप्तोऽपि हंसः काकादिभिः समो नो भवेत्, गोत्रेऽसमर्थमपि चक्रं परैः शस्त्रैः समं न भवति, नीरेऽप्रभूष्णुरपि वह्निस्तेजस्विनां धुरि, सहस्रभगतां प्राप्तोऽपि इन्द्रः सुरेश एव, कृपिणा रथे नियुक्तोऽपि हरिर्दैत्यान् निहन्त्येव, हरेण सकृत् छिन्नशीर्षोऽपि विधिः सृष्टिं सृजत्येव, हरदग्धशरीरोऽपि स्मरः किं जगज्जैत्रो न?, भ्रात्रा

१ चन्द्रिका-चन्द्रयोः। २ नरेन्द्रशेखर'। ३ कान्तीः। ४ लुप्तकिरणोऽपि। ५ उत्पन्नरेखोऽपि। ६ सहस्रयोनित्वम्।

जितोऽपि भरतः किं चक्रित्वं न बुभुजे? । तस्मात् काकतालीयाऽभिभवजं खेदं त्यज, ससैन्यः स्वपुरं याहि, निजां च राज्यश्रियं भुङ्क्ष्व । अयं रणारम्भ आवयोः केनचित् कर्मणा जज्ञे, त्वयि ईक्ष्यमाणे तु मम मनः सुहृदीव स्निह्यति । तन्मन्ये, प्राग्भवस्य कोऽपि मम भृशं सुहृदसि । यद् रणादिभिः खेदितोऽसि तदपराधं क्षमस्व"। एवं नरेन्द्रवचसा गतखेदः खेटराड् जगौ–"हे कुमारनृपते! एवमहं मन्ये–सृष्टिं विदधतो विधेस्त्वद्रूपा सर्वगुणात्मिका एकैव मूर्तिरभवत् । तव शूरत्वं सौजन्यं नयं धर्मं विवेकितां दयां परोपकारित्वं च स्तोतुं शक्रोऽपि शक्तिमान् न भवेत् । क्रोधा-ऽज्ञाना-ऽभिमानवशात् पण्डितमन्त्रिणां पवनवेगप्रभृतीनां च मदान्धेन गजेनाऽङ्कुशानिव गिरोऽवमत्य निर्विवेकात्मना मया सर्वशुद्धगुणात्मत्वात् त्वं मान्योऽपि यद् अवमतोऽसि तद् ममाऽपराधं क्षमस्व, तव मनागपि न मन्तुः, स्वयं हि शलभे दग्धे दीपो नाऽपराध्यति । नृप! यत्त्वं क्षमोऽपि युधि मां नाऽवधीः, द्रुतं चाऽमुचः, तत्तव कृतापराधेऽपि अद्भुतो दयाधर्मः । मयि तवेव त्वयि ममाऽपि चित्तं स्निह्यति, तत् चित्तसंवादाद् आवयोः प्राग्भवसौहृदं निश्चितम् । वन्धो! राजेन्द्र! तत् सद्यः प्रसद्य समागत्य मम पुरं सौधं च पवित्रय, प्रार्थितप्रद! इति प्रार्थ्यसे"। ततः कुमारभूपेनाऽनुमतः खेटचक्री ससैन्यः स्वपुरे गत्वा तस्य शोभामचीकरत् । तथाहि—मणिस्तम्भ-मणिकुम्भालिदीप्तिभिर्नभो दीपयन्ति पाञ्चालीचाल्यमानोद्यच्चामरालीनि चित्राणि चलकेतूनि सहस्रशस्तोरणानि नभश्चरैश्चक्रिरे । राजरथ्यान्तरभितो महामञ्चावलीन्यधुः । सवाद्यध्वनिसङ्गीतगानादिपराः पुं-स्त्रियो बभुः । मञ्चेषु उल्लोचलम्बिनो मुक्तावचूला नृपसौभाग्यवीक्षार्थम्

आगत्य स्थिता ग्रहा इव भ्रेजुः । वृक्ष-गृहा-ऽट्टादिषु क्वणत्किङ्किणयो ध्वजा रेजिरे । नभश्चराश्चन्दनजलैः सर्वान् मार्गानसिञ्चन् । जनाः प्रोच्चैः स्तम्भावस्थाभिर्वस्त्र-स्वर्ण-माणिक्य-मुक्तावल्लरीपङ्क्तिभिर्हट्टशोभां व्यधुः । राजोर्वीषु मणि-स्वर्ण-मौक्तिकैः स्वस्तिका बभुः । स्तम्भेषु सद्धूपघट्यो धूमौघं किल शुभ्रं भूपयशो वर्णयितुमिव प्रोच्चैर्नभोऽस्तृणन् । समन्ततो रम्भास्तम्भावलम्बाभिः पुष्पस्रग्भिः सर्वं पुरं सुगन्ध्यभात् । अथ खेटेन्द्रः सपरिवारः समागत्य सपरिच्छदं भूपतिं विनयात् स्वपुरे आजुहाव । कुमारनृपतिस्तस्य गौरवा-ऽभ्यर्थनावशात् खेचरकोटिभिः समं तत्पुरे प्रविविक्षु[1]रचलत् । स श्वेतदन्तीन्द्रं शङ्करः कैलासमिवारूढः, सेवागतेन्दुनेव शुभ्रातपत्रेण शोभमानः, खेचरीगणैर्यशोविजितदुग्धाब्धिढौकितैः किलोर्मिभिश्चारुचामरैरभितो वीज्यमानो, वादित्रकोटिभिर्दिशः शब्दयन्, सर्वं नभो यथा कीर्तिभिस्तथा व्याप्नुवद्भिस्त्रिदशाभैर्[2]नभश्चरैर्द्यावा-पृथिव्योरैक्यं कुर्वन्निव, खेटवन्दिगायनपङ्क्तिभिः स्तूयमानगुणः, खेटस्त्रीधवलैः समन्ततोऽविश्रमं गीयमानोः, नाट्यश्रेणीः पश्यन्, जयध्वनीन् शृण्वन्, अर्थिभ्यः प्रार्थितान् अर्थान् सुरद्रुवद् वितरन्, युवराजेन महान् महीपतिरिव सच्छत्र-चामरेण इभारूढखेचरचक्रिणा भ्राजितः, शक्रः सुरैरिव पवनवेगाद्यैः परिवृतः, हृष्टजनकोटिततिस्तुतीः पाणिना प्रतीच्छन्, विद्याभृद्वधूभिर्मणि-मौक्तिकैर्वर्धाप्यमानो, हेमवस्त्रादिन्युञ्छनैरभिनन्दितो, दिव्यालङ्कार-रत्नैर्विश्वोत्तरां श्रियं दधत् श्रीपथानुलङ्घ्य खेचरचक्रिणः सौधं प्राप । ततः कुमारनृपतिः खेटेन्द्रदत्तहस्तावलम्बनो गजादुत्तीर्य, क्वचित् स्वच्छस्फटिकाऽदृश्यभि-

१ प्रवेष्टुमिच्छुः । २ देवसदृशैः ।

त्तिकं, क्वचिद् दूर्वाततिभ्रान्तिकृद्वैडूर्यमणिकरं, क्वचित् पद्मरागमणिबद्धकुट्टिमाऽग्निभ्रमं, क्वचिद् मरकतबद्धभूप्रभाऽम्बुभ्रमावहम्, एतादृशम् अन्तःसदसं सारपरिवारो मुदाऽविशत् । शोभया विजितसौधर्म्यां सभायामेत्य विस्मितो नृपः खेटेश्वरे स्थितवान् मणिसिंहासनेऽध्यास्त । पार्श्वसिंहासने गौरवाद् विद्याधरचक्र्यपि आसितः, स च भानोः समीपे चन्द्र इव शुशुभे । स्वा-ऽन्याऽविभागेन मिलिताः सर्वे खेचराः कार्यविशेषात् सङ्गतौ सौधर्मे-शानेन्द्रौ अमरा इव तौ मुदा नेमुः । महीभुजे विद्याधरा वैताढ्यसारवस्तूनि विमान-गज-पत्त्य-श्वादीनि प्राभृतानि व्यधुः । वैताढ्यद्वीपशैलगाः सर्वे भूपाः पौरान्विता राजेन्द्रमीक्षार्थम् एत्य कृतप्राभृता नेमुः । भूपोऽर्हालापादिभिः प्रीणिताः प्रजा विसृज्य खेटेन्द्रगिरा तेन सह स्नानादिकाः क्रियाश्चक्रे । एवं खेचरचक्री नृपमन्वहं गौरवात् सेवते । अथ स्वसुतां चक्रसुन्दरीं तमेवैकं पतीयन्तीं[1] राजेन्द्रमभ्यर्थ्य हस्ते कर्तुं प्रत्यपीपदत् । ते भोगरत्यादयोऽपि द्वात्रिंशतं कन्यास्तत्राऽऽनीय प्रतिपन्नतां[2] च स्मारयित्वा उपदीचक्रुः, ते च भूभुजा सह तासां पाणिग्रहणमचीकरन् । अन्येऽपि खेटपा अभ्यर्थ्य गुणैः सर्वोत्तमाः स्वाः कन्या ददुः, यतो नदीनामब्धिसमः पतिः क्व लभ्यः ?। इति अष्टाग्रसहस्रम् अप्सरोनिभास्ताः कन्या अमिलन्, वल्ल्योऽपि वीरुधो[3] गिरेर्भाराय न भवन्ति । अथ तासां खेटचक्र्यादयः पितरः सपरिच्छदाः सर्वे प्रौढप्रौढतमाः प्रमोदाऽद्वैतसङ्गताः फलैः पूर्णकरा ज्योतिषोपनिषद्विज्ञान् ज्ञानिनां वरान् दैवज्ञानाकार्य कार्यं च निवेद्य अपृच्छन् । पृच्छानुसारेण विचारिणस्तेऽपि निष्कलङ्कधियो वृद्धा

१ पतित्वेन इच्छन्तीम् । २ प्रतिपत्तिम्-स्वीकृतिम् । ३ वल्ल्यः ।

वधू-वरचन्द्र-सूर्यादिगैर्बलैः सकलं सबलं सर्वग्रहबलोपेतं निर्मलं शुक्लपक्षस्थं लग्नं दृष्ट्वा तान् प्रति प्राहुः—'भो भोः! त्वरध्वं त्वरध्वम्, अधुना आसन्नमिदमेवैकं सर्वश्रेयस्करं लग्नमाद्रियध्वम्, इहाऽखिलां सामग्रीं कुरुध्वं, ता विवाहयत, युष्माकं सर्वेषां चिरं सुखकरमस्ति'। ते नृपा एतदाकर्ण्य प्रतिपद्य च, तान् वस्त्राऽलङ्कार-पुष्पाद्यैः सत्कृत्य विसृज्य च, स्वस्वावासेषु तत्सर्वसामग्रीं संमेल्य तस्मिन् पवित्रदिने तद्विवाहमहामहांश्चक्रुः। खेटचक्र्यादिनिर्मितैः प्रौढैर्महैः कुमारनृपो विद्याधरोपरोधतस्ता उपयेमे। तस्मै नरेन्द्राय खेटेन्द्राः करमोचने गजा-ऽश्व-रथ-पत्त्यादिसाराणि महादानानि ददिरे। खेटचक्र्याद्यैरुपास्यो भूपतिर्मणिसौधेषु पत्नीभिः सह सुरस्त्रीभिः सह सुरराडिव रमते। एवं स एकाकी परदेशेऽपि परोपकारतः प्रौढाः सम्पदः प्राप, तस्माद् बुधाः! परोपकारं कुरुत। एवं प्राक्सुकृतानुभावाद् नराः सर्वत्र भोगसौख्यानि विलसन्ति।

इति तपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दमहाराजाधिराजकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे चक्रायुधविद्याधरचक्रवर्तिजय-चक्रसुन्दर्यादिबहुसहस्रकन्यापाणिग्रहणादिपुण्यफलप्रकटनाऽनुभवनादिव्यावर्णनो नाम त्रयोदशः सर्गः।

## अथ चतुर्दशः सर्गः।

फणिकिरणपङ्क्तिमण्डितं च्छत्रमूर्ध्वं, दधति धरणराजे दैत्यनिर्मुक्तवृष्टौ[1]।
सृजति विविधलीलाताण्डवं नागपल्ली—विभुः शमरसलीनः पातु वः पार्श्वदेवः ॥ १ ॥

---

१ सप्तम्येकवचनम्।

अन्यदा खेटचक्र्यादिभिर्युतं सभासीनं नृपम् उद्यानपालकोऽभ्येत्य सानन्दं व्यजिज्ञपत्—'स्वामिन्! खेटचक्रिणो जनको भूरिपरिच्छदो नाम्ना चक्रबलो गुरुरुद्याने समवासार्षीत्'। एवं श्रुत्वा नृप-खेटेन्द्रौ हर्षोच्छ्वसत्तनू असौ शासनोन्नतेर्निदानं महादानं ददाते। खेटचक्री पराभवादिभिः पुराऽप्याप्तसंवेगस्तदा गुर्वागमनं घृतपूरेषु शर्करां मेने। अथ गजारूढौ भूप-खेटेन्द्रौ महाद्युती सान्तःपुर-परिवारौ विद्याधरकोटिवृतौ उद्घोषणामिलत्पौरजनव्याप्यमानाकाश-भुवौ सूरिं वन्दितुमगाताम्। तौ दृष्ट्वा गजादवरुह्य पञ्चधाऽभिगमस्पृशौ गुरुं त्रिः प्रदक्षिणीकृत्य मुदाऽवन्दिषाताम्। गुरोर्धर्मलाभाशिषा प्राप्तानन्दौ धर्मश्रद्धालू खेटेन्द्र-भूभुजौ यथाविधि उपाविक्षताम्। एवं सर्वेऽपि खेटा वन्दित्वा यथास्थानमुपाविशन्। ततो गुरुः सभामनुजिघृक्षु[1]र्निर्वृति[2]शर्मणो हेतुं भव[3]भूधरे भिदुरं[4] धर्ममुपादिशत्—"भो भव्या! जगदेकशरणं धर्मम् अङ्गीकुरुध्वम्। स द्वेधा, गृहमेधिनां मुनीनां च। तत्रापि दशदृष्टान्तेन दुर्लभं मनुष्यत्वं प्राप्य श्रुतिश्रद्धां समधिगम्य सर्वाऽऽश्रवत्यागरूपे संयमे यतितव्यम्, तदशक्तौ च गृहिधर्मे यत्नो विधेयः। गृहस्थानां सम्यक्त्वमूलानि पञ्चाऽणुव्रतानि, त्रीणि गुणव्रतानि, चत्वारि च शिक्षापदानि[5]। तत्र सम्यक्त्वम्—या देवेषु देवताबुद्धिः, गुरुषु गुरुतामतिः, धर्मे च धर्मधीः। अदेवेषु अगुरौ अधर्मे च या देव-गुरु-धर्मबुद्धिस्तद् मिथ्यात्वम्। तत्र सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितो यथास्थिताऽर्थवादी अर्हन् परमेश्वरो देवः।

१ अनुग्रहीतुमिच्छुः। २ मोक्षसुखस्य। ३ संसारपर्वते। ४ वज्रम्। ५ इति गृहस्थानां द्वादश व्रतानि।

अयमेव ध्यातव्यः, अयमुपास्यः, अयमेव शरणमिष्यताम्, चेत् चेतनाऽस्ति तद् अस्यैव शासनं प्रतिपत्तव्यम्[1]। गुरवस्तु—

"महाव्रतधरा धीरा, भैक्ष्यमात्रोपजीविनः। सामायिकस्था धर्मोप-देशका गुरवो मताः" ॥ १ ॥

धर्मस्तु—"दुर्गतिप्रपतत्प्राणि–धारणाद् धर्म उच्यते। संयमादिर्दशविधः, सर्वज्ञोक्तो विमुक्तये" ॥ १ ॥

सरागोऽपि चेद् देवः स्यात्, अब्रह्मचार्यपि गुरुः स्यात्, कृपाहीनोऽपि च धर्मः स्यात्, ततो हहा! कष्टं नष्टं जगत्। शम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्यस्वरूपैः पञ्चभिर्लक्षणैः सम्यक्त्वं सम्यग् उपलक्ष्यते। जिनशासने स्थैर्यं, प्रभावना, भक्तिः, कौशलं, तीर्थसेवा, इति पञ्च सम्यक्त्वस्य भूषणानि। शङ्का, काङ्क्षा, विचिकित्सा, मिथ्यादृष्टिप्रशंसनं, तत्संस्तवश्च, अमी पञ्चाऽपि सम्यक्त्वं दूषयन्ति। सुधीः पङ्गु-कुष्ठि-कुणित्वादि हिंसाफलं दृष्ट्वा संकल्पतोऽपि निरागस्त्रसजन्तूनां[2] हिंसां त्यजेत्। 'सर्वप्राणिषु सुख-दुःखे आत्मवत् प्रिया-ऽप्रिये' इति चिन्तयन् आत्मनोऽनिष्टाम् अन्यस्य हिंसां नाऽऽचरेत्। प्राणी जीवितलोभेन राज्यमपि मुञ्चति, तद्धिंसोत्थं पापं सर्वपृथ्वीदानेऽपि न शाम्यति। प्राणिघातेन रौद्रध्यानतत्परौ सुभूम-ब्रह्मदत्तौ सप्तमं नरकं गतौ इति श्रूयते। यतः—

"दमो देव गुरूपास्ति–र्दानमध्ययनं तपः। सर्वमप्येतदफलं, हिंसां चेन्न परित्यजेत्" ॥ १ ॥

यः प्राणिषु अभयं दद्यात् तस्य भूतेभ्यो[3] भयं न, यादृग् दानं वितीर्यते तादृक् फलमासाद्यते। कोदण्ड[4]-

---

१ स्वीकर्तव्यम्। २ निरपराधत्रसप्राणिनाम्। ३ प्राणिभ्यः। ४ कोदण्ड—धनुः।

दण्ड-चक्रा-ऽसि-शूल-शक्तिधरा हिंसका अपि सुरा देवताबुद्ध्या पूज्यन्ते इति हा! कष्टम्। दीर्घमायुः, परं रूपम्, आरोग्यं, श्लाघनीयता, एतत्सर्वम् अहिंसायाः फलम्। अन्यत् किमुच्यते?, सा हि सर्वकामदैव अस्ति। अथ मन्मनत्वं, काहलत्वं, मूकत्वं, मुखरोगितां च असत्यफलं वीक्ष्य कन्यालीकाद्यम्[1] असत्यमुत्सृजेत्[2]। कन्या-गो-भूम्यलीकानि न्यासाऽपहरणं कूटसाक्ष्यं च, इति पञ्च स्थूलाऽसत्यप्रकाराः। यत् सर्वलोकविरुद्धं, यद् विश्वसितघातकं, यच्च पुण्यस्य विपक्षः, तद् असत्यं न वदेत्। असत्यतो लघीयस्त्वं, वचनीयता[3], अधोगतिश्च स्यात्। असत्याद् वैर-विषादा-ऽप्रत्ययादयः के दोषा न प्रादुःषन्ति?। असत्यवचनेन जीवा निगोदेषु नरकेषु तिर्यक्षु चोत्पद्यन्ते। सत्यमपि परपीडाकरं न भाषेत। अल्पादपि मृषावादाद् रौरवादिषु[4] संभवः, तदा जैनीं वाचमन्यथा वदतां हहा! का गतिः?। ज्ञान-चारित्रयोर्मूलं सत्यमेव। अथ दौर्भाग्यं प्रेष्यतां दासतां दरिद्रताम् अङ्गच्छेदं च अदत्तफलं ज्ञात्वा स्थूलस्तेयं वर्जनीयम्। मार्यमाणस्य तु एकस्य क्षणं दुःखं जायते, परं धने हृते सपुत्र-पौत्रस्य यावज्जीवं दुःखम्। परस्य सर्वस्वमुपहर्तुमुपक्रमो दूरे, परं तृणमात्रमप्यदत्तं नोपाददीत[5]। अथ पण्ढत्वम्[6] इन्द्रियच्छेदं च अब्रह्मफलं वीक्ष्य सुधीः स्वदारसन्तुष्टो भवेत्, परदारांश्च विवर्जयेत्। कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयो राजयक्ष्मादिरोगाश्च मैथुनोत्थिता भवेयुः। यत्र योनियन्त्रसमुत्पन्नाः सूक्ष्मजन्तुराशयः पीड्यमाना विपद्यन्ते तद् मैथुनं त्यजेत्। ज्वलदयःस्तम्भपरिरम्भणं वरं, परं नरकद्वाररामाजघनसेवनं न

१ कन्यार्थं यद् अलीकम्—असत्यं, तदादि। २ त्यजेत्। ३ निन्दा। ४ नरकादिषु। ५ न स्वीकुर्वीत। ६ क्लीबताम्।

विधातव्यम्। दुर्वृत्ता नितम्बिन्यः पतिं पुत्रं भ्रातरं पितरमपि च अकार्येऽपि क्षणात् प्राणसंशये आरोपयन्ति। यतः—

"भवस्य बीजं नरक-द्वारमार्गस्य दीपिका। शुचां कन्दः कलेर्मूलं, दुःखानां खनिरङ्गना" ॥ १ ॥

स्वदारा अपि आसक्त्या न सेवनीयाः, किं पुनः सर्वपापानामाकरः परयोषितः ? । मैथुनसक्तनराणां नपुंसकत्वं तिर्यक्त्वं भवे भवे च दौर्भाग्यं भवेत्। अथ दुःखकारणभूतम् असन्तोषम् अविश्वासम् आरम्भं च मूर्च्छाफलं मत्वा परिग्रहनियन्त्रणं कुर्यात्। प्राणी परिग्रहमहाभारेण महापोत इव भवाम्भोधौ मज्जत्येव, तस्मात् परिग्रहं त्यजेत्। परिग्रहे त्रसरेणुसमोऽपि कोऽपि गुणो न विद्यते, दोषास्तु पर्वतस्थूलाः प्रादुः-षन्ति। सन्तोषभाजो जन्तोर्यत् सुखं जायते तद् असन्तोषवतः शक्रस्य चक्रिणश्चाऽपि न" । इत्यादि-क्रमेण गुरुर्द्वादशव्रतस्वरूपं कथितवान्। तथा चातुर्गतिकदुःखस्वरूपमुक्त्वा राज्याऽसारतां न्यरूपयत्। तथाहि—"यस्मात् परत्र नरकादिदुःखाढ्यं तत्र राज्ये कः सुधी रमेत ? । यस्मिन् तत्तन्निबन्धनाः कषाया उदीर्यन्ते, ते च सततं प्राक्पुण्यं राक्षसा इव ग्रसन्ते । मदोन्मत्तस्य भूपस्य विषयास्तथा वेताला विवेकं नाशयन्ति, तद् राज्यं नरक एव । मूढचेता राज्यश्रिया माद्यति, परं नरके भाविदुःखं नाऽवैति। यतः—

"मृत्योः कोऽपि न रक्षितो न जगतो दारिद्र्यमुत्त्रासितं,

---

१ दुश्चरित्राः। २ युवतयः। ३ अल्पप्रयोजनेऽपि। ४ शोकानाम्। ५ सूर्यकिरणेषु उड्डयमान सूक्ष्म रजस्त्रसरेणु।

रोगस्तेन नृपादिजा न च भियो निर्नाशिताः षोडश ।
विध्वस्ता नरका न नाऽपि सुखिता धर्मैस्त्रिलोकी सदा,
तत् को नाम गुणो मदश्च विभुता का राज्यलक्ष्मीभुजः ?" ॥ १ ॥

अतो विज्ञाः! प्रायः परैर्भोग्यं राज्यपरिग्रहं त्यजत। धीमान् मोहं त्यक्त्वा सांसारिकं सुखं दुःखमेव शैवं च सुखमुपादेयतया जानन् तत्साधने धर्मे यतेत" । इत्यादिविस्तरात् श्रीगुरोर्धर्मदेशनां श्रुत्वा बहवो भव्याः प्रबुद्धा नानाधर्मान् प्रपेदिरे । अथ गुरुं नत्वा श्रीजयानन्दभूपतिर्बभाषे—"स्वामिन्! साम्प्रतं सुदुर्धरं यतिधर्मं धर्तुं न शक्नोमि । मम पुराऽपि अणुव्रतचतुष्कयुक् सम्यक्त्वमस्ति, साम्प्रतं राज्यभोगार्हान् इमान् नियमान् प्रपद्ये । तद्यथा—अनुदिनं परमेष्ठिनोऽष्टधा पूजां कृत्वा भोक्ष्ये, योगे सति गुरुं नत्वा सधर्मणश्च सत्कृत्य भोक्ष्ये। महापर्वसु आरम्भादि वर्जयन् ब्रह्म धारयिष्यामि । चैत्रेऽष्टाह्निकासु चाऽमारिं वर्तयिष्यामि। जिनप्रासाद-बिम्बानि सहस्रशः कारयिष्ये, आप्तोक्तिपुस्तकानि च बहून्यपि लेखयिष्यामि। योगे चतुर्विधं सङ्घं यथाविधि अर्चिष्यामि। सुमहाश्रावकेभ्यः करं न ग्रहीष्यामि। अपराण्यपि दीनदानादिधर्माणि करिष्यामि, अर्हच्छासने च प्रभावनां बहुधा विधास्ये" । गुरुः स्माह—"नरेन्द्र! इमान्नियमान् सम्यक् पालयेः, किन्तु मदैर्माद्यन् एतेषु मा प्रमादीः, यस्माद् जिनैरेते नियमा विरतिरूपाः कीर्तिताः। धर्मतत्त्वस्येदमनघं बीजं, सम्यक् पालिता एव कर्मक्षयकारणं स्युः, अतो राज-

राजेन्द्र! निर्वाणावधि मत्तात् सुनिश्चलान् आराधयेः” । पुनः पृथ्वीन्द्रः प्रणम्य तं गुरुं प्रोचे—‘प्रभो! अत्र भवे कर्मक्षयसमर्थां दीक्षां लप्स्ये न वा?’। ज्ञानी गुरुरवक्—‘भोगफलं कर्म भुक्त्वा यतिधर्मं चरिष्यसि’। इति श्रुत्वा मुदितो नरेन्द्रस्तथेति प्रत्यपद्यत। अथ चक्री गुरुं नत्वा व्यजिज्ञपत्—‘अभिभूतितः किञ्चित् प्राग्, अधुना च त्वद्गिरा प्रबुद्धोऽहं राज्य-भोगविरक्तधीस्त्वत्समीपे प्रव्रजिष्यामि । राज्यस्य युक्तिं विधाय त्वदन्तिके यावदेमि तावद् मदनुग्रहकाम्यया प्रतीक्षस्व’ । इत्युक्त्वा चक्री भूपः सर्वे च सभ्या गुरुं प्रणम्य प्रमोदिनः स्वं स्वं स्थानमाजग्मुः। ततो विद्याभृतां चक्री मन्त्र्याद्यैः सह विमृश्य श्रीजयानन्दं सप्रणयं जगौ—‘मज्जयौजसा यत्त्वया वैताढ्याद्रे राज्यं क्रीतं तस्यैव अनुग्रहायाऽभिषेचनं प्रपद्यस्व’। भूपतिः प्राह—‘मम वैताढ्यराज्येन न प्रयोजनं, स्वराज्यलक्ष्म्या मम तोषोऽस्ति, तत् स्वपुत्रेभ्य इदं देहि, तेषां दूरेऽप्यहं त्वमिव रक्षां करिष्यामि’। इति श्रीजयानन्देनोक्ते खेचरेश्वरोऽब्रमभणीत्—‘मया ह्यमी सूनवोऽपि त्वदुत्सङ्गे क्षिप्ताः सन्ति, एतद् राज्यं त्वदायत्तं, तद् एभ्यो यथारुचि दद्याः । ज्ञानिभिस्त्वं सवैताढ्यस्य भरतार्धस्य नायको जगदिषे, इत्यहं कुतश्चनाऽश्रौषम् । ततस्त्वां राज्येऽभिषिच्य आत्मनोऽर्थं साधयिष्यामि । मम प्रार्थनां मा भाङ्क्षीः, धर्मविघ्नं च मा कृथाः’। ततो धराधीशो मौनं खेटराट् च तोषं दधौ। अथ चक्री अभिषेकस्य सामग्रीं तदधिकारिभिरचीकरत्। ततः पवनवेगादिविद्याभृत्कोटिभिर्वृतो विद्याधरवासवः श्रीजयानन्दं निजे राज्येऽभ्यषिञ्चत्, स्वस्य आद्यं राज्यार्हं पुत्रं चक्रवेगं परानपि सुतान् कोश-सेनादि च तस्मै श्रीजयानन्दायाऽर्पिपत्। खेटशक्रेण परैश्च विद्याभृद्भिः प्रणतः श्रीजयः

शक्रस्य मूर्त्यन्तरमिवाऽशुभत्। अथ चक्रायुधश्चैत्येषु अष्टाहिकामहं चक्रे, चतुर्धा सङ्घमानर्च, दीनान् दानैरदीनयन्[1] मासं यावद् अमारिमुद्घोष्य घोषणाद्यैः सह प्रविव्रजिपून् प्रतिबन्धानां व्यपास्त्याऽसज्जयत्। तेन सह अष्टौ सहस्रा महर्द्धयः खेटराजाः षोडश सहस्राश्च खेचर्यो व्रतमादित्सांश्चक्रिरे[2]। श्रीजयो भूपश्चक्रवेगादिभिर्युतः शक्रस्तीर्थङ्करस्येव तस्य दीक्षामहामहं प्रारेभे। अथ प्रविव्रजिषुः खेटपुरन्दरो मङ्गलस्नानं विधाय, देवदूष्याणि परिधाय, सर्वालङ्कारभासुरः, प्रविव्रजिषुभिः समं महाविमानमारूढः, छत्रचामरै राजितः, भटकोटिभिः सजुषा पुरोगेण नरेन्द्रेण गानकृत्खेटीकोटीनाम् अनुगामिभिर्विमानैर्वन्दिभिर्विविधैश्च नाटकैः सुखमावहन्, साहसहर्षितैः सुरैः 'जय जय' इत्युच्यमानः, सुर-खेटानां विमानैर्नवं ज्योतिश्चक्रं सृजन्, दुन्दुभिप्रमुखैर्नदद्भिर्वाद्यैर्दिशो वादयन्, पदे पदे च दानं ददद् गुरुपाविते उद्याने गत्वा, विमानादवरुह्य, दीक्षार्थिभिः साकं मुदा लोचं कृत्वा, गुरुं नत्वा व्यजिज्ञपत्—'प्रभो! भवसमुद्राद् निस्तारय'। गुरुरपि त्यक्तराज्यादिममत्वान् संविग्नांस्तान् दीक्षादानेन अधिनोत्[3]। भूपादिसङ्घः सुराश्च सुगन्धीकृतदिग्गणान् गुरुराजार्पितान् वासान् तेषां मौलिषु चिक्षिपुः। गुरुस्तान् सङ्घलोकं च यथार्हं हितशिक्षया अनुजग्राह, ते नतशीर्षास्तां हितशिक्षां प्रपेदिरे। धात्रीशोऽपि सुधीर्गुरुं नत्वा चक्रायुधं मुनिमनंसीत्, त्रिधा शुद्ध्या च भक्त्या स्वाऽपराधमचिक्षमत्। ततः सपरिच्छदो भूपः शेषान् मुनीन् साध्वीश्च प्रणम्य

---

१ अदीनान् कुर्वन्। २ ग्रहीतुम् ईषुः। ३ अप्रीणयत्।

स्वपदमगात्, चक्रवेगादयोऽप्यगुः। अथ भूरिपरिच्छदो गुरुराकाशेऽन्यतो विजहार, ते चक्रायुधादय ऋषयो द्वैधीं शिक्षामभ्यासुः।

अथ श्रीजयानन्दश्चक्रवेग-पवनवेगादिभिः सेव्यः प्रौढचमूवृतो वैताढ्येऽन्यनगाढ्येषु च द्वीपेषु गत्वा तत्र निवासिनः सेवार्थाऽनागतान् खेटेशान् लीलयाऽजयत्। एवं विद्याधरेषु चक्रित्वं बिभ्रतोऽस्य गगनवल्लभपुरे कियान् सुखमयः कालोऽगमत्। अन्यदा निशीथे शयितं तं कश्चित् सुरोऽवदत्–'राजन्! शेषे जागर्षि वा?'। नृपोऽवदत्–'जागर्मि'। सुरोऽभाणीत्–"त्वया बोधितो गिरिचूडस्त्रिदशोऽस्मि। धरणीधव! येन हेतुनाऽत्रागतस्तं शृणु–त्वया प्रबोध्य ये तापसाः श्राद्धधर्मं ग्राहितास्ते तत्रागतस्य हेमप्रभगुरोर्गिरं शुश्रुवुः। ततस्ते भृशं संविग्नाः प्रविव्रजिषवोऽभवन्, परं तापससुन्दर्याः प्रतिबन्धात् तत्प्रभुस्तस्थौ। अन्येऽपि तापसा अस्य प्रतिबन्धतः प्रव्रजितुं न शेकुः। तद् राजन्! द्रुतमागत्य स्वां प्रियतमां स्वान्तिके नय, येन ते गतधर्मान्तरायास्तापसाः प्रव्रजन्ति। निरपराधां तादृशीं वियोजयितुं नाऽर्हसि। ऋयहमुपोपितैस्तैरहमाराध्य त्वामानेतुं प्रैषिषि, अहं तु ज्ञानिगिराऽत्र ज्ञात्वा त्वाम् इत्यजिज्ञपम्"। इत्युक्त्वा देवेऽदृशीभूते भूपः पत्न्या गुणादि स्मृत्वा तन्मिलनोत्कण्ठुलो जज्ञे, पित्रोरपि स्मरन् उत्सुको जातः। ततः प्रातः खेटवरान् समाहूय विमृश्य च चक्रायुधस्याऽऽदिमं सुतं चक्रवेगं राज्ये न्यास्थत्, असौ च भूधव उत्तरश्रेणेराधिपत्यं ददे। अस्य च परेभ्योऽपि बन्धुभ्यो यथोचितं पुरादि ददे। नृपेन्द्रः पवनवेगं दक्षिणश्रेणिनायकं चक्रे, यत आन्तराय सेवकाय प्रभवोऽधिकं तुष्यन्ति। स कुमारेन्द्रः कांश्चित् प्राक्तनैर्ग्रासैः

कांश्चिचाऽभिनवैर्ग्रासैर्दत्तैः सर्वान् प्रामोदयत्, औचित्यं हि मुदां निधिः। ततो विरुद्धान् योग्यान् क्षमयित्वाऽऽपृच्छ्य च सङ्ख्यातीतसैन्ययुक् सर्वप्रियाऽन्वितो भूपः प्रौढविमानमारूढश्चक्रवेग-पवनवेगादिभिः विमानस्थैः कोटिशः खेटपैः सहितः तांस्तापसाश्रमान् प्रति अचालीत्। तत्र यथार्हप्रतिपत्त्याद्यैर्नृपस्तापसान् संप्रीण्य, रुदतीं स्वां प्रियां तापससुन्दरीम् आशिश्वसत्। अथ हेमप्रभगुरुर्ज्ञानेन तापसानां व्रतक्षणं विज्ञाय तेषामनुग्रहात् तत्राऽऽगमत्। तस्योपान्ते हेमजटादयस्तापसाः प्राव्रजन्, गिरिचूडाऽमर-नृपौ व्रतोत्सवं चक्रतुः। नृपो गुरुं नत्वा तापसर्षीन् प्रशस्य, तापससुन्दर्या युतो द्रुतं लक्ष्मीपुरेऽगमत्। अथ श्रीविजयो नृपस्तं चम्वा छन्नाम्बरं वीक्ष्य शत्रुसैन्यशङ्कया युद्धसामग्र्या उद्यानेऽभ्यागात्, तावत् कुमारप्रहितं खेचरद्वयमागत्य पुत्रागमननिवेदनाद् भूपालम् अवर्धापयत्। नृपः पुत्रागम-समृद्धिभ्यां प्रमोदा-ऽऽश्चर्यसङ्कुलस्तस्य उचितं दत्त्वा, मतङ्गजादवरुह्य यावदभ्येति तावत् श्रीजयः सप्रियो द्राग् विमानादवतीर्य खेचरैः सह सोत्कण्ठोऽनमत्। ततो भूपस्तमालिलिङ्ग। अथाऽऽलापाद्यैर्मिथः प्रीणितौ शक्र-जयन्तौ ताविपमिव पुरं प्राविक्षताम्। ततः सप्रियः कुमारनृपो मातरं नत्वा यां मुदमनैषीत् तां सैव वेदयेत्, स्त्रीणां हि ईदृक्सूनोः समो महो नास्ति। तत्र स पूर्वाः पराश्च पत्नीः स्निग्धाभिर्गोभिश्चन्द्रः कुमुदिनीरिवाऽऽश्वासयामास। पवनवेगाऽवसरे श्रीविजयेशादिपर्षदि कुमारराजस्य सर्वं यथातथं वृत्तान्तमाख्यत्, तेन विश्वचमत्कारकारिणा गुणैर्हारिणा वृत्तान्तेन सर्वे हर्षाश्चर्यमयास्तत्स्तवमौखर्यं दधुः। अथ स राजाधिराजः साधितशेषान् मध्यख-

१ खेचरद्वयस्य। २ सुरालयम्—स्वर्गम्। ३ कुमारपक्षे वाणीभिर्दृष्टिभिर्वा, चन्द्रपक्षे किरणैः। ४ गुणैर्मनोहरेण।

ण्डगतान् पार्श्वखण्डद्वयस्थांश्चाऽखिलान् नृपान् असाधयत्। प्रथमं पूर्वस्यां दिशि वारिधिर्वेलाभिरिव बहुभिर्गर्जन्तीभिः सेनाभिः प्रतस्थे। स भूपः क्रमात् पन्थानं क्रामन् अखिलान् पौरस्त्यान् भूपान् आक्रामन् पूर्वाम्बुधेस्तटं प्रापत् । कलिङ्ग-बङ्ग-पाञ्चाल-सुह्मप्रभृतिदेशानां नृपान् जित्वा पदे पदे यशःस्तम्भान् न्यासीचक्रे। पूर्वं ये महेन्द्रनाथाद्या अन्येऽपि च कस्याऽप्याज्ञां न मेनिरे तेऽपि बलात् स्वाज्ञां ग्राहिता दत्तदण्डोपदास्तमभजन्। ततो दक्षिणाशामगमत्, तत्र पाण्ड्यादीन् जिगाय, तैस्तस्मै मुदा ताम्रपर्ण्यङ्घिसारश्रीमुक्तादि ददे। तथा तत्पार्श्वाद् लक्षशो जात्याश्वान् सहस्रशश्च गजान् जगृहे, तत्सैन्यमपि चन्दनै-ला-मरीचादिभोगम् अलात्। ततः श्रीजयानन्दो दर्दुर-मलय-सह्यान् अद्रीन् व्यलङ्घयत्, केरलादिनृपांश्च जित्वा प्रतीचीं दिशमाययौ। तत्रापि साह्यादिजातिजान् पारसीकादिभूपान् जित्वाऽवशयत्, तेऽपि सर्वसारोपदां ददुः। अथ द्विड्मथनः स नृपः कौबेरीं साधयामास, तत्र क्रमात् प्रासयुद्धपराभवा हूण-काम्बोजादिभूपाः मारान् हस्त्य-श्व-द्रविणोपस्कारन् प्राभृतीकृत्य नता च सेवां प्रपेदिरे। ततः कैलासप्रभृतिभूपान् जित्वा, हिमाचलावधि सर्वशत्रुजयात् त्रिखण्डाधिपतिर्भूत्वा, नतै राजसहस्रैः सह सैन्ययुक्त पश्चादेत्य, प्रौढोत्सवैः ससुखं स्वपुरेऽविशत्। एवं स नृपस्त्रिखण्डीं साधयित्वा स्वपुरागतोऽमरैश्चन्द्र इव खेटैरर्धचक्रित्वेऽभिषिक्तः। अभिषेकोत्सवेषु सम्पूर्णेषु प्रसन्नो नृपाधिपः सर्वेभ्यो यथोचितं राज्य-ग्रासादिकमदात्। स नृपैर्दत्ता गुणोत्तराः परःसहस्राः कन्याः परिणिन्ये, समुद्रो हि सर्वासां सरितां पदम्। नृपेन्द्रस्तासु

१ अगृह्णात्। २ द्विषाम्–शत्रूणां मथनः। ३ उत्तरदिशाम्। ४ प्रणतैः। ५ देवैः।

पाणौ कृतासु सर्वासां परिवार-ग्रासाद्यं ददौ । चक्रवेगादयः खेटराजा भूभुजा सत्कृत्य विसृष्टास्तत्सेवकव्रताः स्वस्वराज्येषु जग्मुः ।

अथ प्रियासहस्रैः सेव्यमानोऽपि भूमिराड् रतिसुन्दरीं संस्मरन् हृदि रतिं न लभते । परं तस्या गणिकामातृकत्वेन[1] सतीव्रतमारेकमाणो[2] बहुकालविमुक्तां तां परीक्षां विना नाऽऽनेतुमिच्छति । ततो रूप-लावण्य-कला-यौवनशालिनम् आन्तरं विश्वासस्थानं सुरदत्ताभिधं मित्रं 'सतीत्वं सुपरीक्ष्य रतिसुन्दरीमानय' इत्युक्त्वा बहुद्रव्यं दत्त्वा पल्यङ्कगम् आकाशेन प्रैषीत् । सोऽपि रत्नपुरे गत्वा धनैः परिच्छदं कृत्वा भाटकात्ते रतिमालागृहासन्ने गृहेऽवसत् । अचिन्तयच्च—'अहो! प्रभोरस्थाने रागः, गणिकाजातौ क्व शीलम्?, रतिसुन्दरीं सतीत्वात् क्षणेन भ्रंशयिष्यामि' । इति ध्यात्वा रतिमालाया दानवशीकृतां दासीमप्राक्षीत्—'अस्या गृहं पुरुषगमना-ऽऽगमनादिरहितं किं वीक्ष्यते?' । साऽप्यूचे—'श्रीविलासाख्यः कुमारो रतिसुन्दरीं परिणीय नृपदत्तं पुराऽष्टकं तस्यै[3] ददे । स कियत्कालं भोगान् भुक्त्वा तीर्थनमस्कृतेर्मिषात् क्वाऽपि जगाम, स[4] तस्य प्रवृत्तिश्चाऽपि नाऽऽयाति । रतिमालाया गृहे रतिसुन्दरी तिष्ठन्ती कलाः स्मरति, अत्र नरः प्रवेशं नैव लभते' । तच्छ्रुत्वा 'अहो! वेश्याकुले शीलम्' इति चित्ते चमत्कृतः स निशि स्वरोद्दीप्त्यै मोहनगीतानि गायति । नित्यशोऽपूर्वं फल-पत्रादि संस्कृत्य रतिसुन्दर्याः प्रीतये दासीहस्तेन प्रेषयति । साऽपि संस्कारादिचमत्कृता तत्सर्वं गृह्णाति, प्रायशः कलाढ्या हि कलाविदो बहु मन्यन्ते । अन्यदा स दासीम्

१ गणिका माता यस्याः सा गणिकामातृका, तस्या भावस्तेन । २ शङ्कमानः । ३ रतिसुन्दर्यै । ४ श्रीविलासः ।

अप्राक्षीत्–'तव नायिका मद्गीते रज्यते न वा?'। साऽऽख्यत्–'रज्यते, परं न तु शंसति । सा देव-गुर्वोर्गीतं विना न स्तौति, तर्हि विशिष्य शृङ्गारैकमयं सतीचूडामणिः सा कथं स्तुयात्?'। ततः सुरदत्तोऽवदत्–'शुभे! तव स्वामिनीं कथञ्चन मयि प्रेमपरां कुरु'। साऽभाणीत्–'अरे! अस्या अस्मिन् भवे नेदं सम्भवेत्, यतः सतीषु पराऽनुरागलेशोऽपि स्वप्नेष्वपि न'। स आह–'तद् मां तत्र नय'। साऽवदत्–'नृभिः प्रवेशाऽलाभत एतदपि सुसाध्यं न'। ततः स मौनं कृत्वा तस्थौ, सा च स्वस्थानं गता। तत्क्षणात्प्रभृति ध्यायन्नयम् उपायं स्मृतवान्—'श्रीजयानन्दाऽर्पितौषध्या स्वयं स्त्रीभूय अस्या दर्शनं करोमि, अयं स्फुट एव ममोपायः'। ततोऽन्यदा दासी प्रत्याह—'अहं तीर्थेषु जिनेश्वरान्नन्तुं गगनगामिन्या विद्यया श्वो यास्यामि। अत्र स्वसद्मनि सुरूपां मत्तुल्यकण्ठमाधुर्यां सकलां सस्नेहां मत्प्रियां मोक्ष्यामि। अस्याः सार्धं ग्रहणे मम पथि विघ्नो मा भूत्, अतोऽत्र मुक्तां तां मत्प्रीत्या नित्यमेत्य रमयेः'। दास्यपि 'ओम्' इत्युदित्वा स्वस्थानमगात्। ततः स सुधीर्नरेन्द्रदत्तौषध्या नारीरूपम् अकल्पयत्। अथ स नारीरूपधरः स्वस्थाने तिष्ठन् प्राग्दत्तवचनतया तया दास्या नित्यमेत्य विनोद्यते। दिवा तया सहाऽऽलापैरयं समयं गमयति, रात्रौ पुनर्जैनगीतानि गायन् तिष्ठति। तद्गीतानि निशाम्यन्ती रतिसुन्दरी तत्सुस्वरेण रञ्जिता 'प्रतिवेश्मगता केयं गायन्त्यस्ति?' इति दासीं पप्रच्छ। साऽप्याह–'मातः! काऽप्येषा धनिकस्य प्रिया प्रोषितभर्तृका गीताद्यैः स्वं मोदयन्त्यस्ति, अहमधिकं तु किञ्चिन्न वेद्मि'। ततः सा तया दास्या तां निजोपान्ते प्रमोदत आजूहवत्। सा मायास्त्र्यपि अन्तः प्रहर्षुला द्रुतं तत्राऽगात्, प्रणामं च कृत्वा दासीदत्ता-

सने समुपविष्टा । दुष्प्राप्यं तत्स्थानं प्राप्य तद्रूपं चाऽद्भुतं वीक्ष्य विस्मिता मुदिता च सा स्मरगृह्यताम-ग्रहीत्, तथापि चतुरत्वेन तत्क्षणात् स्वाकारं संवृत्य सा वशिनीव सुस्थाऽस्थात् । अथ रतिसुन्दरी तां कल्याणवार्ता-प्रश्नादिना सम्मान्य अखिलं तत्स्वरूपमपृच्छत्–'भगिनि! का त्वम्?, कुत्र स्थिताऽसि?, केन च परिणीताऽसि?, इत्यादि सर्वं निवेदय' । ततो मायास्त्री आख्यत्–"सखि! मम स्वरूपं शृणु, अहं राजपुत्र्यस्मि, विद्याधरेण प्रमोदतः परिणीता । स चाऽत्र पुरे लीलया तिष्ठन् धनैश्चाऽर्थिनः प्रीणयन् अन्वहं मया समं रतिसुखमन्वभूत् । 'देवान् वन्दित्वाऽऽगच्छामि' इत्युक्त्वाऽधुना भूरिविभवां मां मुक्त्वा गतोऽद्यापि नाऽऽयातः । कोऽपि वैदेशिकोऽत्र सद्मनि पुरा वसन्नासीत्, तस्मिन् गते पत्याऽत्र वासिताऽस्मि । भर्तृमुक्तधनेन सुखिता सपरिच्छदा शीलसौरभ्यसुभगा शुभंयुः अत्र स्थिताऽस्मि" । तच्छ्रुत्वा राजपत्न्याख्यत्–'भद्रे! समानव्यसनत्वाद् मम सधर्मिण्यसि, तदिह आवयोः सखीत्वमस्तु । अथ सखि! अन्वहं त्वयाऽऽगम्यं, मम पार्श्वे स्थेयं, सत्कथादिभिश्च मन्मनो विनोदनीयम्' । अथ मायास्त्री तस्या गिरा तद्गृहे याति आयाति च, स्वगृहे तु नररूपेण तिष्ठति चेष्टते च । सुरूपां रतिसुन्दरीं स्मारं[2] स्मारं दर्शं[3] दर्शं च सुरदत्तस्तत्क्षणे पुंस्त्वाद् अधिकाधिकं कन्दर्पपारतन्त्र्यं धत्ते। अथाऽसौ चित्ते चिन्तयति–'किमीदृगपि मम कर्म भवेद् यदेकशोऽपि अस्याः सङ्गमात् सुखमाप्यते?' । ततस्तदर्थिनी सा मायास्त्री तत्रैव बहु तिष्ठति, विविधाभिश्च कथाभिस्तन्मनो विनोदयति । सा धर्मकथाभिः परं रसं प्रथं[4]-

१ कामपक्षत्वम्–कामवशत्वम् । २ स्मृत्वा । ३ दृष्ट्वा । ४ विस्तारयन्ती ।

यन्ती अन्तराऽन्तरा कामं कामकथाः कथयति । कदन्नांशस्पृशां क्षीराहाराणामिव सा कामोक्तियुक्तपुण्यार्थजुषां तद्गिरां क्रमाद् रुचिमधात् । मायाक्षी शनैः शनैः प्रशस्यैर्धर्मसङ्गतैः उचितै रम्यै रसैरुक्तैस्तन्मनोऽधिनोत्[1] । तत्कथाभिर्यथा यथा राज्ञी प्रीता जज्ञे तथा तथा सा तत्प्रमाणेन अस्खलद्वाक्प्रवेशाऽऽसीत् । अन्यदा तां मायाक्षी प्रोचे—"वने वल्लीव त्वं यौवने भोगं विना भवं किं व्यर्थयेः ? । तव यौवनं कामक्रीडावनं तरुणनन्दनं चाऽस्ति, रूपमपि विश्वेऽप्यप्रतिरूपं निरूप्यते । त्वत्तनुर्दीपलेखेव काञ्चनश्रियं[2] धत्ते, यस्यां यूनां मनांसि पतङ्गवद् आशु निपतन्ति । तव स्वभावरम्याणि अखिलान्यप्यङ्गानि सितादिभि[3]र्दुग्धानीव सौन्दर्येणाऽधिकं भान्ति । इत्येषा स्वाङ्गाऽनुगामिनी सर्वसामग्री दुष्प्रापाऽपि यदि त्वया प्रापि तत् सा सामग्री किं न कृतार्थ्यते ? । कामिनि ! सा सामग्री स्वपतेर्योगे कृतार्था, स च तव क्वाऽस्ति ?, जीवन् मृतो वेति न ज्ञायते, तद् इष्टं नवं पतिं कुरु । यतः—

"पत्यौ प्रव्रजिते क्लीवे, प्रनष्टे पतिते मृते । पञ्चस्वापत्सु नारीणां, पतिरन्यो विधीयते" ॥ १ ॥

इति शास्त्रोक्तितः कुलस्त्रीणामपि न किञ्चिद् अयशो, न च दूषणं, तद् अन्यमृगीदृशां किं भण्यते ? । गणिकादुहितुस्तव तु साम्प्रतम्[4] एतत् साम्प्रतम्[5], एवं च स्वार्थसिद्धिर्निर्बाधा स्याद्, इति तथाऽऽचर" । एवं मायाक्ष्युदितनव्यपतिकरणवार्तया सा सती शल्येव चित्ते व्यथिता तां धिक् चकार । ततस्तां प्रति

---

१ अप्रीणयत् । २ स्वर्णशोभाम् । ३ शर्करादिभिः । ४ अधुना । ५ योग्यम् ।

मायानारी प्राह—'सखीत्वात् तव सतीत्वं परीक्षितुं मुधाऽभ्यधा, परं तव नाऽरीभवामि । अधुनाऽमुना मदुक्तेन यदि त्वं चित्ते दूयसे, सखीत्वं च धुनासि, तदिदं सुन्दरि! क्षमस्व' । ततः सा सान्त्वनार्थं प्रयुक्तानि मायास्त्रीप्रोक्तानि वचनानि श्रुत्वा तामप्यचिक्षमत् । सा प्रीत्या प्रतिदिनमागत्य प्राग्वत् चित्ततुष्टये पुण्याढ्यविस्मयस्मेराऽऽख्यानाः सद्गिर आख्याति । पुनर्बहौ काले गते अन्तराऽन्तरा प्राग्वद् ब्रूते । तथा स्फूर्जदार्जवां राज्ञीमावर्जयितुमुद्यता सा स्वसद्मनि पुरुषाकारधारिणी स्थिता सती तस्यै सोपस्काराऽद्भुताऽपूर्ववस्तूनि प्रेषयत्यपि, मुदे च चिरं मोहनगीतानि गायति । सा अन्तः कामाऽर्दिता, मर्दितधर्मधीः राज्ञीं नित्यं ध्यायन्ती स्वामिद्रोहाद्यपि अवजानती, गतनिद्रा, नाऽन्नं न च नीरं रोचयन्ती, राज्ञ्यां यथायथं निरपायान् सुरतोपायान् विमृशन्ती, प्राज्ञंमन्या यथाप्रज्ञं विचेष्टते । अथ सा शुद्धधीः सती रतिसुन्दरी कथङ्कथमपि तस्या विचेष्टितं ज्ञात्वा अन्येद्युर्दध्यौ—'एषा स्त्री अत्र सदा यादृशानि गीतानि गायति तादृशान्येव तानि पुरुषमुखात् समीपगृहे श्रूयन्ते । सा समाया कुसुमाङ्गीं मृगीदृशं मां विलोक्य तत्कालं किल कामाकुलचेतस्का जायते । अन्यच्च, एषा स्वर-गत्य-ङ्ग-लक्षण-चेष्टादि स्फुटं नृसाधारणमेव धरतीति न संशयः । अतः स्त्रीत्वेनेक्ष्यमाणाऽपि इयं स्त्री न विभाव्यते, असौ कुतोऽपि हेतोः कोऽपि पुमान् मायास्त्रीभूतः सम्भवति । अयं किल कश्चित् स्मरातुरो दुराचारः पुमान् ममाऽपि शीलविध्वंसं कर्तुकाम इव दृश्यते!। तदयं स्वीयं हृदयं मलिनं दर्शयन् सर्वथा साऽपराधो मया समये निग्राह्यः' । एवं सा सतीशिरोमणिर्ध्यात्वा तदायतिमवेक्षितुं प्राग्वद् विनोदवचोभिश्चिरं प्रीतिं प्रावीवृतत् । अन्यदा

परस्परमालापे जायमाने गतंत्रपा[1] सा मायास्त्री सत्पथप्रतिपन्थिनीं शृङ्गाररसतारुण्यतरुमञ्जरीं कामकथाम् अपप्रथत्। अथ तां कथामाकर्ण्य किञ्चिच्च अन्तर्विचिन्त्य नृपप्रियाऽऽख्यत्—'सखि! तवोदितं ममाऽपि इष्टम्। तव गिराऽहम् अकृत्यमपि कर्तुं समीहे, यथा स्निग्ध उच्छिष्टमपि स्निग्धं जेग्धुं[2] समीहते। परं सर्वाऽद्भुताकृतिः सर्वाङ्गीणगुणः सर्वकर्मसु च पण्डितस्तादृक् कश्चिद् युवा न दृश्यते यं प्रिया इव प्राणदानतः प्रेयसीकुर्वे, प्रेमसर्वस्वं च प्रापय्य येन समं रमे'। इदं निशम्य मायास्त्री मुदं धृत्वा साहसात् प्राह—"सकलाभिः कलाभिस्तवाऽनुरूपो मम पतिरस्ति। स च प्रज्ञया सुन्दरः, स्वीयरूपेणाऽतिपुरन्दरः[3], दानैश्च मेदिनीं मोदयन् त्वयि चिरमनुरक्तोऽस्ति। तदद्य अत्युत्सुकस्य मम पत्युराह्वानेन सत्वरं स्पृहां पूरय, येन प्रीतिः पल्लविता भवेत्।

"यतः पतिव्रताः पत्यु—रनुकूलस्थिराशयाः। प्रियमेवाऽऽचरन्त्युच्चै—रुच्चरन्ते प्रियं वचः" ॥ १ ॥

ततः पतिव्रतात्वेन मम मनस्यपि मनाक् सापत्न्यप्रत्यया काचिद् अरुचिर्न विद्यते। तत् प्रियसखि! द्रुतं स्वाभिप्रायं प्रादुष्कुरु, येन स्वगृहे गत्वा तं तवाऽन्तिके प्रेषयामि"। इति प्रोक्तवती मायास्त्रियं प्रति सा सती प्राह—'धनलाभं विना सर्वमेतद् विडम्बनां मन्ये'। साऽप्याह—'सखि! समग्रभोगसामग्रीसाधनं सुखनिधानं धनं मम पत्युरनर्गलमस्ति, यावद्विलोक्यते तावत्तद् ब्रूहि यत् प्रेषयामि, एवं च त्वया भोगलाभः सौख्यलाभश्चाऽपीक्ष्यते। परं हले! मम पत्ये दुरन्तकामार्तिदुःखाऽनलजलप्रभां रति-प्रीतिफलां

१ गतलज्जा। २ भक्षयितुम्। ३ पुरन्दरम्—इन्द्रम् अतिक्रान्तः।

वेलां समादिश'। साऽप्यूचे—'तत्र पत्युश्चेद् दानशक्तिर्भवेत्तदाऽशङ्कितो मह्यं कोटिमितं धनं दत्ताम्, यदि प्रत्ययो न स्यात्तदा प्राक् कोट्यर्धं दत्तां, तत्परं च परदिने दत्ताम्, तत् समादाय तेन समं ममौकसि समायातु'। इति श्रुत्वाऽन्तः प्रमुदिता साऽपि तद्वचोऽमन्यत। ततः कामवशा सा मायावशा[1] निजं वेश्म गता, स्वदास्याश्च करेण प्रपन्नं धनं प्राक् प्राहिणोत्। अथ प्रोक्तेऽह्नि तयौषध्या नररूपं विधाय कोट्यर्धरत्नानि चाऽऽदाय तद्वेश्मद्वारमागमत्। काञ्चन-माणिक्यमयभूषाविभूषितं सर्वाऽत्यद्भुतश्रृङ्गारनेपथ्यडम्बरं शम्बरारिमिव[2] तं वीक्ष्य द्वारकिङ्करी राज्यै व्यजिज्ञपत्, तदाज्ञया च सा तम् अन्तरमुचत्। सोऽपि तद्द्वारमध्यस्थचित्रशालायामागतश्चेट्याऽध्यास्यत, रत्नानां च कोट्यर्धं तत्करेऽकरोत्। अस्य गिरा दास्यपि तद् द्रव्यं स्वस्वामिन्यै आर्पयत्, रतिसुन्दरी सर्वमेकीकर्तुं तया[3] तत् प्राच्यमानीनयत्। सा सर्वमेकत्र संमील्य यावत् तद्धनं पश्यति तावत् तत्र केवलं सतेजस्कगतत्रासरत्नान्येव निरीक्ष्य किञ्चित् प्रमुदिताऽत्यन्तं च विस्मिता व्यचिन्तयत्—"अहो! अदृष्टपूर्वाणि अमूनि रत्नानि प्राग् दृष्टानीव मम भान्ति, अमूदृशि मे पत्युरेवाऽऽसन्। रक्तादिवर्णैः, वृत्ताद्याकारैः, भानुमण्डलादागतैरिव सान्द्रैर्विस्तारिभिस्तेजसां भरैः, अन्यैरपि स्निग्धत्वादिसङ्ख्यातिगैर्गुणैर्युतं यादृशं रत्नराशिम् अहं पत्युर्गृहे ऐक्षिपि तद्वर्णादिगुणानि अमूनि सर्वाण्यपि साराणि रत्नानि तन्माध्यादागतानीव विभावये। तद् मन्ये, निश्चितं मम पत्या एव कोऽप्ययं निजो मामाकारयितुं प्रैषि। तदर्थं कोऽपि तद्भटोऽत्रागात्, मां च दृष्ट्वा लुब्धचित्तः सन् एवं विचेष्टते!। ततोऽयं

१ मायास्त्री। २ कामदेवमिव। ३ दास्या।

दुर्मतिः स्वामिद्रोही परमपातकी नराधमो नरकेषु पातुकः । निःशेषमूर्खशीर्षाग्रशेखरोऽयं किमेवं न वेत्ति यत्–लोकेऽपि सर्वेषामशेषाः परयोषितोऽगम्याः । तत्रापि राजदाराणां दर्शनाद्यपि पुंसां नोचितं, तद्गम्यतादेस्तु का कथा?, यतस्ता हि मातरः स्मृताः । यदुक्तम्—

"राज्ञः पत्नी गुरोः पत्नी, पत्नी च सुहृदस्तथा । पत्नीमाता स्वमाता च, पञ्चैता मातरः स्मृताः" ॥१॥

एवं सत्यां मयि त्रिधाऽपि मातृत्वमुपपत्तिमत्, तदपि स्वेशं चोपेक्ष्य एष पुरुषाधमः स्वस्वामिनि मयि च द्रोह-दुर्मती आद्रियते, तत् सतीनां पुरुषा अपि न विश्वसनीयाः । यतः—

"अन्तर्दुष्टधियः पापाः, कृपामुक्ता गतत्रपाः[1] । सततं कोपनाः केऽपि, व्रतलोपेऽप्यभीरवः ॥ १ ॥

गर्वाशूकरवन्नित्यं, निःशूकाः कामलालसाः । सकषाया मृषावाद–विदुराः सदुरोदराः[2] ॥ २ ॥

व्यंसका[3] व्यसनव्यास–रसिका[4] विकथारसाः । विरसाः शुद्धधर्मेषु, निर्गुणाः स्वार्थवल्लभाः ॥ ३ ॥

लुब्धा क्षुब्धाः शठाः कुण्ठाः, परोपकृतिकर्मसु । दुराचाराश्चटुवाचः, प्रपञ्चपटवः स्त्रियाम् ॥ ४ ॥

इत्याद्यशेषदुर्दोष–दुर्दशादूषितात्मनाम् । अधमाधमशीलाना–मपि नो सङ्गतिः शुभा" ॥ ५ ॥

किञ्च, अयं दुष्टधीः कामान्धो धर्मवर्जितस्त्रैलोक्यचित्रकारि महोत्तमं सतीस्वरूपं न वेत्ति । महासत्यः प्राणान्तेऽपि शीलं नैव लुम्पन्ति, यत एताः शिखिशिखा[5] इव अन्यकरस्पर्शं न सहन्ते । ता मृत्युमपि-आद्रियन्ते, अङ्गव्यथामपि मृषन्ति, परं कदाचिद् असतीत्वकथास्पृशः स्वप्नेऽपि न जायन्ते । कुलयोषितः

१ निर्लज्जाः । २ द्यूतसहिताः । ३ वञ्चकाः । ४ मद्यपानादिव्यसनाना विस्तारे रसिकाः । ५ अग्निज्वालाः ।

कर्हिचिदपि रत्नदीपशिखा गृहस्येव स्वकुलस्य मालिन्यं न जनयन्ति। सतीनां शीलं कोऽपि द्युपतिर्भूपतिर्देवोऽन्यो वा कोऽपि महान् लोपयितुं न क्षमः, किमु कोऽपि केसरिणः स्कन्धात् केसरान्, फणिमस्तकाद् वा मणिं तेषु जीवत्सु क्रष्टुमीष्टे? । किं कश्चित् शूरोऽपि शेषशीर्षमणिं व्याघ्रीदुग्धं चमर्याः पुच्छं वा लातुं क्षमः?। एवं सतीषु जीवन्तीषु तासां जीवाऽलङ्करणं शीलमाणिक्यमाच्छेत्तुं कश्छेकतां भजेत्?। तथाप्ययं लम्पटो मदीयं शीलसर्वस्वं लुण्टितुं वाञ्छति!, तदयं शिक्षां विना न दक्षः स्यात्, चपेटां विना मूर्खो न प्रत्येति। अत इहाऽयं शिक्षणीयः, सत्वरं दुर्ध्यानफलं च प्रापणीयः"। इत्येषा ध्यात्वा दासीरशिक्षयत्—"अस्य पाप्मनो दुर्मनसः स्वप्नेऽपि द्वारस्याऽग्रे प्रवेशमात्रमपि न सहे, किन्तु गत्वाऽमुं ब्रूत—'अस्माकमीश्वरी स्नाना-ऽङ्गराग-भोगादिपूर्वकम् अद्भुतं शृङ्गारं विधाय यावदभ्येति तावदत्र सुस्वर! तदर्पिते मणिमये पल्यङ्के सुखमध्यास्स्व, तदर्पितं च सुरभिद्रव्यसंस्कृतं मुखवासनं ताम्बूलं स्वैरं गृहाण'। इत्यादीनि सोपचाराणि वचनान्युक्त्वा बाह्यप्रीतिसंप्रापणात् क्षणं प्रीणयध्वम्। एतत्सर्वं विधाय मम ज्ञापयत, परं तद्योग्यताम्बूलेऽयं विशेषो विरच्यताम्—यया भूरिस्तृषा जायते ईदृशी भूयिष्ठद्रव्यभावनाऽतिप्रचुरा चारुयुक्त्या विशेषतः कार्या, तस्मै तु न वाच्यम्"। इति ताः शिक्षयित्वा सा दक्षधी रतिसुन्दरी स्वावासे तल्पे सुखमध्यास्त। तच्चेटीभिस्तदीयास्ताः शिक्षावाचः प्रपेदिरे। अथ दाक्ष्यात्तथा कृत्वा ताभिः स उपचर्यते। सोऽपि तासां तैस्तैर्मनोहरैरुपचारैः, सप्रीतिविनयाऽऽलापैः, पादप्रक्षालनादिभिः, मणिपर्यङ्के तादृक्तूलिकाशयनादिभिः, सर्वाद्भुतसुगन्धाढ्यैश्च उपढौकितैस्ताम्बूलैरन्तः प्रीतिमान् अध्यक्षवीक्षाभिः सुरवधूभिरि-

व ताभिरादरात् स्वर्गसुखं न्यूनममन्यत । प्रस्तावसदृग्भिर्वल्गुभिः[1] कथाप्रथाभिर्भृशम् अन्तश्चित्तं चित्रीयमाणो रतिसर्वस्वसङ्गतस्ताभिर्दत्तम् अधरीकृतनिःशेषस्वादस्वादुरसं ताम्बूलं मुहुर्मुहुरास्वादयन् विपर्यात्त्र्या समं तृषयाऽन्तर्निपीडितः स ताश्चेटीर्जलं पातुं ययाचे । दास्योऽपि आशु मध्येसौधं समेत्य विनयनताः स्वस्वामिनीं प्रति तृषादिकं तत्स्वरूपं प्रोचुः । तयाऽपि ताः प्रति प्रोचे–'हंहो ! साधु निवेदितम् । गृहे पूर्वं कृतः, तादृग्मदकृत्तत्तदनेकद्रव्यसंस्कृतो, महावीर्यः, अहार्यगुणसञ्चयः, सिता-द्राक्षादिनीरेभ्योऽपि परमाधिकमाधुर्यबन्धुरो, बुधजनरञ्जनः, शीतलो, विमलः, तत्तत्सुरभिद्रव्यपेशलो महारसोऽस्ति । स च भवतीभिः पानीयस्थाने पानीयमिव निपाय्यताम्' । ता अपि स्वामिन्याज्ञया जलभ्रमकरं स्वादुतरं तम् आसवमपाययन् । सोऽपि कामेच्छाऽऽच्छादितलोचनस्तृपाक्रमणसंक्रान्तखेदस्तदानीम् नीरा-ऽऽसवयोरन्तरम् अजानन् स्वर्णपात्रगतं मुदाऽपिबत् । ततः स पापमनारतृप्तः सन् तत्पानान्निवृत्तः क्षणादाघूर्णितेक्षणः पुनः पल्यङ्के सुष्वाप । दुष्टाऽहिदष्टो विषेणेव एतदीयेन मदोद्भेदेन पीडितः स विसृष्टसर्वव्यापारोऽभूत्, अचिराच्च पापप्रेतकटाक्षितो मूर्च्छितो दीर्घनिद्राया भगिनी निद्रामुद्रामवाप्तवान् । अथ चेट्यस्तं सुप्तं मृतकल्पमवेक्ष्य निःशङ्कवृत्त्या तस्य सर्वाङ्गमशशुधन् । ताः क्रमात् तदीयमूर्धाग्रे धम्मिल्ल[2]रुचान्तरे तेन गोपितां दिव्यौषधीं लेभिरे। तां दृष्ट्वा हृष्टचित्ता दास्यः स्वस्वामिनीं रतिसुन्दरीमुपागत्य सत्यभावाद् अदर्शयन्, तल्लाभोपायम् आशु निर्मायं[3] व्यजिज्ञपन्, तत्कराम्भोजे च साक्षाल्लक्ष्मीमिव तामौषधिमार्पिपन् ।

१ मनोहराभिः । २ सयतकेशमध्ये । ३ निष्कपटम् ।

रतिसुन्दरी ताम् आत्मसात्कृत्य क्षणं प्रेक्ष्योपलक्ष्य च विस्मयापन्ना हृदन्तरेऽध्यासीत्–'इयं हि दिव्यप्रभावभवनं सा महौषधी या मम पत्युः करक्रोडे प्राक् क्रीडति स्म, यया मम पतिः मायाजननीं मदीयां जननीं शासितुं पुरा शूकरीरूपां चकार, तादृक्स्वरूपा तद्गुणाऽऽकीर्णाङ्गा च साक्षात् सेयं निरीक्ष्यते, तदिमां तां निश्चिनोमि। यदि सैवैषा न भवेत्तदाऽयं दुराशयो मुहुर्मुहुर्महेलाया रूपं कुतोऽकार्षीत्?। स्त्रीरूपेण विना निषिद्धपुरुषागमे मम गृहे एष आगमनं न ह्यलप्स्यत। परम् अस्य करे सा केनाऽप्युपायेन प्रापत्, किं पत्याऽस्मै अर्पिता स्याद् अन्यथा वा? इति विस्मयः। अथवाऽनेन विमर्शेन किम्?, समये स्वयं ज्ञास्यते, अयं हि वादितो यथास्थितं सर्वं वदिष्यति। सम्प्रति अस्याः प्रभावेन तं मर्कटाकृतिं कृत्वा विभीषिकादिभिस्तत्तदुपायैः शिक्षयामि'। इत्याद्युचितं चिरं विचार्य रतिसुन्दरी स्वदासीः प्रत्युवाच–'शुभंयुभिर्भवतीभिरिदं साधु व्यधायि यत् स्वोक्तनिर्वाहस्तथा ममौषध्यर्पणं चक्रे'। इत्यादयो बहुलस्नेहाः श्रुत्योश्च सुखकरा गिरः स्वस्वामिनीमुखात् श्रुत्वा दास्यः परमां प्रीतिमाप्नुवन्। रतिसुन्दरी सुखस्वापादिना तां रात्रिमत्यवाहयत्। अथ ब्राह्मे क्षणे समुत्थाय सा प्रातस्त्यसमयोचिता द्वेधाऽप्यावश्यकीः क्रियाः कुरुते स्म। ततस्तं प्रसुप्तं स्वचेट्या जवाद् गेहान्तराजूहवत्, जवन्यन्तर्हिता चाऽऽलापाद्यैरमूमुदत्। अथैषा कामान्धस्य प्रमादिनस्तस्य शिरसि कथञ्चनौषधीं न्यस्य तं मर्कटं व्यधात्, स्वदासीभिश्च क्षणं लोहशृङ्खलामानाय्य परस्त्रीलोलुपं तं न्यजगडयत्। तस्य तादृशीं मायां दृष्ट्वा प्रकुपिता सती तं संस्मार्य मुहुर्मुहुरताडयत्। सा तम् अनीनृतत्, 'रे! चुल्ह्यां क्षेप्स्यामि' इत्युच्चैश्च भाषयन्ती चेटीभिस्तम् अतीतपत्। एवं तस्मै चुली-

क्षेपाद्या विभीषिका दर्शयन्ती ताडन-नृत्ये च कारयन्ती निरन्तरमवादीत्—"रे दुर्मद! स्वामिद्रोह-परस्त्रीच्छाफलं भुङ्क्ष्व। समग्रेषु द्रोहेषु स्वामिद्रोहो महापापमयः सुदुस्तमः, तस्य फलं वक्तुं क ईश्वरः?। परस्त्रीभोगकाङ्क्षाया यदशुभं फलं तद्विपाकफलान्तं प्राप्तुं कः शक्तिमानपि शक्नोति?। विषयस्य स्तोकाऽप्याशा प्राणिनां नित्यं पाशायते, ययाऽतिशयपीडिता जीवा अनन्तजन्मसु म्रियन्ते। यतः—

"विषयस्य विषाणा च, दूरमत्यन्तमन्तरम्। उपभुक्तं विषं हन्ति, विषयाः स्मरणादपि" ॥ १ ॥

तद् यदि शुभमीहसे तदा परस्त्रीवाञ्छां सर्वथा त्यज"। इत्यादिकं साऽस्मै बहुधा हितमुपदिशति, सन्तो हि तप्यमाना अपि इक्षुवद् रसमुद्गिरन्ति। सोऽपि तदुपदेशं श्रुत्वा स्वं च कर्म गर्हितं ज्ञात्वा मुहुर्मुहुर्निजात्मानं बहुधा शोचति। दीनाननो नित्यं बन्धाद्यभिभवं सहमानो निरन्तरमश्रूणि मुञ्चन् तां 'मुञ्च मुञ्च' इति वदति। साऽपि तं पापिनं मर्कटत्वमुपागतं ब्रूते—'रे! अधुना भृशं दुःखोपतप्तः सन् एवं वदसि, एवं च न तत्र किञ्चन तत्पापफलमोक्षोऽस्ति, यतो भवतः पापानां फलं नरकादिषु बहुजन्मसु अनन्तकालं यावद् महादुःखसहस्राणां दुस्तरं सहनं भावि। यैर्गृहे यद् यादृग् राद्धं तैस्तत् तादृग् भुज्यते, यैर्यदा फल-धान्य-लतादिकं यादृगुप्तं स्यात् तैस्तदा तादृगेव लूयते। नृणां सर्वं सुख-दुःखादिकं कृतानुसारि भवेत्, तत् त्वं मनागपि मा विषीद। स्वेच्छयैव कृतस्य शुभस्याऽशुभस्य वा भोगं विना न हि कैश्चिदपि क्वचिद् मोक्ष उच्यते'। एवं मुहुर्मुहुरुपश्रुतैस्तदुपदेशैर्नित्यप्राप्तैश्च विभीषिकावधाद्यैर्विबोधितो दौर्मनस्यं परित्यज्य स्वचेष्टाभिर्दीनवदन-नयनो विनयादिपुरस्सरं तस्याः पादयोर्निपत्य तां पुनः पुनः क्षमयन् परस्त्री-

नियमप्रतिपत्तिं व्यजिज्ञपत्। तस्येङ्गितादिभिः परस्त्रीविरतौ मनो ज्ञात्वा स्वस्मिन्नम्रतयाऽत्यन्तं च दीनाननतया दयालुः सरला शीलवती सतीशिरोमणिः सा शृङ्खलाद्युग्रबन्धनात् तं दासीभिर्मोचयामास। ततो जीवन्तमपि अल्पाऽन्नदानतोऽजीवन्तमिव तम् औषध्या पूर्वरूपं नरं कारयामास। कस्मिंश्चित् समये सा पुनस्तं दृढं बन्धयित्वा स्वदासीभिस्तप्ताऽयःशलाकया तस्य भाले 'श्रीजयानन्ददास' इति नामाऽलीलिखत्, पुनर्निर्भर्त्स्य तादृगशुभानाम् अनन्तं कटु दुःसहं फलं संश्राव्य परस्त्र्यादिनियमान् ग्राहयित्वा तम् अमूमुचत्। ततो मुक्तबन्धनं स्वस्थचित्तं प्रमुदितं च तं सा निषिद्धाऽन्यनरालोका नेपथ्यान्तरिता जगौ—'त्वं कः?, तव निवासः क्वाऽऽस्ते?, इह कुतः स्थानात् किं प्रयोजनमुद्दिश्य आगतोऽसि?, इत्येतत्प्रश्नोत्तरं वद'। प्रश्नेभ्यः स स्वं कृतार्थं मन्यमानो यथास्थितमुवाच—"स्वामिनि! शृणु, विजयपुरनृपश्रीविजयपुत्रमाणिक्यं राजसहस्रनिषेव्यः स्वामी श्रीजयानन्दो नृपतिः सम्प्रति द्वितीयस्तपन इव प्रतपति। स च निष्प्रतिमश्रीर्विस्मेरितकमलाकरनिकरोऽपि सर्वत्र मृदुकर इति चित्रम्!। अहं परमैश्वर्यभुजो निजभुजधृतसकलभूभरस्याऽस्य किल सेवापरः क्षत्रसुतः सुरदत्तोऽस्मि। स्वामिनः श्रीजयानन्दभूपस्य प्रधाने राजधाने लक्ष्मीपुरे तत्सेवया सदा सुखितो वसामि। श्रीजयानन्दवृत्तान्तं खेटादीनां मुखेभ्यो ज्ञातपूर्व्यस्मि। यदहं तस्य भृत्योऽस्मि तद् मातः! त्वामाकारयितुं पल्यङ्कप्रयोगेण विद्याधर इव नभोगतिरादरात् प्रेपितोऽस्मि। तद्दत्तं रत्नादिभूरिवित्तं सहादाय त्वां परीक्षितुं त्वद्गृहासन्नगृहे वसन् यथेप्सितं भुञ्जे। अहं तदर्पितौषधीदिव्यप्रभावात् स्त्रैणरूपभृद् महासत्याः पुण्यवत्यास्तव दर्शनमाप्नवम्। तव शचीरूपजैत्रं नवं रूपं निरीक्ष्य

केनाऽप्यभाग्ययोगेन भ्रान्तः, तद् मातः! इयतीं दशां प्राप्तवान्, सम्प्रति च त्वया परस्त्रीनियमाद्युग्र-पुण्यमार्गप्रदर्शनाद् उद्धृतः। तव पतिर्लक्ष्मीपुरपुरेन्द्रः श्रीजयानन्दपृथ्वीपतिस्त्वयि सोत्कण्ठश्चिरात् तवा-गमनमिच्छति। हे स्वामिनि! मम जामिस्त्वं[1] प्रयासं सफलं सृज, इमं पल्यङ्कमारोह, स्वस्वामिनोऽन्तिके यावः"। जवन्यन्तरिता साऽपि प्राह—"तव साहसं महद् यदेवं सहर्षः सन् मया सह गन्तुमीहसे, परं त्रेधविशुद्धितः शीलोज्ज्वलाः सत्यः परनरस्पर्श-प्रेक्षाद्यपि न कुर्वते। यत् परस्त्रीनियमव्रतं प्रतिपन्नोऽसि तद्दार्ढ्यम् अतः परं मा त्याक्षीः। सतां हि परस्त्रीत्यागादेर्नाऽन्यः सदाचारो मतः, तेषामयमेव निधिः, इदमेव च परमं भूषणम्। मम पत्युः श्रीजयानन्दभूपतेः प्रवासादनु कदापि काऽपि अन्यस्य नरस्य मुखं नैक्षिषि, स्वजनैरपरैर्वा परपुंभिः[2] समं नाऽऽलापं न च प्रसङ्गमस्त्राक्षम्, शृङ्गारादि स्निग्धाहारभोजनं ताम्बूलादिभोगं नखादेश्च सत्क्रियां नाऽकार्षम्, अभ्यङ्ग-स्नान-माल्या-ऽङ्गराग-सद्धूपनादिभिः क्रियाभिः कदापि नयमङ्गसंस्कारं नाऽकरवम्, नित्यम् आत्मोचितभोगाऽङ्ग-चीरा-ऽऽहारादिभिर्विना सर्वमपि प्रोषित-प्रियसतीयोग्याचारं व्यधाम्। तथा उत्पन्नेष्वपि प्रयोजनशतेषु स्वयम् अङ्गेङ्गितज्ञाभिर्भृत्याभिरुचितं कृतम्। अद्य यावद् नराणां प्रवेशोऽपि मया गृहे न दत्तः, तत् त्वया सार्धम् एकासनमध्यास्य कथमभ्येमि?। अथ निजं स्थानं गत्वा मम पत्युरिदं निवेदय—'साक्षात् त्वदाह्वानं मुक्त्वाऽन्यैः सार्धं न समेति। सुभगेन त्वया पुण्यात् स्थाने स्थाने मद्वत्सुरूपाः शतशोऽपि कन्याः प्रियाः कृताः, तत्प्रेम-चातुर्य-भक्तितन्तुजात्

१ भगिनी। २ परपुरुषैः।

पटाद् अन्तरितां मां नाथ! नावलोकसे। तथापि स्वामिन्! तव दर्शनं प्रार्थये, त्वामेव च नित्यं ध्यायामि, त्वं तु मां स्मरस्यपि न। त्वं स्मरस्य मूर्तिः, अहं च रतिः, तद् मा मा मुचः। हे नाथ! त्वदायत्ता मम प्राणाः, यतस्त्वयैव मम प्राणाः क्रीताः, अतस्त्वत्प्रसादप्रतिदानशून्याऽहं कथं निर्वहे?। नाथ! त्वत्प्रसादस्तु दूरेऽस्तु, परं मम चिन्ताद्यपि अत्यजः, तत्स्वामिन्! त्वां नाथं मुक्त्वा कस्य ब्रवीमि?। हे प्रभो! सर्वेन्द्रियाणां सारं मनः, देव! तदेव नीत्वाऽथ किमेकाकिकां मुञ्चसि?। कृपानिधे! त्वदेकशरणायास्त्वदेकभक्तेश्च मम चिन्ता त्वया विधेया, यतश्चन्द्रस्य चन्द्रिकेव सूर्यस्य प्रभेव देहस्य च देहच्छायेव तवाऽहं सहचारिण्यस्मि। तत् स्वामिन्! प्रसद्य स्वेनाऽऽकारणेन अनुग्रहं क्रियाः'। इति मद्वचसा मत्पतिर्वाच्यः। अन्यच्च, मद्भर्तुः कुशलादिकं यथा ज्ञातं तथा मम मनस्तुष्ट्यै वद"। सोऽपि तस्याः कर्णसुखकरं तद्भर्तुर्भूपतेरादितः सर्वं सम्बन्धं जगाद, तथाहि—लक्ष्मीपुरभूपस्य श्रीपतेः कन्यात्रयपाणिग्रहणं, श्रीपतेर्दीक्षा, तव भर्तू राज्यम्, वैताढ्यगमनादि, तत्र बहुबहुविधविद्याऽर्जनं विद्याधरोपकृतिस्तत्कन्योद्वाहश्च, चक्रायुधखेचरेश्वरस्य पराजयः, तस्याऽन्येषां च कन्यासहस्राणां सोत्सवपाणिग्रहणं, स्वपुरागमनं, रिपुनृपविजयः, एतत्प्राग्जायाऽऽह्वानादिकं च सर्वं यद् आश्चर्यमयाऽवदातशतकलितं तत्पितृ-पितृव्य-बन्ध्वाद्यन्तरसम्बन्धसम्बद्धं यथा यथाऽभूत् तथा यथाश्रुतं जानन् सुरदत्तस्तस्यै स्वस्वामिप्रेयस्यै परितोपमाधातुम् अवेदयत। तस्मात् स्वभर्तुः सम्बन्धश्रवणात् साऽमन्दं परमानन्दम् उदुवाह। अथ सा रतिसुन्दरी राज्ञी युक्त्या यथोचितं स्वभृत्याभिस्तम् अतोपयत्, व्यसर्जयच्च। ततः प्रस्थितः स लक्ष्मीपुरं पुरं प्राप, श्रीजयानन्दं च भूपालं प्रणनाम। तत्परी-

क्षादिकं सर्वं भूतपूर्वं यथातथम् आमूलचूलं सव्यक्तं नृपतिं प्रत्यालपत्, तथा स्वयमामित्रणादिकं तद्वाचिकं प्रोचे । तत् स्वप्रियायाः शीलालीलायितं श्रुत्वा विदित्वा हृदये च मोदित्वा तद्दर्शनोत्सुको नृपो भृशं भक्तिमतीं तां भार्यां स्वयमानेतुं निजसाराऽल्पपरिवारपरिवृतो दिव्यविमानमारुह्य क्षणाद् रत्नपुरे गतः । तत्र सपौरं सपरिवारं श्रीरत्नप्रभभूपतिं, सपरिच्छदास्तत्प्रिया रत्नमालाद्या राज्ञीः, स्वप्रियां च रतिसुन्दरीं स्वदर्शनेन तत्तदुचितालापैश्च क्षणमभिनन्दितवान् । श्रीरत्नप्रभराजेन्द्रस्तदागमनम् आकस्मिकसुधावृष्टिप्रायं मत्वा अभ्युत्थाना-ऽऽसनदान-क्षेमप्रश्नाद्यौचित्यचिन्तया भक्तिद्विगुणितोल्लासया च मुदा प्रेरिताशयस्तं महीन्द्रमुपाचरत् । सामन्ता-ऽमात्य-पौराद्याः सर्वेऽपि मुदिता विनयाऽऽनम्रमस्तकाः समन्ताद् विविधैरश्व-गज-रत्नाद्युपायनैस्तम् उपासिषत । श्रीजयानन्दस्तेषां सन्तोषहेतवे कियत्कालं तत्र स्थितः । ततः श्वशुरादीन् आपृच्छ्य सत्कृत्य च, धन-चेट्यादिसर्वर्द्धिमतीं पितृ-भ्रात्राद्यनुमतां सतीचूडामणिं तां रतिसुन्दरीमाकार्य प्रौढविमानं चाऽऽरोह्य, सारेण परिवारेण समं समधिरुह्य वायुवेगजेत्रा वेगेन व्योममार्गेण क्षणात् स्वपुरेऽगमत् । सोत्सवं पुनरस्याऽन्तः प्रविश्य, तां वल्लभाम् अन्तःपुरान्तरे समानीय मुदा रम्ये हर्म्येऽस्थापयत् । शेषा अपि प्रियाः स्वप्रधानैर्निजनिजस्थानात् संमेल्य यथार्हदान-सम्मानैरपिप्रिणत् । राज्यश्रिया सह ताभिः स समन्ताद् उपास्यमानः सुभगे सुखसागरे भोगभङ्गीभिः स्नाति । स राजेन्दुः सर्वाः प्रजाः प्रजा इवाऽनुशास्ति । अथाऽन्येद्युर्वदनचन्द्रकान्तिद्योतिताऽशेषदिङ्मुखे, नम्राऽनेकराजेन्द्रश्रेणिमौलिलालितशासने, ध्याताऽर्हदादिपरमेष्ठिनि, यथोचितस्व-परहितकरणपरायणे श्रीजयानन्दनृपेन्द्रे पर्षन्मध्यं कनकासन-

मध्यासिते सति प्रतीहारोऽभ्येत्य तं च प्रणम्य व्यजिज्ञपत्—'स्वामिन्! विजयपुराद् विज्ञप्तिहस्तास्तलोकाः प्रतोलीद्वारमागतास्त्वां नन्तुं स्पृहयन्ति, यत्कृत्यं तदादिश'। राजेन्द्रोऽप्याह—'तान् सत्वरं प्रवेशय'। ततस्तेन सर्वेऽपि प्रवेशिताः, ते च पूर्लोकाः प्रमोदतस्तं प्रणम्य तत्पुरो विज्ञप्तिममुचन्। महामात्यप्रमुखा हंसीमिव समुज्ज्वलां तामादाय नृपतेः कराम्भोजे न्यवेशयन्। नराधीश आत्मीयमौलराज्याऽऽगतान् जनान् प्रमोदयितुं तामुन्मुद्य स्वयं स्फुटं वाचयति, तथाहि—

"स्वस्ति-श्रीमति लक्ष्मीपुरे पुरे सुरपुरोपमर्द्धियुते भूपाऽऽलिपालिताङ्घ्रिं जनकश्रीविजयप्रभृतिपरिच्छदपरिस्फुरच्छोभं राजेन्द्रं श्रीजयानन्दं विजयपुरान्नगराद् राजन्याः परिजनाश्च सर्वे विनयपूर्वं प्रणिपत्य अञ्जलीकृतकराब्जा विज्ञपयन्ति—अतः परं कार्यपदमखिलम् आर्यहितकरम् अवधार्यताम्, तथाहि—त्वत्पूर्वपूर्वजनराधीशप्रतिपालितप्रवलराज्ये विजयपुरपत्तने यज्जातं तदिदानीं शृणु। अत्र सिंहसारः शब्दमात्रेण पृथ्वीपतिरस्ति, न त्वर्थतः। स च सर्वव्यसनप्रसरप्रदर्शितकुमार्गमतिः, कपटपटुः, कटुकर्मा, गतधर्मा, लोकेष्वपि वैरिष्विव विषमाक्षः, इन्द्रियैर्जितो, निःशेषाऽन्यायगृहं, सर्वर्द्धिवृद्धीनां च केतुरभूत्। तेन राजन्यायप्रवणाः पूर्वजक्रमायाताः केचिद् राजन्या मायातो विश्वसिता बद्ध्वा गुप्तिषु क्षिप्ताः, केचिद् विनाऽपराधं स्वजनेभ्यो विक्षिप्ताः कष्टदशां प्रापिताः, केचिद् उद्वेजिताः, एके भोज्यादि त्याजिताः। पुनस्तेन केचन दण्डेशाद्या बहुधा बहु दण्डिताः, इत्यादिप्रकारैस्तेन शतशो दुःखान्यनुभाविताः। लोभान्धेन तेन स्वहितविहिताऽऽ

ज्ञानामपि तेषां तैस्तैर्दुर्दोपघोपणैर्गजा-ऽश्वादीनि अग्राहिषत । अन्यच्च, राजन्! या आजन्म त्वत्पूर्व-जसुखिताः प्रजाः*तमुदः स्वप्नेऽप्यनासदुःखाः किल त्वत्पित्रादिलालिताः प्रजास्ताः सिंहसारो दुष्करैः करैः सर्वतो दुनोति । कराश्चाऽमी-दाण पुंछी हैल मोभँ भागे भेटं तँलारक्ष वँधापन मलवरंक वँल लञ्छां चारिका गँढ वाँडी छँत्र आलँहण घोटंक कुमाँरादिसुखभक्षिका । श्रीआवश्यकेऽप्युक्तम्—

"गो'-महिसे-उट्टे-सूँणं, छगलीणं पि अ करा मुणेयवा । तत्तो अ तणँ-पलाँले, भुँस-कट्ठं-गाँरकरमेव ॥ १ ॥

सी''-उंवँर-जंघाँए, वलिवँद्दकरे घँए अ चँम्मे अ । चुल्लँगकरे अ भणिए, अट्ठारसमा 'करुप्पंत्ती" ॥२॥

तन्मौलराज्यलाभाद् लोभान्धः स सकलमपि जगत् तृणवद् गणयन् मान्यान्यपि सुप्रधानानि न हि मन्यते । यस्य गृहे मन्त्री नास्ति, मित्रं कश्चिद्वा परो हितकरो न भवति, रुयादिरपि कर्मकुशलः प्रियंवदः पक्वधीः स्थिरो धीरश्च नास्ति, तस्य राज्यं न प्रतिष्ठते, न कुलस्थितिः, न मर्यादा, न धनं, नाऽर्थसिद्धिः, न यशो, न सुखादि, न च सुकृतम् । भूभुजां प्रायः सर्वेऽर्थाः प्रधानेभ्यः प्रसिध्यन्ति, ततस्तानि तः संप्राप्याणि । यदुक्तम्—

"न प्रधानैर्विना राज्यं, न च दानैर्विना यशः । न विना हि धनैर्दानं, न पुण्येन विना धनम्" ॥ १ ॥

सर्वान् निजे-तरान् उपताप्य तेन दुर्धिया दुर्यशः स्वस्य कोशे कृतम् । राज्यप्राप्तिदिनाद् एतद्वासरा-

---

✻ प्रजाता मुद् यासा ताः । + शीतकरो भोग., क्षेत्रपरिमाणोद्भवो वा । † उत्पत्तिकरः स्वकल्पनाशिल्पनिर्मितः ।

वधि तेन ये दुर्नया अक्रियन्त तान् वक्तुं वचस्व्यपि क [1]ईष्टे?। यच्च त्वत्पिता श्रीविजयोऽपि राजा फलम् अन्वभूत् तत्सर्वं तन्मुखाद् ज्ञातं भविष्यति। तव पितृव्यो जयनृपोऽस्माकं त्वा स्वामिनमार्पिपत्, परं प्रभो! अस्माकम् अभाग्योदयतस्त्वं नाऽऽगाः। अस्मद्दुर्दैवाकृष्ट इव स त्वद्बन्धुरागमत्, त्वत्पितृव्यादिदत्तं च राज्यं प्राप्य इत्यचेष्टत। अटव्यां निवासो वरं, प्रवासो वरं, मृतिर्वा वरं, परमस्माकं तद्राज्यच्छायेच्छापि नो वरम्। तस्माद् राजराजेन्द्र! त्वं दयात्मिके दृशौ देहि, सम्प्रति, सीदतोऽस्मान् प्रसीद; [2]स्वान् किमुपक्षसे?। त्वं हि यशः-कीर्त्युदधिः, सर्वगुणरत्नमहानिधिः, परोपकारिणाम् आद्यः, शरणार्थिनां च शरण्यः। अतो हे नृप! तं दुष्टाऽन्यायिनाम् आद्यं पाप्मिनां च प्रथमं नृपनामहरं निगृहाण, पौर्वजीं कीर्तिं मा लुम्प, पूर्वजप्रजा मा मुञ्च, मूलराज्यं गृहाण, प्रजाश्चाऽनुगृह्णीष्व। अथ स्वामिन्! बन्धौ कृपां कृत्वा यद्येवं न हि करिष्यसि तत् सपुरा-ऽऽकरः सर्वदेश उद्वसीभविता। राजेन्द्र! भवतश्चित्ते द्वयोः पक्षयोर्मध्ये यद् युक्तं प्रतिभासते तद् विचार्य उचितं कुरु"।

भरतार्धपतिः श्रीजयानन्द इति तेषां विज्ञप्तिं वाचयित्वा स्वपितुश्च पराभवं स्मृत्वा, स्वीयप्रजानां चित्तमाश्वास्य तत्र गन्तुं वाञ्छन् सेनापतिं प्रति सद्यः प्राह—'स्वकिङ्करैः प्रयाणवाद्यानि वादयस्व, चतुरङ्गचमूचक्रं चाऽक्रमेणापि सज्जय'। मुदितेन सेनापतिनापि अमुमादेशं समासाद्य सद्यस्तथा कृते ससैन्यः श्रीजयानन्दभूपतिः सिंहसारं प्रति प्रतस्थे। स्वल्पैः प्रयाणैरेतद्देशं प्राप्य, आदेशवर्तिनं दूतं प्रहित्य प्रस्तावोचितं चेतयति स्म—'भ्रातः! शतशोऽपि तवाऽन्यायाः स्वाजन्याद् मया क्षमया इयत्कालम् उपेक्षिताः, अतः

१ समर्थो भवति?। २ स्वकीयान्।

परं न क्षमे' । इत्यावेद्याऽग्रतोऽचलत्, यतो महीयासो महीभुजो हि नीतिं नाऽतिक्रामन्ति । त्रिखण्डाधिपतिः सोऽसङ्ख्यसैन्येन समेतोऽपि महीं क्रामन् तल्लोकाऽनुपतापनात् स्वदेशे इव तद्देशेऽपि प्रजाहितमाचरन् तत्पुरोपान्तमागमत् । तत्र सर्वसामग्र्याऽभ्यापतन्तं महाबलं सिंहसारं व्याधः सिंहमिव त्रासयन् चिरं बहु योधयित्वा बलेन सहाऽभाङ्क्षीत् । ततस्तेन लीलया सिंहो धृतः, जवाद् नियम्य निगडय्य च निजपित्रे समर्पितः । तेनाऽपि कारागारे स्थापितः, तत्र सिंहः पीडादिदुःखमनुभवन् स्वं कर्म शोचति । एतत् पापतरोः फलम्, पापसन्तापात् कोऽपि न मुच्यते, पापं हि अनन्तमपि कालं पृष्ठगं भवति, ततः पाप्मनः फलं पश्यद्भिर्बुधैः संसारिजीवैस्तद्भिदे धर्मसारं संग्राह्यम् । अथ पाणिकृतजयेन्दिरः[1] श्रीजयानन्दः पौरैरमात्यै राजन्यैश्च कृतोत्सवपुरस्सरम् आत्मीयतातेन समं सैन्यसङ्गतस्तस्मिन् विजयपुरे सोत्कण्ठं प्रविवेश । स राजवर्यैः पौरैः परैश्च कृतमङ्गलैरुपदाकरैर्गजा-ऽश्वादि पुरस्कृत्य प्रणेमे । राजेन्द्रस्तद्राज्यमान्यसामन्ता-ऽमात्यादीन् सर्वसीमालभूपालान् पौरान् जानपदांश्च यथौचित्यं यथाक्रमम् आलाप-दान-मानाद्यैः चकोरांश्चन्द्रमा इव प्रीणयामास । ततः सर्वैः प्रणम्य विज्ञप्तम्–'प्रभो! दुरापं तव दर्शनम् अस्माभिर्भाग्यानुभावात् साम्प्रतं संप्राप्तम्, तत् तादृग्दुःखदौराज्यध्वान्तविध्वंसिनि त्वयि तेजोनिधौ तपति सति चिरादत्र मुदितम् । कालरात्रिरिव सर्वभयङ्कर एतावान् कालस्त्वयाऽर्कवत् क्षयं निन्ये, पुण्यदिनोदयश्च चक्रे । तत् स्वामिन्! त्वं चिरं जय, मौलं राज्यं कृतार्थं कुरु, पीयूषवृष्टिदृष्टिप्रदानतश्चाऽस्मान्

१ हस्ते कृता जयलक्ष्मीर्येन, सः ।

पवित्रय' । इत्युक्त्वा विरतांस्तान् यथोचितैर्व्याहारैः प्रमोद्य विससर्ज । तेऽपि च स्वं स्वं गृहं जग्मुः । सर्वे स्वस्वगृहेषु मिष्टभोजनादिकं प्रचक्रिरे । देवपूजादिप्रस्तावोचितकृत्यकृद् राजाऽपि लोकतुष्टये तत्र कतिचिद्दिनानि गमयते स्म । राज्याऽन्तः स्थितः सर्वां तच्चिन्तामनिशं कुरुते । पित्रे तत्परिवाराय परेभ्यश्च दयादिगुणसमन्वितं दान-शील-तपो-भावभेदचतुष्टयं जिनोदितं धर्मं पुण्यपापफलव्यक्ति-हेतूक्तिमययुक्तिभिः समाख्याति । कार्यान्तराणामनेकशः संपातेऽपि नैपुण्यात् तत् कृत्वा प्रत्यहं तत्पुरो धर्मं वक्ति । पुनः सरसान् सारसंग्रहान् आविर्भावितदेव-गुरु-धर्मरूपतत्त्वत्रितयनिर्णयान् धर्मस्थैर्यकरान् श्रोतृसुखकरान् हिताऽऽकरांश्च विविधान् दृष्टान्तान् नित्यम् उपदिश्योपदिश्य तान् आर्हतान् व्यधात् । तेऽपि तत्त्वाऽमृतोर्मिभिः सारां पुत्रगिरं श्रुत्वा यथास्थितं गृहिधर्मं प्रत्यपद्यन्त। पृथ्वीनाथो निजं जनकं जैनधर्मरतं कृत्वा तस्मिन् क्रमागते राज्येऽस्थापयत् । स्थविरेणापि तेन पुत्रगिरोऽनुल्लङ्घ्यतया तद्राज्यमादृतम् । पिता निजात्मजं तं राजेन्द्रं गन्तुकाममपि दृढाऽऽग्रहात् तत्राऽतिष्ठिपत् । स पितुश्चित्तं तापयितुं कतिचिद्दिनानि तस्थौ, तस्याऽल्पयापि स्थित्या प्रजा हृदि मुमुदिरे । श्रीविजयो राजाऽनल्पसम्पदा राज्यश्रिया सर्वाः प्रजा आर्हते धर्मे प्रवर्तयन् रराज । अन्येद्युर्विजयो नृपोऽल्पापराधान् वन्दिनो दयया क्षणाद् अमोचयत् । तथा गुप्तिदुःखस्थितं स्वदुष्कर्माणि शोचन्तं दुराशयं सिंहसारं मुहुर्मुहुः परं दुःसहं दुःखमनुभाव्य भ्रातृव्यत्वात् कियता कालेन स्वदेशान्निरवासयत्, तथा च कृत्वा राज्यलीलां तनोति ।

अथ श्रीजयानन्दः प्रस्तावे निजं जनकं भक्त्या वन्दित्वा आपृच्छ्य च, स्वमातृप्रभृतीन् प्रणामादि-

भिरभ्यर्च्य, कांश्चिद् गिरा परान् दृशा अन्यांश्च वात्सल्यतः संतोष्य, राजमान्यान् अमात्यादीन् वृद्धान् पौरान् जानपदांश्च सर्वाः प्रजा हितोक्तिभिरभिनन्द्य, तैः सर्वैरान्तरप्रीति-भक्त्युल्लासपुरस्सरम् अनुगम्यमानो, बलान्वितैः षोडशसहस्रक्ष्माभृद्भिः तत्क्षणागतैरसङ्ख्यैर्नभश्चराधीशैः स्वपार्श्वगैश्च चतुरैश्चतुरङ्गचमूचक्रैरन्वीयमानः, स्वजन्मभूमिपुरात् सानन्दं स्वपुरं प्रति प्रास्थित । 'अस्माकं प्रभोः प्रतिमल्लः समो वा भुवि कोऽपि नास्ति' इतीव घोषयद्भिः सङ्ख्यातीतैस्तद्वाद्यैः क्ष्माकुक्षिम्भरिभिर्भूरिनिर्घोषैर्दिशः पूरयन्, शत्रुवृन्दानि त्रासयन् मित्राणि चाऽऽश्वासयन्निव प्रयाणानि प्रयच्छन् क्वाऽप्यरण्ये सरित्तटे श्रीजयानन्दः स्कन्धावारं न्यवेशयत् । तत्र देवार्चाद्यखिलं कृत्वा कारयित्वा च, ततस्तातराज्यमान्यान् बलादपि व्यावर्तयत् । स उद्वसं सैन्यैर्वासयन् स्वल्पैः प्रयाणैर्लक्ष्मीपुरं प्राप । भूपतिर्महद्भिरुत्सवै राज्यमध्ये प्राप्तः, राज्यं च पालयन् यथासुखं भोगान् भुङ्क्ते । सर्वे भूचरा नभश्चराः सैनिकाश्च नरेश्वरं नत्वा स्वावासं च गत्वा सुखमभजन् । अस्मिन् भुवनैकवीरे भुवं प्रशासति सति नीरेऽपि जलचरजीवहरः कश्चिन्नास्ति । स्थलचराः खचराश्च सर्वे उज्झितपरोत्थभयाऽतिरेका अन्योन्यं प्रीतिं दधुः । तत्र अकालजन्म-मरणे ऋणे रणे वा काचिद् वितथाऽपि कथा नाऽऽसीत् । अत्र प्रचण्डः करः करिणां रणेषु निरीक्ष्यते, न तु नृणां गणेषु । पुनस्तत्र दण्डश्चैत्यश्रृङ्गेषु, सरोगता[1] जलरुहादिकेऽर्थे, स्नेहक्षयो[2] दीपादौ, सकण्टकत्वं मृणालनाल-बब्बूलसुख्येषु, कौटिल्यवृत्तिस्तटिनीप्रवाहादिषु, कलङ्कभृत्त्वं च कलाभृद्बिम्बे[3], न कदापि लोके । तथा

---

१ सर –सरोवर गच्छन्ति–प्राप्नुवन्तीति सरोगास्तेषा भावः सरोगता । २ स्नेहस्य–तैलस्य क्षयः । ३ चन्द्रबिम्बे ।

गावो महिष्यश्च घटाद्यधिकदुग्धदाः, वसुन्धराः स्थाने स्थाने धान्य-तृणैरतिपूरिताः, मेघा यथाकामं प्रवर्षिणः, षडार्तवा[1] वृक्षाः सदा पुष्प-फलैर्भृताः, रत्न-सुवर्णादिखानयस्तद्भाग्याद् दत्तदर्शना गिरौ गिरौ भूम्यां च शतशोऽपि द्राक् प्रादुर्भवन्ति, प्रजानां पुरातना निधयः सुप्रापा बभूवुः, नार्यः सुशीलाः सुगुणाश्च, पदे पदे सुखानि, द्यूत-मद्य-वेश्या-परस्त्री-चौर्य-मृगया-ऽऽमिषैर्व्यसनैः केषाञ्चित् किञ्चिदपि सम्बन्धो नेक्ष्यते । यस्मिन् राज्ये न स्व-परचक्राणां भयं, नोपसर्गभयम्, अतिवृष्टेरवृष्टेर्वा[2] न भयं, कलेर्डमरस्य च भयं नास्ति । नृपमहद्भाग्यतो दंश-मशकादीनां शलभ-मूषकादिसमूहानां च भयं स्वप्नेऽपि नैवाऽऽसीत् । भरतेश्वरवद् एष दिव्यर्द्धिस्तिसृभिः शक्तिभिः, न्यायैः, विविधैरुपायैः, बलैः, प्रधानैः, मन्त्र्यादिभिः, राष्ट्रैः, कोशादिकैः, दीक्ष्यादिभिश्च गुणैः सर्वतः सम्पूर्णं सर्वं राज्यं पालयति ।

अथ सुकृतज्ञः श्रीविजयो राजा लक्षाधिकाः समोश्चतुर्विधं सुकृतं समाचरन्, सर्वतो धर्मसाम्राज्यं पोषयन्, प्रजाश्च तोषयन् निःस्पृहोऽपि तद्राज्यम् अजातशत्रुरपालयत्[3] । प्रजासु वत्सलः स सर्वाः प्रजाः सुखाकरोत्, जीर्णोद्धारादिभिश्च स्ववित्तम् अकृतार्थयत् । अथ श्रीजयानन्दनरेन्द्रस्याऽनुज्ञया तस्यो[4]ऽनुजं, सर्वसामन्ता-ऽमात्यादिसम्मतं, प्रजाहितं, विनीतं, धीरं, गुणैरनुत्तरम्, उत्तमं, गम्भीरं, योग्यं, महातेजस्विनाम् आद्यं, माद्यद्धर्मगुणं, स्थिरं शतानन्दाभिधानं सुतं शुभे दिने सोत्सवं निजराज्येऽतिष्ठिपत् । अस्मिन् राज्यभारं नियोज्य धर्मनिश्चलो निश्चिन्तः श्रीविजयः स्वान् स्वप्रजाश्चाऽनुज्ञाप्य, स्वपुनर्भूपप्रथि-

१ षण्णाम् ऋतूनां सम्बन्धिनः । २ वर्षान् । ३ न जातः शत्रुर्यस्य सः । ४ श्रीजयानन्दस्य ।

तमहोत्सवः, निःसङ्गताऽर्थिभिर्बहुभिः सह सङ्गतः, अनेकाऽर्थिनाम् अर्थितप्रदायिभिर्योग्यैः परिवृतः, प्रौढं सुखवाहनमारूढः, गीत-सङ्गीत-वादित्रनादैः पृथिवीमामोदयन्, पुरान्तः संचरन् सर्वाः प्रजा दृग्भिः प्रमोदयन्, जिनमतं प्रभावयन्, प्रणमतश्च परितोषयन् भाग्यात् तत्कालागतस्य आगमसागरसद्गुरोः समीपे समुपेत्य तपस्याम् उपात्तवान् । श्रीशतानन्दभूपः स्वपितृदीक्षाक्षणोत्पन्नखेद-हर्षद्वयः पितृराजर्षि-प्रभृतीन् मुनीन् वन्दित्वा ससैन्यः सपरिच्छदो गृहमागतः। निजयराजर्षिर्दूरीकृताऽऽन्तरशात्रवो गुरुसेवया क्रमाद् व्यक्षशिक्षाद्वयीदक्षो जज्ञे । स सत्त्ववान् मुनिरधीतसर्वसिद्धान्तस्तत्त्वज्ञो जितेन्द्रियः प्रशान्तो विनयी नयी निपुणोऽनगारगुणैराढ्यः तपःकर्मणि समर्थः कर्मक्षयाय गुरुभिः समं पृथिव्यां व्यचरत् । अथ शतानन्दो भूपोऽर्हद्धर्ममाराधयन् कतिपयदिनान् निजे राज्ये स्थित्वा, धीमान् विनीतो स्निग्धश्च भक्त्या स्वाग्रजं श्रीजयानन्दं सेवितुं स्पृहयन्, स्वप्रत्ययिकमन्त्रिषु राज्यचिन्तादि निक्षिप्य सारसैन्यो लक्ष्मीपुरं पुरं प्रति प्रतस्थे । सोऽल्पैः प्रयाणैस्तत्पुरं प्रापत्, तं च सम्राजं ननाम । नरेन्द्रचक्रवर्ती भक्ति-वर्तिनं स्वानुजं बहुभिः सत्कारैर्मान-सम्मानैश्चाऽपिप्रिणत् । स सम्राट् कुसुमैरिव समस्तविश्वम्भराधीश-शिरोभिः पूज्यमानक्रमाम्भोजः क्षितौ जयति ।

अन्यदा राजाधिराजः श्रीमान् जयानन्दः श्रीशतानन्दादिभिः समं राजपाटिकायां मुदा यान् यावत् पुराद् बहिर्ययौ तावद् अन्याऽध्वना एकत ऐहिरेयाहिरापरान् परोलक्षान् जनान् दृष्ट्वा तेभ्यः कमपि

१ दीक्षाम् । २ 'एहि रे याहि रे' इति सातत्येनोच्यते यस्या क्रियाया सा एहिरेयाहिरा, तत्क्रियातत्परान् ।

जनं निजपदातिनाऽऽकार्याऽपृच्छत्—'भद्र! एषां पुंसां गमा-ऽऽगमौ कुतः ?'। सोऽपि नृपं नत्वाऽऽख्यत्—"स्वामिन्! मनोरमे पूर्वोद्याने जयनामा तापसाग्रणी राजर्षिः समायातः, स शमी दमी यमी च सुदुस्तपं पञ्चाग्नितपस्तप्यते, तं नन्तुममी जना यान्ति। तत्र गत्वा एके पूजोपस्करभृत्करा विवेकेन अर्चयन्ति, अन्ये स्वर्णादिकुसुमैः, अपरे वस्त्राद्यैः, केचन पुनरङ्गसंवाहनाद्यैर्मुदा सत्कुर्वते; परम् एष निरीहाणामवधिस्तपसां च निधिः सत्कारैर्न तुष्यति, तैर्विना च न रुष्यति। अस्य हि निरीहस्य, शत्रौ मित्रे तृणे स्त्रियां मणौ मृदि च तुल्यान्तःकरणस्य, दुरन्तपापतमोविवस्वतः[1], स्वपुण्यभराद् जगत्पावित्र्यकारिणः, नित्यं त्रिः स्नातुः, जटामुकुटधारिणः, त्वग्वासांसि वसानस्य, कन्द-मूल-फलाशिनः, मृगचर्मधारिणः, नित्यं सन्ध्याविधि-ध्यानविधायिनः, त्यक्तनिद्रस्य, देहेऽपि सुखमनिच्छतः, वनवासकारिणः, सर्वशास्त्राऽभ्यासवतश्च भद्रस्य महात्मनो गुणान् लेशेनापि वक्तुं कः पटुवागपि समर्थः?। अस्य हि महात्मनो भक्त्या भद्रं भवति, इत्यत एते भवभीरवः पूर्जना यान्ति आयान्ति च"। राजाधिराजः सुदर्शनः[2] श्रीजयानन्दस्तच्छ्रुत्वा चित्तेऽचिन्तयत्—"इयं भवस्थितिर्विचित्रा। अहो! प्राणिनामज्ञानं ध्रुवं दुरुच्छेदं, घनाऽभ्रवत् सुघनम्, अनन्तं, कालरात्रिरूपमिव महाभयप्रदं, सर्वसौख्यहरं, मूर्तं पापं, सर्वसन्मार्गवृत्तीनामावरणस्य परं कारणं, दुर्दशानां निदानं, तिर्यग्-नरकप्रदानं, सर्वदुःखानां प्रसवः, सर्वपापकदलीगृहं, समग्राणां मिथ्यातत्त्ववीरुधां कन्दः, विषय-कषायकूलङ्कषा[3]गिरिः, पटुसुसंविदां[4] च पाटच्चरः[5]। अज्ञानं भवनाटकगोचरं

१ विवस्वान्—सूर्यः। २ सुष्ठु दर्शनं—सम्यक्त्वं यस्य सः। ३ कूलङ्कषा-नदी। ४ कुशलसुज्ञानानाम्। ५ चौरः।

यद् वैचित्र्यं सूत्रयति ततश्चेतनोऽपि सुचिरं दृषत्कल्पो जायते, येन जीवो गतेन्द्रियवत् पञ्चेन्द्रियाणां व्यापारेऽपि सम्यग् निर्वेदितुं न पार्यते । अज्ञानं हि साक्षादेवाऽन्धतमसं प्राणिनां तत्त्वदृग्हर्तृ, तत् सतां दूरापास्ततमम् । तद् मयाऽयं पितृव्योऽज्ञानहराद् ज्ञानाऽमृताञ्जनस्य प्रयोगाद् आशु सुदर्शनो विधेयः" । इति स्वचित्तान्तर्विचिन्त्य सुधीस्तत्कालोत्पन्नधीः श्रीजयानन्दभूधवः स्वपितृव्यप्रतिबोधाय प्रज्ञप्तिदेवतां स्मृत्वा तदुपायं पप्रच्छ । साऽपि विद्यादेवी साक्षाद्भूत्वा तमुत्तमं भूपेन्द्रम् आयतौ तद्बोधोपायं न्यक्षेण प्रत्याचचक्षे । तथाहि—"एष तापसर्षिर्यत्र पञ्चाग्निसाधनं विधत्ते तत्र पूर्वस्यां दिशि महत्तमे ज्योतिःस्थाने शुष्कशुषिरस्थूलप्रलम्बितकाष्ठे काष्ठाऽऽभोगभोगभृद् भुजगो वर्तते, दक्षिणस्यां बृहदिन्धनमध्ये ज्वालामालातपाकुलो वित्रस्यन् सरटो वर्तते, पश्चिमायां दिशि अग्निस्थाने तापाकुलतयाऽत्यन्तं तरला उपदेहिका ज्वलन्ति, उत्तरस्यां तु दिशि बृहद्भानुस्थाने काष्ठान्तः तापार्दिताः प्रायो मृता अनर्गला मण्डूक्यः सन्ति । इत्येतान् पञ्चेन्द्रियान् देहिनोऽग्निभयद्रुतान् दर्शयित्वा, एधान् शीघ्रं विध्याप्य, तं तापसेन्द्रं पितृव्यं मृदूक्तिभिर्दयाधर्मं प्ररूप्य प्रतिपाद्य च प्रतिबोधयेः" । इत्युक्त्वा सा तिरोऽधत्त । अथ परमतत्त्वधीर्नरनायकः पितृव्यं विरोधाऽबाधिते जिनप्रवचने नेतुमनास्तं मार्गं त्यक्त्वा परं मार्गमादाय तत्र प्रासवान्, समस्तांश्च जनान् दूरे कृत्वा निजं पितृव्यं सादरं मनाग् नमन् निजगाद—"समग्रधर्मजीवितं दयारूपं धर्मस्वरूपं शृणु । पुरा पुराणैः सर्वेष्वपि दर्शनेषु दयैव पुरस्कृता, सा हि सर्वधर्मस्य रह-

१ कार्त्स्न्येन—साकल्येन । २ काष्ठविस्तारप्रमाणशरीरधारी । ३ कीटविशेषाः, भाषायाम्—'उधइ' । ४ अग्निस्थाने । ५ काष्ठानि ।

स्वभूता प्रभूतसम्पत्ति-सुख-सिद्धिहेतुश्च। तात ! सा दया यदि सुकृतार्थशिल्पैर्गुणैकतल्पैः कल्पैर्विकल्पैर्विना विधीयते तदा समग्रं तपः सफलं स्यात् । तदुक्तम्—

"ददातु दानं विदधातु मौनं, वेदादिकं वाऽपि विदाङ्करोतु ।
देवादिकं ध्यायतु सन्ततं वा, न चेद् दया निष्फलमेव सर्वम् ॥ १ ॥
न सा दीक्षा न सा भिक्षा, न तद्दानं न तत्तपः ।
न तद् ध्यानं न तद् मौनं, दया यत्र न विद्यते" ॥ २ ॥

"बुद्धिमन्! तात! दयामूलमेव सर्वं धर्मं बुध्यस्व, अतः परं सुखसाधनं श्रेयो नास्ति। यस्य देहिनो हृदयोदरे दयाऽभ्युदयते स ससभेदेनाऽपि दरेण[1] नाऽभिभूयते । दया हि सर्वजीवानाम् अजीवानां च स्वरूपस्य सर्वथा परिज्ञाने पालने च स्फुटीभवेत् । तदुक्तम्—

"जो[2] जीवे विआणइ, अजीवे वि विआणइ । जीवा-ऽजीवे विआणंतो, सो हु नाहिइ संजमं" ।

आर्हतत्वादेः सूक्ष्मत्वाद् यैर्जीवा-ऽजीवस्वरूपं सम्यग् न परिज्ञायते तैर्दया कथं पाल्यते ?। उक्तं च—

"जो[3] जीवे वि न याणेइ, अजीवे वि न याणइ । जीवा-ऽजीवे अयाणंतो, कहं सो नाहिइ संजमं ?" ॥ १ ॥

सम्यग्जिनागमाऽभ्यासं विना तदुपदेशकांश्च गुरून् विना दयांशोऽपि नैवाऽवगम्यते । यथा यद्यपि

१ भयेन। २ यो जीवान् विजानाति, अजीवानपि विजानाति। जीवाऽजीवान् विजानन्, स खलु ज्ञास्यति संयमम् ॥ १ ॥
३ यो जीवानपि न जानाति, अजीवानपि न जानाति । जीवा-ऽजीवान् अजानन्, कथं स ज्ञास्यति संयमम्? ॥ १ ॥

निध्यौ-षधी-मणीनां खानयः पृथिव्यां पदे पदे सन्ति, परं तद्देशकं सिद्धनरं विना कैरपि नाऽऽप्यन्ते, तथा अर्हदागम-गुरून् विना प्रायः सताम् अल्पकर्मणामपि दयामूलस्य धर्मस्याऽवाप्तिर्दुर्लभा । दयाधर्मप्रकाशकं सम्यक्शास्त्रम् आप्तोदितं, तच्च सद्भिरर्हन्मते एवाऽऽप्यं, नाऽन्यमतेषु । तत्तु आधेयम् आधारं विना न तिष्ठति, ततो योगोत्कृष्टः सम्यक्क्रियादिभाग् गुरुः श्रुताधारः । जगत्त्रयेऽपि जिनप्रवचनात् परं सारं नास्ति, यतोऽत्रैव देवादित्रिकं[1] ज्ञानादित्रिकं[2] चाऽवाप्यते, नाऽन्यत्र । जीवो देवादित्रिकस्य ज्ञानादित्रिकस्य च भावादेव लाभे केवलज्ञानसम्पदं लभते । तत्त्वज्ञैरिदं दयात्मकं दयासारं दयामार्गस्य च प्रकाशकं तदेव योगरूपं प्रकाश्यते । एकां सम्यग्दयां विना मौण्ड्येन न, मौनेन न, नाग्न्येन न, वल्कलैर्न, जटाभिर्न, स्नानैर्न, परैरग्निहोत्रादिभिर्न, कन्द-मूल-फलाहारैर्न, अनशनैर्न, मृगादिचर्मभिर्न, चण्डैरपि पाखण्डैर्न, पञ्चाग्निप्रमुखैः कष्टैर्न, चान्द्रायणादितपोभिर्न, ध्यान-जप-नियमैर्न, वेदा-ऽऽगमैर्न, यागादिभिर्न, देवार्चनैर्न, आतापनादिभिः क्लेशैर्न, एकादश्यादिभिर्व्रतैर्न, उग्राभिर्विद्याभिर्न, भूमिशयनादिभिर्न, सांन्यासिकभावेन श्रमणत्वेन बौद्धादिदीक्षया च न, भिक्षया न, आसनैश्च न स्वस्य सिद्धिः प्रसाध्यते । तदुक्तं परसमयेऽपि—

"दयानदीमहातीरे, सर्वे धर्मास्तृणाऽङ्कुराः । तस्यां शोषमुपेतायां, कियन्नन्दन्ति ते भुवि ?" ॥ १ ॥

तस्मात् तात ! दयैव समीचीना पाल्यताम्, अस्मिंस्तु पञ्चाग्नितपसि दयाया लेशोऽपि न दृश्यते ।

---

१ देव-गुरु-धर्मरूपम् । २ ज्ञान दर्शन-चारित्ररूपम् ।

तथाहि—"प्रथमेऽग्निस्थाने बृहति दारुणि अन्तः फणी ज्वलन्नस्ति, तात! तं प्राग् निरूपय"। ततो द्वितीयादिष्वपि वह्निस्थानेषु काष्ठान्तःस्थान् क्रमेण सरटो-पदेहिका-मण्डूकीजीवान् अग्नितापाऽतिदुःखितान् दर्शयित्वा सोऽस्मिन् तपसि प्राणिपीडास्पदं हिंसाम् असाधयत्। ततो हेतु-दृष्टान्त-युक्त्या-गमैः पृथिव्यादीनामपि सजीवत्वं प्रसाध्य प्रोवाच—'तात! तत्त्वा-ऽतत्त्वविवेचिनां भवादृशानां पूज्यानां हिंसा नोचिता'। इत्यादिकं श्रीजयानन्दभूपतेर्वचः श्रुत्वा श्रीजयस्तापसराजर्षिः प्रत्यबुध्यत, महतां हि वचः प्राय आदेयं निष्फलं न भवति, सुधामेघधाराः किं कदापि क्वापि निष्फला भवन्ति?। तद्गिरा भवोद्विग्नः स तापसाग्रणीः शुद्धधर्मद्रुसमूलं सम्यक्त्वम् आदित, निःस्पृहत्वाच्च तत्कालं यतित्वं प्रतिपत्तुं तापसीं तपस्यां त्यजन् यावता श्रीजयानन्दनरेन्द्रं प्रति जल्पति तावत् तत्र कश्चित् श्रीगुर्वागमनं न्यवेदयत्। ततो राज्ञोदितम्—'कस्मिन् स्थाने कोऽयं गुरुः?'। सोऽपि सगौरवं जगौ—'एतस्य पुरस्य पूर्वस्यां दिशि चम्पकोद्याने मुनिपञ्चशतीसारपरिवारो विख्यातस्तपोनिधिरागमसागरः सूरिः समागमत्, तेन समं विजयोऽपि राजर्षिः समागमत्'। इति तद्वचसा तुष्टः श्रीजयानन्दो नृपेन्द्रः पारितोषिकदानेन तं संतोष्य, मुदा पुरान्तरागत्य स्वान्तःपुरपुरन्ध्र्यादीन् सर्वतः सर्वजनान् श्रीगुर्वागमनं व्यजिज्ञपत्। अथ प्रबुद्धं स्वपितृव्यं श्रीजयं तापसं पुरस्कृत्य ततः स्थानात् सर्वैः समन्वितः समग्रसैन्य-सर्वर्द्धिशोभाभरभासुरः सुरेन्द्र इव नरेन्द्रस्तद्वनमभूषयत्। दूरादपि गुरुदत्तदृक् पञ्चाभिगमभेदाद्यं सर्वं मुदा सत्यापयन् तिस्रः प्रदक्षिणा दत्त्वा अस्ताऽघं तं श्रीगुरुं विजयादिकांश्च तत्परिवारमुनीन् अवन्दत। ततो भवपार-पापपारप्रदायिनीं स्तुतिं कृत्वा पृथ्वी-

पतिर्यथास्थानमुपाविशत् । सूरिः सपितृव्यं सपरिच्छदं च उर्वीशवासवं विधिना धर्मलाभाशिषा हृदि आनन्दयत् । स स्वदेशनासुधासारैः पुरःस्थितान् अब्दो[1] द्रूनिव[2] पुण्यपल्लवैरुन्निद्रयामास । सर्वरसान्वितां कान्तां शान्तां तद्देशनां हृदाऽऽलिङ्य कैर्नृभिर्महानन्दसुखं नाऽलम्भि ? । गुरुदेशनां श्रुत्वा बहवो भव्याः प्रबुद्धाः । तत्र केचित् सम्यक्त्वं, केऽप्यणुव्रतानि, केचन तु महाव्रतानि प्रपेदिरे । जयराजतपोधनः प्राक् प्रबुद्धोऽपि अर्हद्दीक्षामादातुमुद्यतोऽभूत् । ततः स दृढवैराग्यरङ्गेण भ्रातृव्यपृथ्वीशकृतोत्सवैः संसाराऽरण्य-भयध्वंसि सर्वचारित्रं जगृहे । स जयराजर्षिर्विजयमहर्षिणा समं गुरोर्गिरा द्विधा शिक्षां शिक्षते । अथ महीपतिर्गुरून्, पिता-पितृव्यौ राजर्षी, तत्परिवारस्थितांश्च अन्यानपि गुणसेवधीन् मुनीन् परमानन्दात् प्रणम्य आपृच्छ्य च हृदयान्तः प्रमुदितः सपरिच्छदः स्वसौधं प्राप्तः ।

श्रीजयानन्दनृपेन्द्रस्त्रिखण्डाऽखण्डसाम्राज्यं स्वात्मानमिव पालयन्, प्रजाः स्वप्रजा[3] इव लालयन्, अन्यायमार्गगाणां शिक्षां प्रयच्छन्, सर्वतः सर्वान् न्यायान् एधयन्[4], पितृव्यस्य पितुश्च चारु चरितं स्मारं स्मारं विशेषतः पुण्योद्यतोऽभूत् । प्रधानतत्त्ववित् स धर्मा-ऽर्थ-कामेषु त्रिषु सत्त्व-रज-स्तमोगुणत्रये स्वस्वावसरेऽवर्तत । यतः—

"धर्मा-ऽर्थ-कामेषु मिथो, व्याबाधां परिहृत्य यः ।
प्रवर्तते कृती[5] शश्वत्, तस्य लोकद्वयं शुभम्" ॥ १ ॥

१ मेघः । २ वृक्षानिव । ३ स्वसन्ततीः । ४ वर्धयन् । ५ पण्डितः—विद्वान् ।

तत्प्रभावाद् राज्ञो मुख्यः फलोदयः सौख्यं बभूव, अपरश्च फलोदयः पुत्र-पौत्राद्यपत्यादिसन्तत्यात्मा अभवत् । अस्य विश्वेश्वरस्य लक्षमिताः पुत्रा दक्षाः, पवित्रा, नवयौवनाः, सत्यप्रतिज्ञा, अधीतसर्वशास्त्राः, कलाविदो, धीरोद्धता, धनुष्मन्तो, मतिमन्तः, सुगुणा, महाशयाः, प्रगुणाचारा, निरामयाः, स्फाराकारा, लोकप्रियाः, प्रियाऽऽयत्तकामभोगप्रवृत्तयः, पित्रादेशवशाद् देश-पुर-ग्रामासवृत्तयः, प्रौढराजकुलोत्पन्नकन्यापाणिगृहीतयः, श्रीजैनधर्म-कर्मसु सर्वतो गृहीतयत्ना, विनयेन नम्रकाया, महोत्साहा, महौजसः, पितृभक्ता, न्याययुक्ता, देव-गुरु-सधर्मणां पूजासु चिरं प्रसक्ता, गजा-ऽश्वादिबलोपेता, भुजाबलैः समवेताः, कोशादिसम्पद्भिः सुभगम्भावुका, धैर्या[1]ऽधरितभूधरा, गाम्भीर्यजितसागराः, सौन्दर्यजितमन्मथाः, चन्द्रमदच्छेदिकीर्त्युज्ज्वलीकृताऽचलाः, स्वामिभक्तिनिष्णाताः[2], सर्वसेवकवत्सलाः, कृतज्ञाः, प्रभाववन्तः, सदा शूराः, समरे शत्रुषु क्रूराः, आज्ञावन्तः, प्रतापाढ्याः, परिपक्वमहाबुद्धयो, वीराधिवीराः, सुसंस्थानाः, सलक्षणाश्च आसन् । श्रीजयानन्दराजाधिराजः सूर्यवत् समन्ताद् जाग्रत्प्रतापोऽपि क्रूरतमोग्रासी, दासीकृतसुरा-ऽसुरः, अनस्तमित[3]तेजस्कः, सर्वदा शुभः, सौजस्कः, सर्वसुखाकरकरः, स्थिरः, अग्रस्तमण्डलः, क्रूराऽपराभूतः, कमलावलिभिः समं कुवलयं[4] स्मेरीकुर्वन् अतिशीतलः शोभते । स धनुःशतोच्छ्रयो, द्विलक्षपूर्वायुष्कः, कनकवर्णतनुभृत्, सदानन्दो, निरामयो, राज्यकनकमुद्रायां न्यायमाणिक्यभृत्, श्रीमत्सुविधितीर्थङ्करस्य शासनोद्द्योतभानुमान् मुदा महीं शास्ति । पृथ्वीपतिः स दुःस्थिता-ऽनाथ-दीनेभ्यो दानार्थं

१ धैर्येण अधरीकृता भूधरा यैस्ते । २ स्वामिभक्तौ कुशलाः । ३ न अस्तमितं तेजो यस्य सः । ४ पृथ्वीमण्डलम् ।

प्रतिस्थानं दानमण्डपान् सत्रागाराभिरामान् अमण्डयत्, तत्र दानानि दीयन्ते, शयनाय च स्थानानि दत्त्वा कोटिशो वैदेशिका लोकाः सन्तोष्यन्ते । तेन नरेन्द्रेण अर्हद्भक्त्या प्रतिग्राम-पुरं जिनप्रासादाः प्रत्यक्षाः पुण्यराशय इव वितेनिरे, तेषु प्रासादेषु आर्हतीः प्रतिमा निर्माप्य प्रतिष्ठाप्य च न्यास्थत्, तासां नित्यं पूजाविधिं विधातुम् आरामवाप्यादि-ग्राम-ग्रासादिकान् दायान् ददे । स सप्तापि व्यसनानि सप्तसस्तिमांसीव न्यवारयत् ।

अथाऽन्येद्युः प्रसन्नचित्त उद्यानवनाधिकारी श्रीजयानन्दनृपेन्द्रस्य राजन्यसहस्रजन्यशोभां सभां समेत्य, प्रमोदात् तं राजराजं प्रणिपत्य, भक्त्या स्वभाले तिलकायमानं कराञ्जलिमारचय्य विज्ञपयामास—'भूपालसहस्रसेव्य! दिव्यर्द्धिभृत् स्वामिन्! कल्याणमालाकरणेन विश्वप्रमोदिगुर्वागमनोत्सवेन अद्य वर्द्धसे' । तदा स्वच्छमतिरानन्दसमुद्रचन्द्रः स गवेन्द्रोऽपृच्छत्—'विश्वगुरुर्गुणाब्धिः कः श्रीगुरुः कदाऽत्र वनं पवित्रयामास' । वनपालक आचचक्षे—'प्रभो! शृणु, निष्प्रतिमप्रभावो, नाम्ना वित्रासितदुःखमात्रो, गुणलक्ष्मीगेहम्, उत्पन्नलोकाधिकाऽवधिज्ञानः, प्रधानश्रमणैरुपासितः, सुचरित्रधुर्यो, अनवद्यसच्छायप्रदेशं प्रतिपद्य संस्थित आचार्यवर्यः श्रीचक्रायुधराजर्षिस्तव श्लाघ्यां भुवं समवासयत् । अगण्यानां प्राक्पुण्यानामुदयादेव अवश्यंभाविभद्राणां प्राणिनां सद्गुरुदर्शनं जायते । तदुपेत्य गुरुं वन्दस्व' । इति तस्य गिरा पुलकाङ्कुरितगात्रो नृपस्तस्मै अङ्गाभरण-वस्त्राणि ददे । ततः पटहोद्घोषणादिभिः समग्रसामग्रीं कृत्वा कारयित्वा

१ सूर्यः । २ पृथ्वीन्द्रः ।

च प्रजाः पुरस्कृत्य पट्टहस्तीन्द्रमारुह्य चामरा-ऽऽतपत्रशोभितो महताऽऽडम्बरेण गुरुं वन्दितुं प्रतस्थे"। रतिसुन्दर्यादिकाः सहस्रशो राज्ञ्योऽपि स्वस्वपरिवारसहिता गुरुं नन्तुं नृपमन्वचलन्। महर्द्ध्या सर्वां महीं मोहयन् राजकुञ्जरः सद्गुरोर्दर्शने जाते कुञ्जरादवरुह्य, द्विधा पञ्चाभिगमतत्परो, विवेकी विनयनम्रस्तिस्रः प्रदक्षिणा दत्त्वा, विधिना विद्याचारणश्रमणाग्रिमं चक्रायुधसूरिमवन्दत। सोऽपि धर्मलाभस्य दानतः श्रीजयानन्दममोदयत्। श्रीजयानन्दोऽपि प्रमोदोल्लसदाननस्तं विद्याचारणाचार्यं पर्यष्टौत्। क्रमेणाऽन्येऽपि नृपा अन्तःपुरपुरन्ध्रयः पौराद्याश्च वन्दित्वाऽस्ताविषुः। अथ तस्य गुरोः पुरः श्रीजयानन्दादिषु सर्वेषु यथास्थानमुपविष्टेषु गुरुस्तत्प्रबोधाय सुरा-ऽसुर-नराकीर्णपर्षदो हर्षदायिनीं देशनां प्रारेभे। गुरुस्तां सर्वसाधारणीं भवनाशिनीं देशनां दिशन्नपि श्रीजयानन्दादीन् प्रबोधयितुं तदन्तरा निजप्राग्भवसङ्गतान् तदीयप्राग्भवान् क्षीराश्रवलब्ध्या व्यक्त्या आख्यत्। तथाहि—

"आरामिकभवे सप्रेयसीद्वयस्य तव राजप्रसादतो देवपूजा महाफलाऽऽसीत्। तदनु तव मतिसुन्दरमन्त्रीशभवोऽभवत्, तत्रापि भवतः प्राग्भवप्रिये अभूताम्। तत्र अतिबलराजर्षेरुत्तमम् अर्हद्धर्मं लब्ध्वा प्रेयसीभ्यां सह शुद्धमाराद्धवान्। ततस्त्वं पत्नीभ्यां सह शुक्रदेवालये देवत्वं प्रासः। ततश्च्युत्वा त्रिखण्डोर्वीभोक्ता भवानभूत्। तव द्वे प्राग्भवप्रिये इहभवेऽपि राजकुलोद्भवे रतिसुन्दरी-विजयसुन्दर्यौ सतीशिरोमणी त्वन्मान्ये राज्ञ्यौ अजायेताम्। यस्य त्वं मतिसुन्दरो मन्त्री बभूविथ स नरवीरो राजा त्वया जिनधर्मं ग्राहितो महोद्यमाद् आभवं तमाराध्य देवोऽभवत्, ततश्च्युत्वा अस्मिन् भवे वैताढ्यक्षोणिभृत्श्रेणि-

द्वयसाम्राज्यभुक् चक्रबलपुत्रोऽहं चक्रायुधोऽभवम्। सोऽहं त्वज्जयाज्जातवैराग्यो मुनित्वतश्चतुर्ज्ञानी अस्मि। यत् पुरा मया त्वं स्वीकृते वद्ध्वा चारकेऽक्षेपि तत् त्वयाऽपि बद्ध्वाऽधुनाऽहं वज्रपञ्जरे क्षिप्तः। ततो मया त्वं शीघ्रं मुक्त्वा बहुमानितोऽभवः, धर्मोपकारतश्च आवयोर्दृढा प्रीतिरासीत्, तेनाऽत्रापि भवे त्वयाऽहं सत्वरं मोचितः, तुभ्यं च मया प्रीतिपूर्वं कन्या-राज्यादि ददे। प्राग्भवे त्वया मम धर्मोपकारः कृतः, तेन भवते विशिष्य धर्मोपकारं कर्तुमिच्छता मयाऽत्रागमनं चक्रे। त्वया मया च मन्त्र्यु-नीशयोर्भवे यः कल्पद्रुमोपमः शुद्धः श्राद्धधर्मः कृतस्तन्महिम्ना इह भवे आवयोर्भोगसौख्यसमन्विता अखण्डा राज्यसम्पदभूत्, तव च धर्मे श्रद्धाधिक्याद् विशिष्याऽभवत्। त्वयाऽमात्यस्य भवे 'एतेऽमृतोपमा आहारा न शुध्यन्ति तत्किं विषं शुध्यति? किं वा तव नेत्रे गते?' इत्यादि मुनेरुक्त्वा यत्कर्म निबद्धं तत्कर्मणोऽनुतापाद्यैः क्षेपेऽपि केनचिद् अंशेनाऽवशेषीभूतेन त्वं कियत्क्षणं चक्षुर्विकलो जातः। तव आद्यया पत्न्या यदुक्तमासीत्— 'जैनर्षयो निर्दाक्षिण्या भवन्ति, दाक्षिण्यं शुद्धकुले भवति, तच्च कुलमेषां नैव ज्ञायते' इति कुलनिन्दया पश्चात्तापाऽवशेषीभूतेन कर्मणा हीनकुले गणिकापुत्रीत्वेनोत्पन्ना। अन्यया पत्न्या यदुक्तमासीत्—'अयमन्धो भिल्लेभ्यो दीयताम्' इत्यादिनिन्दया अनुतापाऽवशेषकर्मणा विजयसुन्दरी भिल्लस्वरूपस्य तयाऽदायि, तस्याश्च वियोगाद् आन्ध्यमपि जातम्, पुनः पुण्योदयाद् यथा पूर्वं त्वं सज्जनेत्रो जातस्तथा विजयसुन्दर्यपि एकाहम् अन्धत्वमनुभूय स्वभावस्था जाता। प्राग्भवस्नेहाद् द्वयोरपि त्वयि दृढस्नेहोऽभूत्। अथ भूपते! सम्प्रति सिंहसारस्य प्राग्भवान् शृणु—नरवीरनृपस्य वसुसारपुरोधास्त्वया सर्वसाक्षात् कौलत्वेन

दत्ततिरस्कृती राज्ञा च दत्तप्रवासः पापं कृत्वा चिरं भवं भ्रान्त्वा कस्मिंश्चिद्भवे पारिव्राज्यमङ्गीकृत्य किञ्चित्प्रपाल्य ज्योतिःसुरोऽभवत्। ततश्च्युत्वा पापानुबन्धिसुकृतोदयाद् भवद्भ्राता भवत्पितृव्यजयाङ्गजः सिंहसारोऽभवत्। 'स्वामिन्! अस्य चण्डालस्य सङ्गं नाऽर्हसि' इति यत्त्वया प्राग् राज्ञोऽग्रे भाषितं ततस्तद्दोषस्त्वयि ददे, सत्कर्मोदयतश्च तव श्वपाकताकलङ्को व्यलीकत्वाद् व्यलीयत। स कौलादिप्राग्भवाऽभ्यस्ताऽप्रशस्ताचरणोद्यतः, क्रूरप्रकृतिः, गाढमायावान्, सर्वदोषभृद्, निर्गुणो, निर्घृणः, कोपयुक्, पदे पदे स्वात्मक्लेशी, अन्यायी, दुर्भगो, लोभी, पापमतिः, निरङ्कुशो, धर्मद्वेषी, अर्हद्धर्मनाम्नाऽपि विशिष्याऽमर्षभृद्, अधर्मपक्षपाती। अयं सिंहसार उपकुर्वत्यपि त्वयि प्राग्भववैरतोऽन्तर्द्वेषं वहति, तेन हेतुनाऽसौ दुरात्मा तव चक्षुर्ग्रहणाद्यपि पापकर्माऽकरोत्। एवं पुण्य-पापफलव्यक्तिसम्बद्धान् प्राग्भवान् श्रुत्वा हृदि च धृत्वा सदा धर्मे उद्यमः कार्यः। यूयं वयं च प्राग्भवे सश्रद्धं शुद्धतमम् अर्हद्धर्मं समाराध्य पुण्यानुबन्धिपुण्या अभवाम'।

इति श्रुत्वा यावत्ते पूर्वभवस्थितिं मनोमध्ये धर्तुं क्षणं सतूष्णीकास्तिष्ठन्ति तावद् अमी श्रीजयानन्दराजेन्द्राद्याः सर्वेऽपि लघुकर्मतया स्वजातीरस्मरन्। प्राहुश्च—'भगवन्! भवद्वचस्तथ्यम्, यतो वयं जातजातिस्मराः सर्वमप्यदः संविद्मः। यथा भवता भवस्थितिरादिष्टा तथाऽस्माभिर्जातिस्मृत्याऽनुभूता'। पुनर्गुरुं नमस्कृत्य स्वच्छचित्तः श्रीजयानन्दभूपः पप्रच्छ—'भगवन्! मम पितुः पितृव्यस्य च दीक्षाऽऽदानदिनाद् अग्रे यः सम्बन्धस्तमादिश, पुरोगतिं च मोक्षं यावत् सर्वमधुना कथय'। इति राज्ञा प्रश्ने उदिते सति

गुरुः सस्नेहं जगौ–"राजन्! यदि तव श्रोतुमिच्छा तदा शृणु–दीक्षादिनात् पश्चात्तौ गुरुभिः सार्द्धं विजहतुः। द्वादशवत्सरीं यावत् शिक्षाद्वयनिष्ठितौ श्रीजयराजर्षि-श्रीविजयराजर्षी श्रुतपाठात् प्रत्युपेक्षादिक्रियाभ्यश्च जिनशासने कुशलौ अजायेताम्। तौ चिरन्तनमहर्षी निरतिचारचरणप्रवणौ, वसुन्धरां बोधयन्तौ, गुर्वाज्ञारतौ, सदा शुद्धक्रियाविधिनिरतौ, गाढगुरुभक्तिपरौ, क्षुल्लकसाधुषु वत्सलौ, वृद्धमुनिषु विनीतौ, सप्रेमाणौ, महर्षिषु वैयावृत्त्योद्यतौ, नित्यं तपस्करणतत्परौ, सप्तविंशत्याऽनगारगुणैः कलितौ, शमयुक्तौ, दमिनौ, राग-द्वेषमुक्तौ, महाशयौ, निःस्पृहौ, निर्ममौ, ग्रामादिषु अप्रतिबन्धौ, स्वशरीरेऽपि अप्रतिकर्माणौ, मानवर्जितौ, परीषहा-पसर्गाद्यैरक्षोभ्यौ, निर्भयौ, निर्मोहौ, सदा स्वात्महितयुक्तौ, सुचिरं भुवि विहृत्य स्वायुश्च प्रपूर्य पर्यन्तेऽनशनाद्यैः समाहितौ सनत्कुमारे माहेन्द्रे च महेन्द्रौ बभूवतुः। तौ सामानिकदेवाच्यौं महर्द्धिकौ महाद्युती दिव्यभोगैश्च सुखितौ क्रमात् सप्तसागरसंमितं किञ्चित्तदधिकं स्वायुः प्रपाल्य, ततश्च्युतौ विदेहेषु पृथग्देशेषु तौ द्वावपि प्रौढौ भूपती भूत्वा सद्राज्यं पालयिष्यतः। तत्र तौ जिनेन्द्रसमीपे संयमं प्रतिपद्य चिरं च प्रपाल्य कृतकर्मक्षयौ शिवं लप्स्येते"। सूरेर्मुखात् पितृ-पितृव्ययोरिति चरितं श्रुत्वा हृदि प्रमुदितो भूपतिस्तं नत्वा पुनः पप्रच्छ–'स्वामिन्! मदादीनां सर्वेषां, स्वस्य, सिंहस्य च अग्रे भवस्वरूपं मे मुदे सम्यगधुना प्रसादय। अहं च भव्योऽभव्यो वा?, भव्यश्चेद् अस्मिन् भवेऽन्यस्मिन् भवे वा शिवं गन्ताऽस्मि? इति मह्यं वद। अन्येऽपि मम पत्न्याद्याः कदा निर्वृतिं प्राप्स्यन्ति?, इत्यादि समस्तं ममाऽऽदिश। प्रभो! सिंहसारः कथं भूतः?, भावी पुनः कथम्?,

इदं स्वस्य च शिवासिं मेऽग्रतः प्रथयः' । मुनीश्वरश्चक्रायुध इमान् राज्ञोदितान् प्रश्नानवधार्य एवमभाषत—"राजन्! शृणु, त्वत्पत्न्यादयो ये श्रेयोऽर्थिनस्ते प्राय आसन्नसिद्धिका भव्या एव । तत्रापि त्वं त्वदीये प्राग्भवीये उभे प्रिये अहं च चारित्रमाराध्य अस्मिन्नेव भवे शिवं गन्तारः । केवलं भवान् भास्वानिव केवलज्ञानोद्द्योताद् जगदुद्द्योतयन्, सर्वमज्ञानध्वान्तं संहृत्य भव्यजीवसत्पद्मानां जीवा-ऽजीवान् भावान् प्रदर्श्य प्रबोध्य च, स्वपदाम्बुजैः सुचिरं धरित्रीं पवित्रीकृत्य, किञ्चिन्न्यूनं शरल्लक्षं केवलित्वं प्रपाल्य, पूर्णं लक्षम् उत्तमं यतिपर्यायं संपूर्य, शरदां चतुरशीतिं लक्षाः सर्वायुः पूर्णीकृत्य, सर्वाऽऽमयादिव्याबाधावर्जितः, सकलकर्मद्विषद्गणं च विजित्य महानन्दपदं लप्स्यते । अहमपि कियन्ति वर्षाणि विहृत्य पर्यन्ते केवलज्ञानमवाप्य शाश्वतसुखं भोक्ष्ये । सिंहस्तु प्रजापीडादिहेतुभिर्गुरुकर्मत्वाद् यथा राज्यभ्रंशादिदुःखान्यन्वभूत् तथा शृणु—यदा भवतः पित्रा सिंहः पुरान्निष्काशितस्ततः सोऽपि निर्गत्य चिरं भ्रान्तवान् । यत्र यत्र ग्रामे पुरे देशे वा स्वनिर्वाहार्थं गतः स्थितश्च तत्र तत्र आपदो, भीषणं दुर्भिक्षम्, ईतयश्च प्रायः प्रादुरासन् । ततो निमित्तैः शकुनैर्ज्ञानिगिरा च दुर्भिक्षादिकारणं बुद्ध्वा लोकैर्निर्भर्त्स्यते स्म, तथा कुपितैर्लोकैर्निष्काशिते सति यं यं भूपं भक्त्या सेवते स स प्रायो म्रियते । ततस्तत्सेवकैः कुतश्चिदपि तन्निर्णीय ताड्यते विडम्ब्यते च । एवं स घोरं पापफलं स्थाने स्थाने लब्धवान् । तथा पापोदयात् सर्वव्यसनासक्तः क्वचिच्चौर्ये रतः पापी तत्फलं पञ्चत्वं प्राप । स आपदां पदे सप्तमे नरके द्वात्रिंशत्सागरावधि भूरिदुःखौघमनुभविष्यति । तत उद्वृत्य मत्स्यादिभवान्तरैः सप्ताऽपि नरकान् अनन्तशः प्राप्स्यति । स सर्वतिर्यक्षु दुर्दैव—

दुर्नृजातिषु चाऽनन्तश उत्पद्य पुनः पुनः पापं सृजन् प्रत्येकं भ्रमिष्यति । इत्युग्रपापविपाकेन दुःखनिदर्शनं सिंहस्य वृत्तं निशम्याऽवगम्य च भो भव्याः! पापभिदि पुण्यमार्गे प्रयतध्वम् । हे राजन्! त्वया सह ये प्रव्रजिष्यन्ति ते जितबाह्या-ऽभ्यन्तरारिव्रजाः सुचारित्रान्विताः सर्वेऽपि क्रमात् स्वर्गादिषु गत्वा विदेहेषु ध्रुवं शिवं गमिष्यन्ति । इदं सर्वं स्वमनीषया न हि निवेदितं, किन्तु विदेहेषु विहरतो जिनान् नन्तुं पुण्डरीकिण्यां प्राप्तेन मया भव्यबोधार्थमर्हतो मुखाद् व्याख्यानान्तस्त्वद्वृत्तम् आदितः प्रोक्तं कार्त्स्न्येनाकर्ण्य महावधिज्ञानाद् ज्ञातवृत्तेन चाऽपि मया तूर्णं त्वत्प्रतिबोधार्थमागतेन सर्वमाख्यातम्। त्वया तु मह्यं प्राग्भवे शुद्धस्य जिनधर्मस्य प्रदानेन अत्यन्तोपकारः कृतः, ततोऽहमपि तस्याऽनृणीभावं कर्तुं विहरज्जिनसमीपे सर्वं त्वदादिवृत्तान्तं श्रुत्वा सम्प्रति चाऽत्रागत्य प्रत्युपकारधीर्भवते विशेषेण प्रतिबोधं वितरामि, भवाब्धेस्तारयामि, तद् भो! बुध्यस्व बुध्यस्व, मा प्रमादं कुरुष्व। विषयैर्हि मूढा मुह्यन्ति, न तु सन्तः कथञ्चन मुह्यन्ति। यत आसन्नसिद्धीनां महात्मनाम् इदमेव चिह्नं यद् विषयैर्न रज्यन्ति, स्वहिताय च यतन्ते। स्वस्य हितं तदेव यत्स्वार्थसाधकं, योऽत्र परत्र च सुखहेतुः स स्वार्थः। व्यवहारविशुद्धिः, अर्हत्पूजा, गुरुभक्तिः, इन्द्रियदमो, दान-शील-तपो-भावाः, दया, क्रियाराधनादयश्च, इत्येतानि मोक्षाङ्गत्वाद् धर्मरूपत्वाच्च जिनैः स्वहितमूचिरे। स्वहितार्थिभिः पञ्चविधोऽपि कामस्त्याज्यः, यतोऽसौ बुधाः शल्याद्युपमितीः स्मरन्ति । यदुक्तम्—

"सल्लं कामा विसं कामा, कामा आसीविसोवमा । कामे पत्थेमाणा, अकामा जन्ति दुग्गइं" ॥ १ ॥

---

१ शल्य कामा विष कामाः, कामा आशीविषोपमाः । कामान् प्रार्थयमाना, अकामा यान्ति दुर्गतिम् ॥१॥ (उत्त०अध्य०९)

इति श्रीचक्रायुधराजर्षेर्वाग्विपयीकृतं प्राग्भवोपात्तं सुकृतं कर्णयोरतिथीकृत्य परमानन्दमेदुरः श्रीजयानन्दभूधवः परमं वैराग्यं प्राप्य चारित्रग्रहणोत्सुको जातः । अथ श्रीगुरवे स्वाभिप्रायं निवेदयितुं विज्ञप्तिमातनोत्–'स्वामिन्! प्रसादं कृत्वा क्षणं प्रतीक्षस्व, यावत् स्वगृहं गत्वा निजे पुत्रे राज्यं दत्त्वाऽऽगच्छामि तावदत्र स्थातव्यम् । ततः सोत्सवं तवाऽन्तिके तपस्यां ग्रहीष्यामि, भवोद्विग्नस्य मम चित्तं राज्ये ईषदपि न रज्यते' । इति विज्ञाप्य गेहे गत्वा कुलानन्दाभिधाय स्वसूनवे महता महेन राज्यं दत्त्वा तं प्रति सरसां सुशिक्षां प्रोक्तवान्–'हे वत्स! त्वं सहोदरवत् प्रजाः पालयेः, एताः पालिताः सुखिताश्च कामधेनव इव सदाऽपि सर्वकामफलप्रदाः स्युः । प्रजापतीनां प्रजा एवाऽक्षयकोश उच्यते, ततस्ताः प्रयत्नतः पालनीयाः । तासां हि भाग्यैराशीर्वाग्भिश्च लालिता नृपा अम्बुभिर्लताव्राता इव प्रवर्धन्ते । वत्स ! प्रजाः सुखे दुःखे वा शयाने जागरेऽपि वा जातुचित् प्रजात्वं न व्यभिचरन्ति । अपि च, ये राजानः प्रजानामुत्सवैर्लक्ष्मीभिर्दानाद्यैः सुख-सन्तान-कुटुम्ब-प्रेमवृद्धिभिः समृद्धिभिर्यशोभिर्गुणैश्च मोदन्ते ते जगत्प्रिया भवन्ति । ते हि धन्या मान्याः सुकृतिनः कृतार्थाश्चिरजीविनो नयवित्ता यशस्विनश्चिरावस्थायिराज्याश्च स्युर्ये प्रजाहिताः स्युः । पुनर्हे वत्स! साम्राज्ये प्राप्तेऽपि यथा धर्मो न सीदति तथा विनयेषु नयेषु च त्वया शीघ्रं वर्तितव्यम् । धर्मेष्वपि आर्हतो धर्मश्चिन्तामणिरिवाऽद्भुतः सर्वेप्सितफलप्रदोऽस्ति, अतस्त्वया स एव वटवृक्षबीजवत् प्रयत्नतः शतशाखतां प्रापणीयः । त्वं तथा प्रयतो भूया यथा शास्त्रगिरां काचिद् बाधा न भवेत् । इह प्राग् असन्त्यपि सप्त व्यसनानि निवार्याणि, यतस्तानि **सदाचारवृक्षेषु कुठारा इवाऽऽचरन्ति ।**

तथा अधिकारि-नृप-सेवकान् पत्नी-पुत्र-प्रजादींश्च प्रति प्रीति-रती कुर्याः" । इत्याद्युक्त्वा तदादिकांश्च मोदयित्वा, अर्हच्चैत्येषु अष्टाह्निकामहान् निर्माय, साधर्मिकाणां विविधैर्वस्त्रा-ऽऽहारादिदानैर्विधिना वात्सल्यप्रतिपत्तीर्विधाप्य, अत्राऽमुत्र च हितावहां यशस्करीं सदाऽपि प्राक् स्वराज्ये प्रवर्तिताम् अमारिं सर्वाऽन्यराज्येष्वपि पटहोद्घोषणादिभिः प्रवर्त्य, अन्यान्यपि प्रवचनप्रभावनाकार्याणि विशेषतो विरचय्य, स्वपुत्रश्रीकुलानन्दनरेन्द्रेण रचिताम् अपूर्वोत्सवोच्छ्रितां दीक्षाभिषेकसामग्रीं कृतार्थयित्वा, समङ्गलध्वानोल्लासैः समं वासो-ऽलङ्कार-माल्यादिपरिकर्मपुरस्सरं दिव्यां शिबिकामारुह्य सिंहासनमधिष्ठितः । स श्रीजयानन्दो धृतातपत्रो, अभितः प्रचलच्चारुचामरः, सर्वर्द्धिसमेतः, सर्वाडम्बरैः, सर्वातोद्यैः, गीतगानैः, महादानैः, मनोहरैर्धवलमङ्गलैः, विचित्रैः पात्र-नाट्यैः, असङ्ख्यैर्मङ्गलपाठकैः, पुरश्चरद्भिश्छत्र-चामर-हस्त्यश्व-ध्वज-कुम्भा-ऽष्टमङ्गलैः, चतुरैः प्रमातिगैः पादातैः, सर्वतोऽपि प्रसृत्वरैश्चतुरङ्गचमूचक्रैः, असङ्ख्यैश्च सुर-विद्याधरैः परिवारितः, मुदाऽऽगतासन्नसुरकिन्नरनिर्मितैः शुभैः पुष्पवृष्टि-गीत-नाट्य-सङ्गीतप्रमुखैः, ध्वनिताम्बरैर्दिव्यैर्दुन्दुभिप्रमुखैर्वाद्यैः, पौरादिसमुदायैश्च भृशं शोभाभरे जाते सर्वोत्सवै राजधान्या विनिर्गत्य मनोरमं नाम वनं गतः । शिबिकान्तराद् अवरुह्य गुरुपादान्ते चाऽऽगत्य विधिनाऽङ्गं नमयन् तान् गुरून् मुदा वन्दित्वा, सर्वान् जनानापृच्छ्य, वैराग्येण तरङ्गितः साहसिकाग्रणीः सुधीः श्रीजयानन्दः सम्राट् वस्त्रा-ऽलङ्कारान् मुक्त्वा पञ्चमुष्टिलोचपरः श्रीगुरोः पार्श्वे सत्तमां दीक्षामात्तवान् । दीक्षां गृह्णता

त्रिखण्डभर्त्रा तेन सार्द्धं सार्थेशेनेव लक्षशो जनाः प्राव्रजन् । रतिसुन्दर्याद्या महिष्योऽन्तःपुरपुरन्ध्र्यश्चाऽपि स्वस्वपरिच्छदैः सार्द्धं व्रतमाददिरे । नृपस्य सहस्रशः पुत्र-पौत्रादयः सान्तःपुर-परिच्छदं च नरेन्द्राणां सहस्रं व्रतमाददिरे । तदा हि जने जनपदे राजकुले च सर्वत्र संसारसमुच्छेदपरः प्रमोदोदयः प्रससार । अथ कुलानन्दनृपः पश्चाद्गमनाऽवसरं स्मरन् उपात्तचारित्रप्राज्यसाम्राज्यं निजं जनकं श्रीमन्तं श्रीजयानन्दराजर्षिं तद्गुरूंश्च वन्दित्वा शेषबन्धु–सुता–ऽमात्य–सामन्तपरिवारितः, प्रजाभिरन्वितः, सर्वचतुरङ्गसैन्ययुतः स्वपुरे प्रविश्य राज्यं व्यधात् । स श्रीजैनधर्ममाराधयन् प्रजाश्च तत्र धर्मे प्रवर्तयन् पदे पदे पितरं श्रीजयानन्दराजर्षिं स्मरन्नास्ते ।

अथ श्रीजयानन्दराजर्षिः संयममाराधनोद्यतः सूरिभिः सह विचरन् विनयेन गुरोः पार्श्वाद् यथास्थितां सामाचारीं शिक्षित्वा, अगर्वः सर्वसंमतो विधिवत् कुर्वन्, सर्वं श्रुतं सर्वोद्यमेन आद्यदिनादपि गृह्णन् अल्पेन कालेन द्वादशाङ्गधरोऽभवत् । स च निःसङ्गचित्तः, पञ्चभिः समितिभिः समितः, तिसृभिर्गुप्तिभिर्गुप्तः, प्रतिक्षणम् अप्रमत्ता, निर्ममो, निष्कषायः, साधुसद्गुणसहितः, अशठः, तपःपात्रं, यतनापरः, प्रशस्तधीः, योग्यत्वाद् गुरुभिः सूरिपदे न्यस्तः । एष विविधाऽतिशयसम्पन्नः, षट्त्रिंशत्सूरिगुणालङ्कृतः, निरतिचारचारित्रः, साधूनां श्रुतं पाठयन् श्रीगुर्वादेशतः चिरं पृथिवीपीठं पावितवान् । अथाऽन्यदा श्रीजयानन्दसूरिः श्रीगुरुवन्दनार्थं समागतः । चतुर्ज्ञानधराः श्रीचक्रायुधसूरयस्तैः सार्धं लक्ष्मीपुरपुरासन्ने क्वचित् शाखापुरे समागत्य निजायुषः प्रान्तकालं ज्ञात्वा तत्क्षणात् सूरिराजस्य श्रीजयानन्दराजर्षेर्गच्छभारप्रदानेन

गणेशपदवीं ददुः । ततस्ते मुक्तशिष्यो-पधिपरिग्रहाः क्वचित्तीर्थे स्थित्वा विधिना पादपोपगमनमनशनं प्रपेदिरे, त्रिंशता च दिनैः क्षीणसकलकर्मक्लेशबन्धनाः केवलज्ञानमुत्पाद्य क्षणाद् मुक्तिमाप्नुवन् । तदा आसन्नसंस्थितैर्देवैर्गीत-सङ्गीतसंगतैर्दिव्यातोद्यलक्षनादैस्तन्निर्वाणोत्सवश्चक्रे । तदाकर्ण्य श्रीजयानन्दोऽप्रपातुकात् संजातवैराग्यात् क्षणेन गिरिदुर्गवत् क्षपकश्रेणिमारोहत्, रिपूणां सैन्यानीव च विश्वजैत्राणि घातिकर्माणि विजित्य राजर्षिषु महेन्द्रः स लोका-ऽलोकप्रकाशकम् उज्ज्वलम् अनन्तं केवलज्ञानमवाप्तवान् । तदा तन्महिमाकृष्टैर्वैमानिकैरपि बहुभिः सुरैः सम्भूय ज्ञानोत्पत्तिमहोत्सवश्चक्रे । तत्र प्रथमं दिव्यं महत् सहस्रपत्रं स्वर्णाम्बुजं विकुर्व्य मुदा श्रीजयानन्दकेवलिनं तदुपरि संस्थाप्य नत्वा च सर्वे सुरा अन्येऽपि च पौरजनाः पुरत उपविष्टाः । तेषां पुरः केवली गुरुर्भव्याऽनुग्रहार्थं सरसदृष्टान्त-हेतु-युक्तिकदम्बकैः सारं चतुर्विधं धर्ममुपादिशत् ।

अथ कुलानन्दो भूपतिः पितृज्ञानोत्पत्तिमहोत्सवं ज्ञात्वा ससैन्य-परिवारस्त्वरितं तं नन्तुमागमत् । विश्ववन्दितं तं पूज्यपितरं केवलिनं दृष्ट्वा त्रिः प्रदक्षिणीकृत्य विधिपूर्वकं वन्दित्वा स्तुत्वा च विनयेन कृताञ्जलिः स्थाने उपाविशत् । श्रीजयानन्दकेवली तस्मै धर्ममाख्यत्, तं च द्वादशव्रतरूपं सविस्तरं श्राद्धधर्मं सम्यक्त्वपाठबन्धेन अजीग्रहत् । ततः केचिद् मुनिधर्मं केचिच्च अनेकानभिग्रहान् प्रत्यगृह्णन् । ततः केवली अन्यत्र ग्राम-नगरप्रभृतिस्थानकोटिषु चिरं विहृत्य, दुष्कृतैः सापराधानपि जन्तून् आलोचनाप्रदानादिसुकृतैर्निरागसः कृत्वा तान् कृतार्थम्मन्यान् व्यधात् । तद्धर्मदेशनानद्यां भव्यमनोमीना मज्जनोन्मज्ज-

नादिभिश्चिरं रतिसुखं कुर्वते स्म । केवली श्रीजयानन्दः श्रीधर्मपत्तनस्थानाद् वितीर्णैर्बहुभिः श्रेयःक्रयाणकैर्भव्यलोकान् सुखिनो व्यधात् । महासार्थपतिसदृशस्य करुणाब्धेस्तस्य प्रसादात् केचिद् ज्ञाः पुरुषाः सर्वार्थसम्पदं, केचिद् वैमानिकश्रियम् ,अपरेऽनुत्तरसम्पदं,केऽपि सार्वभौमादिऋद्धीः, केऽपि निर्वृतिं, केचिच्च तद्भवे उज्ज्वलं केवलज्ञानमुपार्जयन् । एवं श्रीजयानन्दकेवली विश्वत्रयं सुखमयं हर्षमयं पुण्यमयं च चक्रे । अथ संप्रीणितजगत्त्रयः श्रीजयानन्दकेवली निर्वाणसमये प्राप्ते श्रीशत्रुञ्जयमध्यगात् । तत्र षड्भिरुपवासैः पादपोपगमाख्यम् अनशनं प्रपूर्य वेदनीय-नाम-गोत्रा-ऽऽयुश्चतुष्टयसंक्षयाद् अनन्तज्ञानो निरञ्जनः स महानन्दपदं प्राप । ततः सिद्धो, बुद्धो, अनन्तैर्मुद्-वीर्य-दर्शनैः समृद्धः, परमात्मा, परं ब्रह्म च कथितः । तत्कालं चतुर्विधा अपि कोटिशो देवाः सशोका अपि सम्भूय तन्निर्वाणोत्सवं चक्रुः । तैश्च तद्गुणमुदितैरखिलोऽपि महोत्सवः प्रायस्तीर्थेशादेरिव व्यधायि । ततो नन्दीश्वरादिके तीर्थेऽष्टाह्निकामहं कृत्वा ते निर्जराः स्वस्वस्थानेषु यथागतम् अगुः । इत्थं सर्वैः सुगुणैर्गरिष्ठः श्रीजयानन्दगुरोः परो न विद्यते, यो बाह्या-ऽभ्यन्तरशत्रुजयात् पृथिवी-मोक्षसाम्राज्यद्वयं प्राप । एवं ज्ञात्वा भो भव्या! दानादिधर्मविषये सदोद्यमः कार्यः ।

मुनिसुन्दरसूरेस्तु, वचः क्व मे मतिः क्व च । गभीरेऽनल्पविषये च, विमुह्यति जडस्य वै ॥ १ ॥
तथापि तस्य वचना-ऽनुसृत्यैव कृतोद्यमः । कृतं यन्मतिशेषेण, तद्विशोध्यं हि धीधनैः ॥ २ ॥

इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे श्रीजयानन्दराजेन्द्रदीक्षा-केवलज्ञानादिव्यावर्णनो नाम चतुर्दशः सर्गः ।

# अथ प्रशस्तिः ।

सूरिर्विजयदेवाख्य–स्तपागच्छाधिनायकः । विख्यातस्त्रिजगत्यासीद्, विद्यया गुरुसन्निभः ॥ १ ॥
तस्य पट्टोदयाद्रौ श्री–विजयसिंहसूरिराट् । आदित्य इव तेजस्वी, सिंहवच्च पराक्रमी ॥ २ ॥
सत्यादिविजयस्तस्या–ऽन्तेवासी सत्यभाषकः । क्रियोद्धारः कृतो येन, प्राप्याऽनुज्ञां गुरोरपि ॥ ३ ॥
विनेयस्तस्य कर्पूर–विजयः सात्त्विकः सुधीः । कीर्तिः कर्पूरवद् येन, प्राप्ता सर्वत्र विश्रुता ॥ ४ ॥
क्षमादिगुणसंदर्भः, क्षमाविजय इत्यभूत् । तस्य शिष्यो विनीतात्मा, शिष्याऽनेकसमन्वितः ॥ ५ ॥
शब्दशास्त्रादिशास्त्राणां, वेत्ता शिष्यगणाऽन्वितः । जिनादिविजयाह्वान–स्तस्य शिष्यः सुरूपभाक् ॥ ६ ॥
कर्मप्रकृतिप्रभृति–शास्त्रतत्त्वविचारवित् । उत्तमाद् विजयस्तस्य, शिष्योऽभूद् भूरिशिष्यकः ॥ ७ ॥
तस्य पादयुगाम्भोज–भृङ्गतुल्येन चाऽणुना । पद्मविजयशिष्येण, स्व-परानुग्रहाय वै ॥ ८ ॥
गंजो थाणैस्तथा नार्गं–चन्द्राविति च वत्सरे १८५८ । वसन्तपञ्चमीघस्रे, विक्रमाद् रविवासरे ॥ ९ ॥
मया श्रीश्रीजयानन्द–चरित्रं गद्यबन्धतः । गुरोः प्रसादमासाद्य, कृतं तुच्छाऽल्पबुद्धिना ॥ १० ॥
यत्किञ्चिद् वितथं प्रोक्तं, मतिमान्द्यादजानता । तत्सर्वं धीधनैः शोध्यं, विधाय मयि सत्कृपाम् ॥ ११ ॥
वीरस्य शासनं यावद्, वर्तते विश्वदीपकम् । चरित्रं तिष्ठतु तावत्, शासनस्य प्रभावकम् ॥ १२ ॥
चतुःषष्टिः शतानीह, श्लोकानां मानमीरितम् । चत्वारिंशता युक्तं च, ज्ञेयं युक्त्या विनिश्चितम् ॥ १३ ॥

रूपनिर्जितमन्मथो, लीलाललितलावण्यसुभगः, शुद्धधर्मा, विनीतः, सत्यगीः, शूरः, अन्योपकारी, प्रियंवदः, उदारप्रकृतिः, कृतज्ञो जनताप्रियश्च । अथ श्रीजयानन्दस्य गुणान् लोकमुखाद् निशाम्यन् सिंहोऽन्तः खिद्यमानः कृत्रिमां प्रीतिं धत्ते स्म, जयानन्दस्तु स्वभावत ऋजुप्रज्ञस्तस्मिन् गुणैरुदग्र् अकृत्रिमां प्रीतिं दधौ, यतः सर्वो हि स्वानुमानेन गुणान् दोषांश्च पश्यति, गुणी गुणान् पश्यति दोषी च दोषान् पश्यति ।

अन्यदा वसन्ततौं क्रीडयोपवने स्थितौ निशि क्वचिद् दिव्यगीत-वाद्यध्वनिं शुश्रुवतुः । तत एतौ साहसिकौ शब्दानुसारतः प्रयान्तौ केलिगिरेः शिरः प्राप्तौ । तत्र कायोत्सर्गेण ध्यानलीनस्य एकस्यर्षेः पुरः देवीयुतं सुरम् अपश्यताम् । सुरः पटहं वादयति, एका सुरी नृत्यति; एका तालम् एका घोषवतीम् एका च वंशम् एवं तिस्रोऽन्या वादयन्ति । सर्वेऽपि च बहुभक्तितः साधोर्गुणान् गायन्ति । इत्थं विश्वमोहनं नाटकं तौ कुमारौ अपश्यताम् । अथ समतास्थस्य मुनेः शुक्लध्यानानुभावतः केवलज्ञानमुत्पेदे । तत्र चतुर्विधाः सुरास्तूर्यरवाकुलाः केवलज्ञानमहोत्सवान् कृत्वा कनककमलासीनस्य मुनेः पुरो नत्वा उपाविशन् । मुनिस्तेषां देवानां तयोः कुमारयोश्च धर्मलाभाशिषं दत्त्वा सम्यक्त्वा-ऽणुव्रतादिकं धर्मं कथयामास । श्रीजयानन्दः प्रबुद्धः सम्यक्त्वमग्रहीत् । पप्रच्छ च–'हे नाथ ! यो नाट्यमकार्षीत् स सुरः कोऽस्ति ?' । मुनिराख्यत्–"अहं वैताढ्ये जयन्ताख्यः खेचराग्रणी रवेरुपरागं दृष्ट्वा प्रबुद्धः सन् जवात्

१ रूपेण जितः कामदेवो येन सः । २ सूर्यस्य ग्रहणम् ।

प्राव्रजम् । अन्यदा श्रुतपारगो गुर्वादिष्ट एकाकी विहरन् चतुर्मास्यामुपोष्य विन्ध्यभूभृतो[1] गुहायां स्थितः । तस्या गुहाया योजनद्वयान्तरे गिरिदुर्गाह्वं नगरमस्ति, तत्र सुनन्दो भूपतिः । तस्य राज्ञो द्वौ भटौ भीम-सोमनामानौ सेवकावभूताम् । गुहायाः क्रोशान्तरे राज्ञो गोकुलं तिष्ठति, तद्रक्षार्थं नृपादेशात् प्रायस्तौ तत्रैव तस्थतुः । अन्यदा मृगयार्थं गुहासन्नमुपागतौ, तत्र च मृगयूथं दृष्ट्वा तौ बहून् बाणान् मुक्तवन्तौ, परं मृगयूथेऽदूरेऽपि एकोऽपि बाणः कस्यापि मृगस्य नाऽलगत् । तथा दृष्ट्वा तौ विस्मितौ । ततो मृगयूथम् अस्मत्पार्श्वमागतं धर्मदेशनां शृणोति स्म, तत्पृष्ठानुगौ तावप्यागतौ, अस्मांश्च प्रेक्ष्य दध्यतुः—'नूनमस्य मुनेर्महिम्ना शरा नाऽलगन्, यतस्तपस्विनो विश्वेषां[2] निग्रहा-ऽनुग्रहक्षमा भवन्ति' । ततो विस्मित-भीतान्तःकरणौ नः प्रणेमतुः । ऊचतुश्च—'तपस्विन् ! इदमावयोरागः[3] क्षमस्व । तव मृगान् न हनिष्यावः, आवां भस्मसात् मा कार्षीः' । ततो धर्मलाभाशिषं दत्त्वा मया तौ प्रोक्तौ—"युवाभ्याम् अभयम्, किन्तु धर्मतत्त्वं निशम्यताम्—सुखप्रियाः सत्त्वा नित्यं सर्वेऽपि जीवितमिच्छन्ति, तत् तेषां जीविताऽपहारेण नरकातिथी मा भवतम्, यतो जीवानां मांसाहारेण परस्त्रीगमनेन पञ्चेन्द्रियवधेन च ध्रुवं नरके गतिः स्यात् । तथा हिंसानिषेधेन जीवानामारोग्यं बलं यशो नित्यसुखं परमं श्रेयश्च भवेत्" । इति धर्मं श्रुत्वा प्रतिबुद्धौ तौ सम्यक्त्वम् आद्यमणुव्रतं मांसाहारनियमं च प्रपद्य भक्तितोऽस्मान् नत्वा निजमाश्रयं गतौ, प्रतिपन्नं च व्रतमनिशं पालयतः । अन्येद्युस्तयोर्वृत्तान्तं कुतश्चिद् विदित्वा मिथ्यादृग्

१ विन्ध्याचलपर्वतस्य । २ सर्वेषाम् । ३ अपराधम् ।

हिंसको नृपः कोपात्तौ एवमादिशत्—'हे भटौ ! ममाऽद्य मृगमांसाऽदने वाञ्छाऽस्ति, अतो मृगयया मृगान् पृथक्पृथग् हत्वा द्रुतमानयतम्' । इमं नृपादेशं तौ प्रपद्य 'अद्य मृगा नैव लब्धा, इत्थमुत्तरिष्यावः' इति ध्यात्वा वने गतौ। दैवाद् मृगान् दृष्ट्वा भीमो व्यचिन्तयत्—"यद्यमून् हन्मि तदा व्रतक्षतिः, चेन्न हन्मि तदा दुरायतिर्नृपकोपः । तत्र परतन्त्रस्य मे व्रतक्षतौ नास्ति कोऽपि दोषः, यतो व्रतं प्रेत्य फलिष्यति, नृपस्य कोपस्त्वद्यैव" । ततः सोमेन भीमो बहुधा निषिध्यमानोऽपि बाणैर्मृगान् हत्वा गृहीत्वा च राज्ञे समार्पयत् । सोमस्त्वचिन्तयत्—"स्वस्य प्राणत्राणकृते परप्राणान् कथं हरे ? । यथा मम प्राणाः प्रियास्तथा परेषामपि, अतः क्षमापतिः कुप्यतु मा वा, प्राणान् वा मम हरतु, परं मृगव्यापादनेन व्रतं न भनज्मि । यतः—

"निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, नैव व्रते प्रविचलन्ति कदापि धीराः ॥ १ ॥
निमित्तमासाद्य जवेन किञ्चन, स्वधर्ममार्गं विसृजन्ति बालिशाः ।
तपःश्रुतज्ञानधनास्तु साधवो, न यान्ति कृच्छ्रे परमेऽपि विक्रियाम्" ॥ २ ॥

इति ध्यात्वा मृगान् मुक्त्वा सत्त्ववान् सोमोऽप्यागत्य नरेशस्य मृगाऽलाभोत्तरं दत्त्वा गृहं ययौ । राजा भीमानीतं मृगामिषम् आकण्ठं बुभुजे, आज्ञापालनोद्यतस्य च तस्योपरि तुष्टः। अथ भूमीशो भीममप्राक्षीत्—'सोमो मृगान् कथं नाऽऽनयत् ?' । तदा भीम ईर्ष्यया यथाभूतं जगौ । नृपो रुष्टोऽवक्—'रे !

मद्भटान् लात्वा याहि, मदाज्ञालोपिनं सोमं द्रुतं मारय, वरमेकं ग्रामं तव दास्यामि'। ततस्तद्ग्रामलोभेन राजादिष्टैर्भटैः सह सोमं हन्तुं भीम उदायुधो यावदभ्येति तावत्प्रागपि शङ्कितस्तमायान्तं कुतोऽपि ज्ञात्वा सोमो नंष्टुा गिरौ गन्तुं नगराद् बहिः प्रवृत्तः। भीमोऽपि तस्याऽनुपदं धावमानो नाऽतिदूरे तं नश्यन्तं भयविह्वलं ददर्श। 'रे दुष्ट ! काले भूपाले क्रुद्धे कियद्दूरं यातासि ?, वयं मिलिता एव, हत एवाऽसि' इत्यादिश्रुतिकटुकानि भटवाक्यानि श्रुत्वा विशिष्य त्वरया नश्यन् अकस्मात् सर्वतोऽपि सुसूक्ष्माश्चलाचला लक्षशो मण्डूकीरद्राक्षीत्। ततो दयालुः सोमो दध्यौ–'चेत् त्वरया यामि तदाऽयं गिरिर्निकटोऽस्ति, तत्र च गतो भटाऽग्राह्यो भवामि। परं द्रुतं गतौ चरणैरेता भेक्यो विनश्यन्ति, अतः प्रपन्नं व्रतं प्राणत्यागेऽपि न त्यजामि'। इति स सत्त्ववान् ध्यात्वा साकारानशनं स्थितः, परमेष्ठिध्यानं च कृत्वा कायोत्सर्गेण तस्थौ। अथ भीमादयः क्रूराः शूरास्तमुपागताः, जिघांसवश्च तस्मिन् विविधान् शस्त्रघातान् विदधुः, परं नैकोऽपि शस्त्रघातस्तस्याङ्गेऽलगत्। व्योम्नः प्रसरद्दुन्दुभिध्वनिः पुष्पवृष्टिरभूत्। इमं वृत्तान्तमालोक्य यावत्ते हृदि विस्मितास्तावत्तच्छीर्षेषु समन्ततः पाषाणा निपेतुः। ततस्तैर्हन्यमाना भयविह्वलास्ते क्रन्दन्तः पश्चाद्गत्वा राज्ञो यथास्थितं वृत्तान्तं जगुः। अथ सोमपार्श्वे काचिद् दीप्राङ्गी देवी समागता, ताश्च मण्डूकीरपहृत्य तद्धर्मतस्तुष्टा जगौ–'हे धीर ! कायोत्सर्गं पारय, मया मण्डूकीदर्शनात् प्रतिपन्नव्रतस्थैर्यस्य तव परीक्षा कृता। सम्प्रति मुनिसमीपं व्रज, निशि त्वया तत्रैव स्थेयं, प्रातस्तव राज्यं भविता'। इत्युदित्वा सा तिरोदधे। ततः सोमो मुदाकुलः कायोत्सर्गं पारयित्वा विदितो-

पसर्गवृत्तान्तः सन् इहागत्य मां ननाम । अथ निशायां जातायां सविस्मयः सोमो मामपृच्छत्—'भगवन् ! मम जीवितदायिनी इयं देवता का ?' । अहमवोचम्—"एतद्गुहाधिष्ठायिका सुरी मद्गिरा प्रासधर्मत्वाद् मयि भृशं भक्तिं धत्ते । युवयोर्धर्मप्रतिपत्तिं मत्वेयं मां पप्रच्छ—'भगवन् ! एतौ किं व्रतं पालयिष्यतः ?' । मया प्रोक्तम्—'आद्योऽपराद्धा, अपरस्तु व्रतम् आराद्धा' । ततोऽद्यावसरे त्वां परीक्ष्य देवी तुतोष' । अथ भूपः सोमस्य वृत्तान्तं श्रुत्वा भीतः, पलोऽजीर्णाच्च जातगूढविसूचिकस्तस्यामेव रात्रौ मृत्वा द्वितीये नरकेऽगमत्, यतः पुण्यवद् अत्युत्कटं पापमपि झटित्येव फलति । भीमोऽपि स्वामिभक्त्या इव तस्यामेव रात्रौ मृत्वा व्रतभङ्गादिपापैस्तत्रैवाऽगमत् । प्रातः सचिवादयस्तन्मृतिकृत्यानि कृत्वा, अस्य नृपस्याऽपुत्रत्वात् पञ्च दिव्यान्यधिवास्य राज्ययोग्यं पुरुषं गवेषयन्ति । पुरान्निर्गत्य तानि अद्रिं प्रति यावच्चलन्ति तावत् कुटुम्बसारार्थं सोमः पुरं प्रति व्रजन् गजराजेन निभाल्य कुम्भवारिणाऽभिषिक्तः, चलच्चामरशोभितश्च स्वपृष्ठे आरोपितः । अस्य शिरसि छत्रमस्थात्, तुरगश्च ह्रेषां व्यधात् । अथ व्योम्नि सा देव्युवाच—'भो अखिला लोकाः ! शृणुत—अयं सर्वगुणान्वितः सोमो राजा युष्माकं मया दत्तः, योऽस्याज्ञां खण्डयिष्यति तं यमातिथिं करिष्ये' इत्युक्त्वा साऽन्तर्हिता । तच्छ्रुत्वा सर्वेऽपि हृष्टाः । अथ वादित्रादिजयजयारवपूर्वकं सोमो महर्द्धा पुरे गत्वा नृपमन्दिरं प्रविवेश । सचिवादिभिः सिंहासनेऽभिषिक्तः प्रजाः प्रशशास । एवं सोमो दृढाऽऽराधितदयाधर्मवशाद् इहापि राज्यभागभूत्, भूप-भीमौ च हिंसया नरका-

१ व्रतविराधनाकर्ता । २ पलस्य—मासस्याऽजीर्णात् ।

ऽतिथी जातौ । गुहास्थं मां नत्वैव सोमभूपतिः सदाऽभुङ्क्त । देवीप्रभावतो युद्धं विनाऽपि रिपून् अवशयत् । दृष्टदयाफलो राजा स्वदेशेऽमारिं प्रावर्तयत्, यथायोगं च सुश्राद्धधर्मकृद् गुरून् सिषेवे । एवं धर्ममयं राज्यं चिरं भुक्त्वा, आयुषः क्षये सौधर्मे शक्रसामानिकस्त्रिदशो जज्ञे । अहमपि देशेषु चिरं विहरन् पुनरत्रागमम् । स देवोऽवधिना ज्ञात्वाऽत्रागत्य मां मुदा प्राणमत्, पूर्वोपकारं च स्मृत्वा भक्तितो नाट्यादिकं चक्रे । एवं दयाया गुरुसेवायाश्च फलं मत्वा भो भव्या ! नित्यं धर्मे उद्यमं कुरुत" । इत्थं श्रीजयानन्दः श्रुत्वाऽधिकधर्मधीरवादीत्–'प्रभो ! युद्धादिकारणं विना स्थूलहिंसा-ऽनृत-स्तेया-ऽन्यस्त्रीत्यागादिभिः सम्यक्त्वं भूषयिष्यामि' । ज्ञान्यूचे–'इदं सुरद्रुमोपमं व्रतं सम्यक् पालयेः, यतोऽस्मात्तव इहाऽमुत्र च सुखश्रियो भवित्र्यः' । श्रीजयानन्दो मुनेर्गिरं तथेति प्रतिपद्य स्वं कृतार्थं मन्यमानो मुनिं नत्वा प्रगे गृहेऽगात् । सिंहसारो गुरुकर्मा साधोः प्रोक्तम् अश्रद्दधानको भ्रात्रा सह मुनिं प्रणम्य गृहेऽगमत् । सुरादयोऽपि यथाशक्ति सम्यक्त्वादिगुणान् प्राप्य निजं निजं स्थानं प्रापुः । मुनिरपि ज्योत्स्नाऽन्यत्राऽगात् । अथ युवराजनन्दनः प्रपन्नधर्मा श्रीदेव-गुरुभक्तिभृद् व्रतं पालयन् सर्वजनेष्टोऽभवत् ।

॥ इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे प्रथमव्रतपालनाऽपालनमाहात्म्यसूचकभीमसोमदृष्टान्त-श्रीजयानन्दप्रतिबोधादिवर्णनश्चतुर्थः सर्गः ॥

पौरा भूपं व्यजिज्ञपन्। भूपस्तान् आश्वास्य सत्कृत्य च प्रैषीत्। ततः सिंहसारमाहूय धिक् चकार। एवं द्वि-त्रिः कृतेऽन्यदा ताम्बूलदासी महीभुजे ताम्बूलं दातुं यान्ती तेन बलाद् मुषिता। दासी कुपिताऽवदत्—'रे दुष्ट ! नैमित्तिकोदितं सत्यं जातम्'। तदा सिंहसारेण धनैः प्रलोभ्य पृष्टा। तयाऽपि व्यक्त्या सर्वमप्युदितम्। यतः—

"न तरुस्तटिनीतटे चिरं, न खले प्रीतिरघात्मनीन्दिरा[1]।
न च धर्मरसोऽतिलोभके, न च गूढं हृदि तिष्ठति स्त्रियाः" ॥ १ ॥

सिंहसार एतद् दास्योक्तं मनसिकृत्य दुर्मना गतः। दासी भूभृतस्तमन्यायं द्राग् न्यवेदयत्। तदा भूपस्तमाकार्य गाढक्रोधादभाषत—'रे दुर्नय ! नित्यं पौरानुद्वेजयसि, निर्मलकुले जातः कुलं कलङ्कयसि। रे दुष्ट ! गृहेऽपि दुष्टं चेष्टसे !, निषिद्धोऽपि न तिष्ठसि। अतो याहि काऽपि दूरम्, अतः परं यदि स्थास्यसि तदा पुत्रेऽप्यनयं न सहिष्ये'। इति श्रुत्वा सिंहसारोऽचिन्तयत्—'मयि एकाकिनि देशान्तरे गते श्रीजयानन्दो भूप-लोकानुरागतो राजा स्यात्, परं यद्येनं सह नयामि तदा राज्यावसरे देशान्तरेऽपि सन्तं मां भूप आकारयेत्, भूपतेरावाभ्यां परो राज्ययोग्यो नास्ति'। इति ध्यात्वाऽन्यदा जयानन्दं मायया स्माह—"भ्रातः ! स्वस्य व्युत्पत्तिहेतवे देशान्तरं यावः। तत्राऽद्भुतानि दृश्यन्ते, अतुलाः कलाः शिक्ष्यन्ते, भाग्यानि परीक्ष्यन्ते, सुजना दुर्जनाश्च ज्ञायन्ते, नानातीर्थानि वन्द्यन्ते, वपुः क्लेशसहं भवेत्, धूर्तादिवृत्तान्तांश्च ज्ञात्वा भृशं नैपुण्यम् आप्यते; एवं देशान्तरे प्राप्या गुणा एकत्र स्थितौ न भवन्ति। अहं

१ अघात्मनि पापात्मनि इन्दिरा—लक्ष्मीर्न।

तु त्वद्वियोगाऽसहिष्णुरेकाकी न यियासामि । भ्रातः ! तदेहि, देशान्तरे कचित् स्वपित्राधनापृच्छयैव यावः, अन्यथाऽन्तरायो भावी" । अथ श्रीजयानन्दः सौम्यप्रकृतिः सौम्याकृतिस्तस्य स्नेहमकृत्रिमं विदन् तद्गिर प्रपेदे । ततोऽन्यदा निशि केनाऽप्यलक्षितौ सखड्गौ निर्यातौ । कियत्यध्वनि अतिक्रान्ते कथाप्रसङ्गे धर्मा-ऽधर्मविचारे श्रीजयानन्दो जगौ—"वेश्मन्यभितः श्रियः स्फुरन्ति, मुखे गिरः श्लाघ्यन्ते, तनौ सौभाग्यम्, अंसयोः परमं बलं, दिक्षु च यशांसि; एतत्सर्वं धर्मतो भवति । ये आर्हतं धर्मं भजन्ति तेषां स धर्मः सुखानि दत्ते, विपत्तीर्हरते, अशिवानि नाशयति, व्याधिगणान् निहन्ति, भद्राणि करोति, अतो धर्म एव श्रेयान्" । सिंहसारो जजल्प—'भ्रातः ! तव वचः सत्यम्, परं सम्प्रति तु अधर्मादेव सम्पदः समीक्ष्यन्ते, यतोऽन्यायजुषां क्रूरकर्मणां लक्ष्म्यो वीक्ष्यन्ते, धर्मभाजां च विपदः' । श्रीजयानन्दाऽवदत्—'येषां पापानुबन्धि पुण्यं स्यात् तेषां क्रूरकर्मणामपि सुखम्, येषां च पुण्यानुबन्धि पापं स्यात् तेषां धर्मभाजामपि विपदः स्युः, एते पुण्य-पापे पारभविके, एतद्भवकृते तु पुण्य-पापे भवान्तरभोग्ये, तयोः फलं तु तदैव' । अथ दुष्टात्मा सिंहो भ्रातुः प्रेम दर्शयन्नभाषिष्ट—'आवयोः प्रेमहरेण विवादेन किम् ?, कश्चिद् विज्ञः पृच्छ्यते तदुक्तं च प्रमाण्यते' । श्रीजयानन्दोऽप्यार्जवाद् 'एवमस्तु' इति अभापत । भूप-प्रजानुरागात् श्रीजयानन्दस्य राज्यार्हतां विदन् पणात्तस्य लोचनजिघृक्षकः स्वस्य राज्यप्राप्तिं विभावयन् पापैकनिष्ठो नृपात्मजोऽभाषिष्ट—'पणेन विना किम् ?, अतो हारितेन निजाऽक्षिणी देये इत्येवं नौ पणोऽस्तु' । श्रीजयाऽपि तत् प्रपेदे । अथ कस्मिंश्चिद् ग्रामटके गत्वा ग्राम्यसंयुक्तं ग्रामठक्कुरं

तु त्वद्वियोगाऽसहिष्णुरेकाकी न यियासामि । भ्रातः ! तदेहि, देशान्तरे क्वचित् स्वपित्राद्यनापृच्छयैव यावः, अन्यथाऽन्तरायो भावी" । अथ श्रीजयानन्दः सौम्यप्रकृतिः सौम्याकृतिस्तस्य स्नेहमकृत्रिमं विदन् तद्गिर प्रपेदे । ततोऽन्यदा निशि केनाऽप्यलक्षितौ सखड्गौ निर्यातौ । कियत्यध्वनि अतिक्रान्ते कथाप्रसङ्गे धर्मा-ऽधर्मविचारे श्रीजयानन्दो जगौ–"वेश्मन्यभितः श्रियः स्फुरन्ति, मुखे गिरः श्लाघ्यन्ते, तनौ सौभाग्यम्, अंसयोः परमं बलं, दिक्षु च यशांसि; एतत्सर्वं धर्मतो भवति । ये आर्हतं धर्मं भजन्ति तेषां स धर्मः सुखानि दत्ते, विपत्तीर्हरते, अशिवानि नाशयति, व्याधिगणान् निहन्ति, भद्राणि करोति, अतो धर्म एव श्रेयान्" । सिंहसारो जजल्प—'भ्रातः ! तव वचः सत्यम्, परं सम्प्रति तु अधर्मादेव सम्पदः समीक्ष्यन्ते, यतोऽन्यायजुषां क्रूरकर्मणां लक्ष्म्यो वीक्ष्यन्ते, धर्मभाजां च विपदः' । श्रीजयानन्दोऽवदत्—'येषां पापानुबन्धि पुण्यं स्यात् तेषां क्रूरकर्मणामपि सुखम्, येषां च पुण्यानुबन्धि पापं स्यात् तेषां धर्मभाजामपि विपदः स्युः, एते पुण्य-पापे पारभविके, एतद्भवकृते तु पुण्य-पापे भवान्तरभोग्ये; तयोः फलं तु तदैव' । अथ दुष्टात्मा सिंहो भ्रातुः प्रेम दर्शयन्नभाषिष्ट–'आवयोः प्रेमहरेण विवादेन किम् ?, कश्चिद् विज्ञः पृच्छ्यते तदुक्तं च प्रमाण्यते' । श्रीजयानन्दोऽप्यार्जवाद् 'एवमस्तु' इति अभापत । भूप-प्रजानुरागात् श्रीजयानन्दस्य राज्यार्हतां विदन् पणात्तस्य लोचनजिघृक्षकः स्वस्य राज्यप्राप्तिं विभावयन् पापैकनिष्ठो नृपात्मजोऽभाषिष्ट–'पणेन विना किम् ?, अतो हारितेन निजाऽक्षिणी देये इत्येवं नौ पणोऽस्तु' । श्रीजयाऽपि तत् प्रपेदे । अथ कस्मिंश्चिद् ग्रामटके गत्वा श्राम्गसंयुक्तं ग्रामठक्कुरं

दृष्ट्वा सिंहस्तं ननाम । प्रोचे च–'अहं पापात् शुभं वच्मि, अयं पुनर्धर्माद् वक्ति, तद् भोः ! सत्यं वद, कोऽत्र सत्यवादी ?' । सोऽपि तस्य भूपवेषस्य मायानमनादिना रञ्जितो ग्राम्यानुमत्या ठक्कुरोऽलपत्–'भवान् सत्यवाक्' । ततः कुधीः सिंहो मुदितो भ्रात्रा सहाऽचलत् । कियद्दूरे गत्वा श्रीजयं नेत्रे ययाचे । सोऽप्याह—'निर्धर्माणो ग्राम्याः किं विदन्ति ?, कूटसाक्ष्ये हि तेषां धीर्गीर्वा न क्वचित् स्खलति । ततो हंस-काकनिदर्शनाद् ग्राम्योक्तौ मा विश्वसीः' । सिंहोऽवक्–'कौ हंस-काकौ ?' । श्रीजयः स्माह—

"धन्यपुरे ग्रामे एकोऽगाधजलभृतो ह्रदः समस्ति । तत्राऽन्तश्चारिणं मीनं दृष्ट्वा एको ध्वांक्षो[1]ऽपतत् । मीनस्तु जलान्तर्निलीनः, परं काकः क्लिन्नपक्ष उड्डयनाऽसमर्थो वारिणि यावन्मज्जति तावद् हंसीगिरा हंसः समागत्य तदधोऽम्बुनि निजपृष्ठे तमारोप्य करुणयाऽऽकृपत् । ततः स्वस्थीभूतो ध्वांक्षो निजावासे वटे सहंसीकं हंसं प्रीत्या समानीय चञ्च्वा च फलानि लात्वा अबूभुजत्, यतः प्रीतेर्ह्येदः फलम् । अथ हंस्या समं हंसो यावदुड्डयते तावद् ध्वांक्षो हंसीम् 'रे ! क्व यासि ?' इत्युक्त्वाऽरुणत्[2] । हंसोऽवदत्–'ममेयं प्रिया, न च तवेयम्' । ध्वांक्षोऽवक्–'ममेयम् !' । हंसः स्माह–'त्वद्विलक्षणा कथम् ?' । काकोऽवदत्—'स्वसा सदृशरूपा स्यात्, न तु अन्यकुलोत्पन्ना प्रिया । चेन्न प्रत्येषि ग्राम्यान् पृच्छावः, ते ह्यावयोः प्रमाणम्' । तदा प्रतिपन्नतद्गिरं हंसं तत्र स्वकुटुम्बाय समर्प्य स्वयं ग्रामान्तरागमत् । तत्र नृगिरा खं

१ काकः । २ रुद्धवान् ।

विवादम् उदित्वाऽब्रवीत्–'भोः । कूटेनाऽपि साक्ष्येणाऽहं सत्यः कार्यः, अन्यथा स्त्रीणां शिरःस्थितान् घटान् अशुचयिष्यामि !, पशून् व्रणक्षोदादिभिर्भृशं व्यथयिष्यामि, नृ-नारीणां शिरस्युपविश्य द्रुतं यास्यामि, आतपादिगतानि धान्यानि भक्षयिष्यामि, बालादिभ्यश्चाऽशनादिकं ग्रहीष्यामि' । इत्यादि-नृभापया ग्राम्या विस्मिता भीताश्च धर्मा-ऽधर्मावज्ञात्वा कूटसाक्ष्यं स्वीचक्रुः । पश्चाद् द्विकः समागतः । ततो द्वौ मिलित्वा तान् न्यायमपृच्छताम् । तैरपि तथैव कूटसाक्ष्यं दत्तम् । हंसी काकस्य दत्ता । ततो हंसं दुःखिनं दृष्ट्वा द्विकोऽवक्–'हे सुहृद् ! स्वां प्रियां गृहाण, प्राणदे त्वय्यहं द्रोहं न कुर्वे, एवं हि ग्राम्याः परीक्षिताः' । ततो द्विको ग्राम्यान् स्माह—'भो लोकाः ! स्वल्पेऽपि कारणे कूटसाक्ष्यभृताम् अत्र परत्र च दुःखं भविष्यति, हिंसादीनां सर्वेषां पापानां कूटसाक्ष्यं महत्पापं विद्यते' । ततः स काकः सहंसः कुतोऽपि चञ्चुभिरङ्गारराशिम् आनीय वर्पित्वा च तद्ग्राम्यगेहान् अजिज्वलत्, ग्राम्याश्च मृताः सन्तः कूटसाक्ष्यपापेन दुर्गतौ गताः । इति ग्राम्यकथां श्रुत्वा भ्रातः ! मा तेषु विश्वसीः" ।

इति श्रुत्वा सिंह ऊचिवान्–'कूटकथानकैः किं मां प्रतारयसि ?, यतः पशवो मनुष्यवद् नैव चेष्टन्ते' । श्रीजयानन्दो जगाद–"सत्यमेतत्, परं हंस-काकौ तथाऽचेष्टेताम्, यतस्तत्कारणं शृणु । तथाहि–अस्मिन् ग्रामे श्रीसुखो यक्षो जनैर्देवकुलेऽर्च्यते, तथा नन्दिपुरे वसन् नन्दियक्षस्तस्य मित्रमस्ति । अन्येद्युस्तद्गृहे श्रीसुखः प्राप्तः सन् प्रीत्या नन्दियक्षं जगाद–'बन्धो ! मम स्थाने किं नैषि ?' । सोऽवक्–'ग्राम्यजन-भीत्या नागच्छामि, एते हि धर्मज्ञानविकलाः' । श्रीसुखः प्राह–'परीक्षां विना न प्रत्येमि' । ततस्तौ

परीक्षार्थं ग्रामे गत्वा हंस-काकौ भूत्वा वृक्षे स्थितौ पूर्ववदखिलम् अचेष्टेताम् । अतो हंस-काककथां सङ्गतां विद्धि । उत्तमास्तु अनृतं न वदन्त्येव, आनन्दराजवत्"। सिंहेनोक्तम्—'कोऽयम् आनन्दराट् ?'। श्रीजयोऽवदत्—

"नन्दिपुरे आनन्दाख्यो भूपतिः सत्यवादी, प्रकृत्योत्तमो, विशिष्याऽऽर्हतधर्मभृत्, पापभीरुरपि बल-भाग्य-पराक्रमैः प्रौढो, द्वात्रिंशल्लक्षणो, भूरिभूपैः सेव्यः, सुखिप्रजश्चाऽभूत् । स च महर्द्धिकत्वाद् निजाङ्गे कोटिमूल्यामलङ्कृतिं धत्ते । अन्यदा सालङ्कारः ससैन्यः केल्यै पुराद्बहिरगात् । यावच्च तत्र वाजिनं विविधा गतीः कारयते तावत् स वाजी आकाशे उत्पत्याऽटव्यामेककं निन्ये । नृपस्तमश्वं दुष्टं ज्ञात्वा उत्प्लुत्य भुव्यपतत् । अथ वाजिन्यन्तर्हिते यावद्विस्मितस्तिष्ठति तावच्चत्वारो दस्यव उदायुधाः समागताः । तथापि धैर्यादक्षुभितो नरेन्द्रस्तैर्न्यगादि—'अहो ! अलङ्कृतस्त्वं भाग्यात् प्राप्तोऽसि, अस्माकं चरितं शृणु—वयं सूरपुराधीशस्य सेवकाः क्षत्रपुङ्गवा राज्ञा केनाप्यपराधेन निर्वासिताः । गुरुतो धर्मं ज्ञात्वाऽपि वृत्त्यभावतः सर्वस्तेयोज्झनाऽशक्त्या इति नियमौ गृह्णीमः—स्तेयेन भूपादन्यस्य धनं न ग्राह्यम्, यतोऽल्पर्द्धयो हि पीड्यन्ते, भूपस्तु महर्द्धिको न पीड्यते । तथा लघुलघुस्तेयैः सदा दुर्ध्यानं न गच्छति, अतश्चिरवृत्तीच्छया लक्षस्याऽधश्चौर्यं न कार्यम्। ततः सुपुरुषलक्षणस्त्वं कः ?, किंमूल्या चाऽलङ्कृतिः ?, सत्यं वद, महान्तो हि मृषागिरो न भवन्ति' । ततो नृपेण चिन्तितम्—'एते तस्कराः स्वाजीविकाकृते ममाऽलङ्कारं गृह्णन्तु, कोटिमूल्यं च वक्ष्ये, परं पापमूलमनृतं तु नैव वक्ष्ये । धनं हि गत्वरम्, सत्यधर्मस्तु अग-

|| २६ ||

त्वरः । धनाद् मितं शर्म प्राप्यं, परं सत्यधर्माद् अनन्तकं सुखम्' । इति ध्यात्वा नृपोऽवादीत्—'अहं नृपो हयाकर्षणादटव्यामागतः, कोटिमूल्या च ममाऽलङ्कृतिः' । इत्युक्त्वाऽलङ्कृतिं स्वयमार्पयत् । तदा मुदितास्ते क्वाऽपि गताः । भूपालो वने भ्राम्यन् क्वापि तापसाश्रममासाद्योपविष्टः । कुलपतिरुवाच—'कस्त्वम् ?, किमत्रागतः ?' । ततो नृपः स्ववृत्तान्तं जगौ । कुलपतिः प्रोचे—'अस्मिन् वने राक्षसोऽस्ति; असौ तापसेभ्योऽपरं लब्धं मनुष्यं भक्षयति, अतस्त्वं तापसवेषं गृहाण' । तदा नृपोऽपि तदन्तिकाद् वेषं गृहीत्वा फलाहारांश्च कृत्वा यावत्स्नातुं सरस्यगात् तावद् राक्षस आगमत् । प्राह च—'भिक्षो ! त्वं नवः कुत आगतः ?, अत्र मत्कथां शृणु—अहं प्रत्यहम् एकैकं मानुषं भक्षणाय गृह्णामि, वर्षं प्रति च द्वात्रिंशल्लक्षणं नृपं भक्षयामि । ईदृग्लक्षण नन्दिपुरेशं भोक्तुमीहे, परं पार्श्वस्थपरिवारे तस्मिन् न प्रभवामि' । इत्याकर्ण्य नृपो दध्यौ—'यदि यथातथं वच्मि तदा मामेष भक्षयति, चेद् यथार्थं न वच्मि तदा मृषोक्तिपापं भवति । अथवा प्राणमात्रार्थम् अनृतं वचो न वक्ष्यामि, यतः प्राणेभ्योऽपि धर्मः स्वर्गादिदानतो गरीयान् । अपि च, एष इष्टं मां भक्षयित्वा परान् न भक्षयिष्यति, एतच्च दयोद्भवं द्वितीयं पुण्यं भावि' । एवं निश्चित्य नृपोऽवोचत—'धर्मवीरशिरोमणिः स भूपोऽहमेवाऽस्मि । हे पलाद[1] ! यथारुचि कुरु' । ततः पुण्यजनः[2] प्रोचे—'रे सत्त्वनिधे ! सत्यं वद, अहं मुनिं नाऽस्मि, तवेदं मौनं[3] कृत्रिमं वाऽकृत्रिमम् ?' । भूपोऽवादीत्—'अहं व्रती नाऽस्मि, इदं वल्कलादि तु मुनिगिराऽधुनैवाऽधाम्' । अथ

१ राक्षस ! । २ राक्षसः । ३ मुनित्वम्—तपस्वित्वम् ।

कौणप उवाच—'तत् त्वां क्षुधा भक्षयिष्यामि, इष्टं देवं स्मर'। नृपोऽपि निजाङ्गमुत्सृज्य परमेष्ठिनश्चिन्तयन्नस्थात्। अथ रक्षो घोराट्टहासाद्यैर्नभः स्फोटयन् स्थूलान् रदान् स्फुटीकृत्य नृपं जिघत्सुरधावत्, तथाप्यक्षुब्धः सन् भूपः पूर्ववत् पुराद्बहिर्वाजिना क्रीडन्तं ससैन्यं सभूषणं स्वमद्राक्षीत्। नृपो रक्षो-ऽरण्यादिकम् अपश्यन् नभसश्च पुष्पवर्षणं पश्यन् 'इन्द्रजालाभं किमेतद् ?' इति सविस्मयोऽध्यायत्। ततो व्योमगतौ द्वौ अत्यन्तभासुरौ देवौ ददर्श। तत्रैकः सुरोऽवादीत्—"नृप ! आवयोः कथामकर्णय—अत्रैवोद्याने चैत्ये जनैरर्च्योऽहं नन्दियक्षो मित्रेण श्रीमुखयक्षेण स्वग्रामे आकारितोऽगमम्। तद्ग्राम्याः कूटसाक्षिणः परीक्षिताः। ततोऽयमवादीत्—'बन्धो! त्वत्पुरे कीदृशाः सन्ति ?'। मयाऽऽख्यायि—'नृपाद्याः सत्यवादिन उत्तमाः सन्ति'। एष आख्यत्—'कथमेतत्सत्यम् ?'। ततस्तव परीक्षार्थमहं समित्र इहागतः, अश्वेन क्रीडन्तं त्वां दृष्ट्वा हे सात्त्विक ! हयोत्पाता-ऽटवी-चौर-मुनि-कौणपादिदर्शनैस्तव परीक्षा कृता। ततस्त्वमेव धन्योऽसि, प्राणान्तेऽपि सत्यवाग्व्रतं न त्यक्तम्। हे राजन् ! तवेष्टसम्पदो भवित्र्यः"। इत्युक्त्वा सर्वाऽरिजयकृत्खड्गं निःशेषाऽऽमयहृन्मणिं चार्पयित्वा तौ निजं स्थानमगाताम्। तं वृत्तान्तं वीक्ष्य सर्वाः प्रजा मुदा भूपमस्तुवन्, राजा च पुण्यानुभावतोऽनुत्तरं राज्यं भुङ्क्ते। खड्गेन वशीकृतै राजवृन्दैः सेव्यमानः, परोपकारेषु प्रवीणो मणिनाऽप्युपकारं कुर्वन्, सम्यक्त्वा-ऽणुव्रतासक्तः सप्तक्षेत्र्यां धनं वपन् धर्मकर्ममयं चायुश्चिरं भुक्त्वा दिवमगमत्"। श्रीजयानन्दः पुनः प्राह—'अतो यत्र पुरे सत्य-

वादिन उत्तमा भविष्यन्ति तत्र गत्वा उत्तमं नरं प्रक्ष्यावः । तेन विवादे भग्ने तद्गिरं नौ प्रमाणीकृत्य पणं सत्यापयिष्यावः' । सिंहोऽपि 'एवमस्तु' इत्यभाषत ।

ततस्तौ चलन्तौ क्रमात् श्रीविशालपुरेऽगाताम् । तत्रोद्याने विद्याविलासाह्वं महाशयं कलाचार्यं निरैक्षेताम् । स च नृपपुत्रादीन् पञ्चशतीमितान् छात्रान् धनुर्वेदादिकाः कलाः पाठयति । श्रीजयानन्दस्तं सर्वशास्त्रविशारदं मत्वा सिंहयुतश्च नत्वा विवादविषयं प्रश्नमपृच्छत् । कलाचार्योऽब्रवीत्–'सर्वशास्त्रधराणामिदं मतं यद् धर्माद् अत्र परत्र च सुखम्, तथैव चाऽधर्मादशुभम्' । एवं श्रुत्वा श्रीजयानन्दो हृष्टः, सिंहस्तु म्लानमुखो जातः । अथ तौ कलाचार्यान्तिके कला अध्येतुं प्रावर्तेताम् । तत्र श्रीजयानन्दो विनयादिभिः कलाचार्यं छात्रांश्चाऽऽनर्जयन् अल्पैरेव वासरैरखिलाः कला अध्यैष्ट । क्रमात् कलाचार्यनिदेशतश्छात्रान् अध्यापयति, एवं च स सुभगाग्रणीः सर्वेषामभीष्टो जज्ञे । अथ सिंहस्तेन सह स्पर्धमानोऽनिशं कलाः शिक्षमाणोऽपि अल्पा अध्यैष्ट, यतो विद्या गुण-भाग्यानुसारिणी । अथ तत्र विशालजयो नृपोऽस्ति, स च षष्ठे षष्ठे मासे छात्राणां परीक्षणं कुरुते । अन्यदाऽवसरे प्राप्ते धराधिपः पुत्रादिकांश्छात्रान् परीक्षितुं तत्रोद्याने आगमत् । कलाचार्योऽपि भूपाग्रे छात्रान् यथास्थिति कृत्वा, तालतरोर्मूर्ध्नि शिखिपिच्छं न्यस्य इमान् जगौ–'यूयं किं किं पश्यत ?' । तेऽप्यूचुः–'वयं तालपिच्छतरुव्रजान् पश्यामः' । इति श्रुत्वा कलाचार्यः किञ्चिद् अखिद्यत । ततो गुरुनिदेशतो धनुर्धरास्ते शिखिपिच्छादि विव्यधुः, परं केऽपि यथादिष्टान् पिच्छतन्तून् न विव्यधुः । अथ कलाचार्यः श्रीजयानन्दं साह—'हे वत्स ! किं किं

वीक्षसे ?' । सोऽवादीत्—'पिच्छमेवैकं वीक्षे' । ततो हृष्टो गुरुः पिच्छे यावतिथं तन्तुं वेधितुमादिशत् तावतिथम् इपुणाऽविध्यत। ततः पद्मपत्रशते यावतिथं पत्रं गुरुणोक्तं तावतिथं श्रीजयः खङ्गेन चिच्छेद, नाऽपरम्। करमुक्तेन चक्रेण सप्ततालान् अच्छिदत्। शक्त्या दूरस्थां शिलामचूर्णयत्। ततस्तुरगयुद्धेन सहस्रशो भटान् योधयन् स महावीर्योऽजयत्। इत्याद्यनन्यसमान् तस्य वीर्य-कलागुणान् दृष्ट्वा विस्मितो भूपः 'कोऽयम् ?' इति पाठकं पप्रच्छ । पाठको जगाद—'अयं सबन्धुः क्षत्रियपुङ्गवः कोऽपि विदेशीयः पाठं कुरुते इति वेद्मि, नाऽधिकं किञ्चिज्जानामि' । ततो नृपः कला-गुणैर्निःसमानं ज्ञात्वा लक्षणैश्च राज्यार्हं राजपुत्रं निश्चिक्ये। अथ छात्रान् सत्कृत्य, विविधाश्च कला अध्येतुमादिश्य, कलाचार्यं च प्रपूज्य नृपः स्वमन्दिरं प्राप। श्रीजयस्तस्माद् गुरोर्विंश्वोत्तरा गीत-नाट्यादिका द्वासप्ततिं कलाः क्रमात् प्राप। नैपुण्यात् छात्रान् पाठयन् प्रीतात्मा गुरोर्विश्रामं ददाति, स्वगुणैश्चासौ समस्तमपि पुरं प्रीणयामास ।

अथ नृपोऽस्य धियः परीक्षायै इत्युदघोषयत्—'यो मम द्विपं[2] तोलयति तस्मै प्रार्थितं देशं ददे' । श्रीजयो नृपं प्राह—'अहं गजं तोलयिष्यामि' । तत आरोपितगजां[3] नावं सरोजलेऽमुञ्चत्। तां नावं मज्जनावधिरेखाङ्कां कृत्वा बहिरनयत्। ततो गजमुत्तार्य पुनस्तां नावं सरोजले प्रक्षिप्य यावद् रेखावधि ब्रुडेत् तावद् लोष्ठैरबीभरत्, पुनर्नावं बहिर्नीत्वा तान् लोष्ठान् विज्ञैरतूतुलत्, तद्भारसङ्ख्यया च हस्तिभारं भूभुजे आख्यत्। नृपोऽपि तद्बुद्धिविस्मितो बहुमानाद् गृहेऽनयत्। तत्र स्नानादि कारयित्वा गुरु-

१ यावतां पूरणो यावतिथस्तम् । २ गजम् । ३ आरोपितो गजो यस्यां, ताम् ।

गौरवेण च भोजयित्वा नृपः सौधेऽतिष्ठिपत् । तं सर्वगुणोत्तरं निखिलासु च कलासु साक्षाद् विशारदं दृष्ट्वाऽनिरुञ्छन्तमपि स्वसुताया मणिमञ्जर्याः कला-गुणैस्तदनुरूपायाः पाणिग्रहणम् अकारयत् । ततो नरेश्वरोऽस्मै पत्त्य-श्व-रथ-गजव्रजैः संयुक्तमेकं देशं सभोगोपस्करं च प्रौढं सौधं ददौ । तत्र सौधे नवोढया सह भोगान् भुञ्जानो नृपं सेवते, अनेकान् नृपान् जित्वा वशीकृत्य च स नृपं स्वं च प्रतिष्ठां प्रापयत् । अन्येद्युः शत्रुं सूरनृपं जेतुं प्रयान्तं भूपं विनयेन निषिध्य श्रीजयः सेनया सह चचाल । सूरस्तं समायान्तं मत्वाऽभिमानतोऽभ्यगात्, तत्सैन्ययोश्च रणो जगत्क्षोभकारकोऽभूत् । अथ स्वकटके भग्ने क्रुद्धः कुमारराट् स्वयमुत्तस्थे, शौर्येण च तथा युयुधे यथा वैरिसेनाऽभितोऽनेशत् । तदा क्रोधदुर्धरः सूरोऽपि स्वयं युद्धायोत्थितः, तयोर्महान् रणोऽभूत्, शरसमूहैराकाशं पूरितम् । अथ कुमारो द्विपः सप्त चापान् क्रमाद् बभञ्ज, रथं वर्म च चूर्णीचकार । ततोऽसौ खड्गमुद्यम्य कुमारं प्रत्यधावत, तदा कुमारः स्वखड्गेन तत्खड्गं खण्डशो व्यधात् । एवं कुमारो मुद्गरेण मुद्गरं गदया च गदां चूर्णीकृत्य द्विपं विगतायुधं व्याकुलं चक्रे । ततः सूरोऽभिमानतः 'किमेतैरबलैः शस्त्रैः ?, मे भुजाः प्रबलाः सन्ति' इति चिन्तयन् मल्लयुद्धेन योद्धुमागात् । कुमारोऽपि नीतिवेत्ता तथैव चिरं युयुधे, मुष्ट्या च हृदि आहत्य मूर्च्छितं सूरं भुव्यपातयत् । ततो निगडबन्धेन बद्ध्वा जलेन च सज्जयित्वा, तस्मै तत्सैन्याय चाऽभयं दत्त्वा पश्चाद्गत्वा राज्ञे सूरं समार्पयत् । तं दत्तदण्डं राजा कुमारवचसाऽमुचत्, यतः सतां क्रोधः प्रणामान्तो भवति । अथ 'बालेनापि जितोऽस्मि' इति चिन्तयन् सूरो वैराग्यं प्राप्य पुत्रं राज्ये न्यस्य गुरुसन्निधौ प्राव्राजीत्,

क्रमेण ध्यानारूढः केवलज्ञानमवाप्य परमानन्दपदं प्राप । अथ भ्रातृस्नेहवशात् श्रीजयानन्देन दीयमाना अपि श्रिय ईर्ष्या-ऽभिमानाभ्यां सिंहोऽगृह्णन् तं निषेवते । एवं नराः पुण्यवशाद् भोगभाजनं भवन्ति ।

॥ इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे हंस-काकनिदर्शनेन श्रीमदानन्दराजदृष्टान्तेन च द्वितीयव्रतपालनाऽपालनफल-दर्शन-श्रीजयानन्दकुमारकलाग्रहण-मणिमञ्जरीप्रथम-पत्नीपरिणयनव्यावर्णनो नाम पञ्चमः सर्गः ॥

## ॥ अथ षष्ठः सर्गः ॥

नृपतिश्रीवसुपूज्यसुतं[1] विभुं, नरवरैरसुरैः सुरैपैर्नतम्[2] ।
दलितपापकदम्बकमन्वहं, प्रणिपतामि जयाङ्गजमुच्चकैः[3]

अथोर्जितेन भाग्येन वैरिजयेन च राज्यवृद्धिकरः श्रीजयानन्दो भूपं पौरांश्च मुदमनयत्। एवं श्रीजयस्य काले गच्छति सति तस्य समृद्धिभिर्भानुकिरणैर्घूकवत् सिंहोऽत्यन्तं खिद्यते । यतः—

"खलः खिद्यत एवाऽन्य-ऋद्धिभिः सत्कृतोऽप्यलम् । पश्यन् सस्यश्रियः शुष्येत्, सिक्तोऽपि हि यवासकः" ॥ १ ॥

१ वासुपूज्यम्—द्वादशं तीर्थङ्करम् । २ सुरेन्द्रैः । ३ जयाया अङ्गजं—पुत्रम् ।

ततः श्रीजयं श्रिया वियोजयितुमिच्छन् मायामयः सिंहोऽन्येद्यू रहस्येवं जगाद—'हे भ्रातः! स्मरसि ? देशेष्वाश्चर्यालोकनहेतवे निजात्पुरात् तदाऽऽवां सहैव निर्गतौ स्वः। विचित्राश्चर्यदर्शने मम कौतुकमस्ति, तच्च देशान्तरभ्रमणं विनैकत्र स्थाने न पूर्यते। आसन्नं च स्वपुरम्, चेत् पितरो वेत्स्यन्ति तदा पश्चाद् वालयिष्यन्ति, तदा च कौतुकं न पूरयिष्यते। अतश्चेत्त्वं सुखमग्नो नाऽऽयासि तदाऽहमेकाक्येव यास्यामि, परन्तु त्वद्वियोगेनाऽनुत्तरं दुःखं भावि'। श्रीजयानन्दस्तद्वचनं स्वीकृत्य रहसि प्रस्थानसामग्रीमकरोत्, वासौकसि च द्वारशाखायामेकं श्लोकं लिलेख। तद्यथा—

"रत्वा जलाशयेष्वष्टौ, मासांश्चित्रेषु कौतुकात्। वर्षासु कुरुते हंसः, स्वपदे मानसे रतिम्" ॥ १ ॥

ततः श्रीजयानन्दः परीवारं पत्नी च वञ्चयित्वा निशि सायुधः सिंहेन सह पुरान्निरगात्। तौ पुर-ग्रामादिषु भ्राम्यन्तौ यदृच्छयाऽनेकश आश्चर्यादीनि विलोकमानौ वर्तेते। इतश्च मणिमञ्जरी प्रातः स्वपतिमदृष्ट्वा विलक्षहृदया परिच्छदमप्राक्षीत्। परीवारोऽपि तच्छुद्धिमनाप्य राज्ञे न्यवेदयत्। नृपोऽपि ग्राम-पुर-वनादिषु नरैः शोधिं कारयन् अलाभे शोकार्तो यावदभवत् तावद् मणिमञ्जरी श्लोकं वीक्ष्य निपुणा च तदर्थं विभाव्य भूपादीनभणत्—'कुतूहलाद् देशेषु भ्रान्त्वा मम प्रियो वर्षास्वेष्यति'। ततः सर्वेऽपि चित्ते धृतिं कृत्वा स्थिताः।

अथ श्रीजय-सिंहौ अरण्यं प्रापतुः। सिंह उवाच—'अहं तु अधर्मेण वने कष्टं सहे, परं धर्मपरस्त्वं किं कष्टं सहसे ?'। श्रीजयोऽवदत्—'पापिनस्तव सङ्गात् कष्टं सहे, त्वत्सङ्गे हि विपत्परः। यतः—

"तेजोमयोऽपि पूज्योऽपि, पापिना नीचधातुना । अयसा सङ्गतो वह्निः, सहते घनताडनम् ॥ १ ॥
महतोऽपि कुसंसर्गाद्, महिमा हीयते किल । कियन्नन्दति कर्पूर—गन्धो लशुनसङ्गतौ ?" ॥ २ ॥

ततः क्रोधात् स्फुरदोष्ठपुटः पापरतिः सिंहोऽवादीत्—'एवं हि आवयोर्विवादो भृशायते । अहं पापात् शुभं वच्मि, त्वं तु धर्मादिशसि, अत्र न केषाञ्चिदपि वाचः प्रमाणीस्युः, यतोऽनेकधा सर्वेषां गिरः । किन्तु यो द्रव्यं विनाऽद्यावयोर्भोजनं दास्यति तस्य पक्षः प्रमाणम्' । श्रीजयेनोक्तम्—'एवमेवाऽस्तु' । प्रमुदितः सिंहो जगौ—'अद्य पुरोग्रामे शक्तिं परीक्षितुमहं यामि, त्वं तु किञ्चिद्विलम्बेनाऽऽगच्छेः । चेद् मया भोज्यं न सिध्यति तदा त्वं प्रसाधयेः । मया च तस्मिन् सिद्धे आगामिनि दिने त्वं स्वशक्तिं प्रदर्शयेः' । इत्युक्त्वा श्रीजयं मुक्त्वा सिंहो द्रुतं पुरोऽगमत् । तत्राऽरण्ये यान् सोऽलङ्कारलाभतो भिल्लैर्बद्धः । इतश्च शतकूटगिरिप्रभुश्चण्डसेनाख्यः पल्लीशो नन्दिशालपुरं प्रति अवस्कन्दाय निर्याति, सिंहो भिल्लैस्तस्याऽर्पितः, यतस्ते हि तत्सैन्याग्रगा आसन् । अथ तत्सैन्यकोलाहलं श्रुत्वा दयालुत्वात् श्रीजयो द्रुतं धावितः । तान् प्रत्यवक्—'रे ! मम भ्रातरं लात्वा क्व याथ ?' । ते च तस्याऽप्यलङ्कृतौ लुब्धा द्रुतं श्रीजयेन सार्द्धं युद्धं चक्रिरे । अथ बाणवर्षिणा श्रीजयानन्देन ते हतप्रहताः कृताः । एवं दृष्ट्वा क्रुद्धश्चण्डसेनो योद्धुमढौकत, शृङ्गनादैश्च भिल्ला मेलिताः । तैः सार्द्धमपि युद्ध्वा भिल्लान् पातयामास । तं स्वचम्वाऽजय्यं मत्वा द्राक् च मृत्युं मत्वा सभीतिश्चण्डसेन ऊचे—'किमर्थं युद्धं कुरुषे ?' । सोऽवादीत्—'यो भवद्भिर्बद्धस्तस्याऽहम् अनुजोऽस्मि, तं मुक्त्वा निर्भीका यात' । पल्लीशः प्रोचे—'अलङ्कृत्या सह निजं भ्रातरं गृहाण, रणसंरम्भं

मुञ्च, आवयोश्चिरं प्रीतिरस्तु'। तदा विपुलौजसा तेन 'ओम्' इत्युक्त्वा रणो मुमुचे, तद्गुणरञ्जितचेतसा पल्लीशेनापि सिंहोऽर्पितः। अथ पल्लीशेन स्वकार्यायाऽभ्यर्थ्य विनयात् तौ निजपल्ली नीतौ, भोजनं च कारितौ। पल्लीशः श्रीजयात् काञ्चिद्धनुर्विद्यां शिक्षते। सिंहस्तेन पल्लीशेन सह मृगया-चौर्य-धाट्यादौ याति, श्रीजयस्तु कदापि नो याति। अथ सहस्रकूटे महासेनः पल्लीशोऽस्ति, स च चण्डसेनस्य शत्रुः। अन्यदा सिंहेन सह चण्डसेनो महासेनं प्रति योद्धुं गच्छन् श्रीजयं प्रत्याह—'युधि मम सहायो भव, हे नरोत्तम! मया स्वार्थसिद्ध्यै पल्ल्यां स्थापितोऽसि'। श्रीजयोऽपि प्रार्थनाभङ्गभीरुस्तद्वचः प्रपेदे। ततः सर्वाभिसारेण चण्डसेनः सहस्रकूटगिरिं शृङ्गध्वानैः प्रपूरयन्नगात्। महासेनोऽपि तमागतं मत्वा भिल्लचमूवृतः सद्यो निर्ययौ। भिल्लाश्च नानाविधलता-केकिपिच्छवेष्टितमौलयः चित्रक-व्याघ्र-गजै-णादित्वचो वसाना विविधायुधैः सन्नद्धा योद्धुं डुढौकिरे। योद्धारो विद्विप आहूय आहूय क्रोधाद् युयुधिरे, कुन्तैः शरैः खड्गादिभिश्च शत्रूणां पराभवं चक्रिरे। एवं घोरे रणे जाते महासेनभटैश्चण्डसेनबले भग्ने सिंहो धैर्याद् भिल्लान् संधीरयन् योद्धुं समुपास्थित। भिल्लौघसहितेन तेन धीरेण इषुवर्षणैरुपद्रुता द्विपा नेशुः। ततो भटोत्कटो महासेनः स्वकटकं भग्नं दृष्ट्वा शरभवत् सिंहं निहन्तुं शिलीमुखान् वर्षन् युधि उत्तस्थौ। स सिंहस्य बाणानच्छिदत्, शरैर्भिल्लान् काणान् व्यधात्, अत्राणांश्च रिपूंस्त्रासयन् शरैः सिंहस्य द्राग् धनुश्छित्त्वा कवचं च भित्त्वा व्याकुलीकृत्य बद्ध्वा भटैः स्वसैन्येऽनीनयत्। तथा दृष्ट्वा चण्डसेनः सन्नद्धो योद्धुं महासेनमाह्वास्त। ततस्तौ धीरौ सिन्धुरौ इव दुर्धरौ मदमत्ततां दधानौ स्पर्द्धाद् योद्धुं डुढौकाते।

भीषणरोषात् शराणां धोरणीर्वर्षन्तौ तौ घोरं रणं विदधाते । उभयपक्षगाः परेऽपि वीरा युयुधिरे । अथ महौजस्वी महासेनश्चण्डसेनं धनुश्छेद-वर्मभेदादिभिर्विधुरमकरोत् । तस्य सेनाऽपि महासेनसैनिकैरभञ्जि । अथ धैर्यादन्यद्धनुरादाय चण्डसेनः सायकैर्व्रती पापमिव महासेनस्य चापं चिच्छेद । तदा महासेनः शिलाखण्डेन चण्डसेनं मूर्ध्नि हन्ति स्म, तद्व्यथया मूर्च्छितश्चण्डसेनो भुवि अपतत्। महासेनो यावत्तं बद्धुमेति तावद् रयात् कुतोऽपि श्रीजय आगत्य तमाह्वास्त । महासेनोऽमर्षाद् धनुरास्फालयन् तेन सह योद्धुमधावत । श्रीजयस्तमभाषिष्ट–'अहं निरागसं भिल्लं क्षत्रं च न हन्मि, एवं चेद् हन्यते तदा क्षत्रकुलं कलङ्क्यते । भ्रातृबन्धापराधेऽपि कियत्कालमुपेक्षितं त्वां तु अधुना हनिष्यामि, अन्यथा ममोदितं कुरु–चण्डसेनेन सह सन्धिं कुरु, मम चाऽग्रजं सिंहं मुञ्च, ततो निःशङ्कमानसः पल्लीराज्यं चिरं भुङ्क्ष्व' । तच्छ्रुत्वा मानी महासेनोऽवक्–'क्षत्रत्वं युधि ज्ञास्यते । मृगेण सह हरेः[2] कः सन्धिः? कश्च सिंहाद् मृगं मोचयेत्? । एवं नैवाऽहं युद्धाद् उद्विग्नः । हे वीर! युध्यस्व, सन्तो हि फलेन निजगुणान् ब्रुवते, परं गिरा न' । अथ श्रीजयः पादाक्रमणाद् व्याल[3] इव, फूत्काराद्विव वह्निः, नीचाह्वानात् पुण्डरीक[4] इव क्रुधाऽदीप्यत । ततो द्वावपि भटौ महावीरौ महोत्साहौ महौजस्कौ महामानौ महायुधौ अयुध्येताम् । तयोर्युद्धे शराशरि पश्यतां सर्ववीराणां सुराणां च भीरभूत् । ततो द्वयोः सैन्ययोः परस्परमुत्साहिताः क्रूरा भटा योद्धुं ढुढौकिरे । अथ श्रीजयः सर्वदिक्षु प्रसारिणा बाणजालेन हरिर्वज्रेण[5] गिरीनिव सर्वतोऽपि

१ बाणैः । २ सिंहस्य । ३ सर्पः । ४ सिंहः । ५ इन्द्रः ।

वीरान् अपातयत्। तद्वाणान् रोद्धुं सोढुं वा न कोऽपि समर्थोऽभूत्, केचित्तु आहवं[1] त्यक्त्वा हेतीश्च[2] मुक्त्वा निर्भयास्तस्थुः। महासेनबले कोऽपि युध्यमानो भटः श्रीजयेन यदि कृपया न हतोऽपि तद्वाणैर्नाऽङ्कितो नासीत्। ततः सर्वं स्वबलं भग्नं दृष्ट्वाऽधिकं क्रुद्धो महासेनः सर्वशक्त्या निरन्तरान् वाणान् अमुञ्चत्। श्रीजयोऽपि शरैस्तान् अर्धपथे चिच्छेद। ततस्तस्य धनु-र्वर्मादिकं छित्त्वा व्याकुलीकृतवान्। महासेनो धैर्याद् असिमुत्पाट्याऽभ्यधावत, तदा श्रीजयस्तस्याऽसिमपि स्वाऽसिना खण्डशश्चक्रे। अथ श्रीजयस्तं निरायुधं दृष्ट्वा असिं मुक्त्वा मुष्ट्या हृदि आहत्य मूर्च्छालं भुव्यपातयत्, स्वभिल्लैर्बन्धयित्वा जलपानेन च सज्जीकृत्य चण्डसेनायाऽर्पयत्। महासेनस्य सैन्यान् नश्यतो दृष्ट्वा समधीरयत्। ततस्तैः सैनिकैः सिंहमानाय्य बन्धांश्छित्त्वा प्रगुणीकृतवान्। चण्डसेनः—'अहो! भाग्यैर्लब्धोऽसि, कुलदेवतास्तुष्टाः, अन्यथाऽस्माकं प्राणाः कुतः?' इत्यादि श्रीजयं स्तुत्वा महासेनं च प्रपृच्छ्य, तत्पल्लीं निजीकृत्य, तस्यां च कञ्चिन्न्यस्य, ससिंहः सेनया सह श्रीजयं सेवमानो निजां पल्लीमागमत्। दण्डदायिनं चण्डसेनस्य च सेवां प्रपन्नं महासेनं नतवत्सलः श्रीजयोऽमूमुचत्। तद्दिवसात् चण्डसेनो राज्य-जीवितदायिनं श्रीजयं मन्यमानः कृतज्ञत्वात् सम्प्रभूयति। सिंहस्तु दध्यौ—'धिग् मां श्रीजयो द्विवारममोचयत्, बन्धतोऽपि प्रतिस्पर्द्धिकृतो मोक्षोऽतिदुःखकृत्'। श्रीजय एवं ज्ञात्वा तस्य वैलक्ष्यं हर्तुमवदत्—'बन्धो! स्वस्मिन् पराभवं स्मरन् मा विषादं कृथाः। यतः—

१ युद्धम्। २ शस्त्राणि।

"गहने यद्यपि क्वापि, हरिः फालच्युतो भवेत् । तथापि दलयत्येव, कुम्भानुन्मत्तहस्तिनाम्" ॥ १ ॥

इत्यादि श्रीजयेनोक्तमस्येर्ष्यामेव निर्ममे, यतोऽसाध्ये ह्यामये औषधं प्रायो दोषहेतवे स्यात् । द्विवारं प्राणदात्रे सस्नेहाय उपकारिणेऽपि तस्मै सिंहो द्रुह्यति । श्रीजयस्तु गन्तुमुत्सुकोऽपि चण्डसेनस्य दाक्षिण्यादस्थात् । अथ कियति काले गते सति चण्डसेन आकस्मिकशूलतो मरणं प्राप्तः । तस्याऽनपत्यत्वाद् विक्रमादिभिर्योग्यं श्रीजयं पल्लीराज्यमङ्गीकारयितुं भिल्लाः प्रार्थयन्ते स्म, परं स तु तत् कुराज्यं नाऽङ्गीचकार । यतः—

"वरं न राज्यं न कुराज्यराज्यं, वरं न दारा न कुदारदाराः ।
वरं न मित्रं न कुमित्रमित्रं, वरं न शिष्यो न कुशिष्यशिष्यः" ॥ १ ॥

ततः सिंहं तद्राज्यमिच्छन्तं भिल्लराज्ये न्यवीविशत् । सिंहराजो मनसि हर्षा-ऽहङ्कारौ धारयन् क्रूरकर्मकृत् पल्लीराज्यं निःशङ्कं पालयति । अथ सिंहश्चिन्तयति—'यदि श्रीजयो देशान्तरे गमिष्यति तदा पित्रादिभिराकार्य स्वराज्ये स्थापयिष्यते' । इति विमृश्याऽलपत्—'तव वियोगं कथं सहे ?' । ततः श्रीजयः सरलः कियतो वासरान् स्नेहादस्थात् । अन्यदा सिंहो गर्वात् श्रीजयं प्रोचे—'अधर्माद् मया राज्यं प्राप्तम्' । श्रीजयो हसित्वाऽवादीत्—'अहो ! इयताऽपि गर्वितोऽसि ? अथवा खलखण्डेऽपि लब्धे रङ्कः प्रमोदते' । ततो जातोग्रकोपोऽपि सिंहः स्वाकारं समवृणोत्, मूपकं जिघत्सुरोतुः[1] किं स्वाकारं न संवृणोति ? । ततः

१ अत्तुमिच्छुः । २ ओतुर्बिडालः ।

सिंहो हसित्वा प्रेमदर्शनात् तमरञ्जयत् । अथ कियद्दिनान्यतिक्रम्याऽन्येद्युः सिंहो जगाद–'हे भ्रातः ! अत्र गिरौ क्रोशान्तरे कूटे महाप्रभावा गिरिमालिन्यभिधाना देवताऽस्ति, सा पल्लीशैरर्चनीया। अद्य कृष्ण-चतुर्दश्याम् एकं मन्त्रं सिसाधयिषुरस्मि, त्वं मे उत्तरसाधको भव' । तदा 'ओम्' इति श्रीजयेनोक्ते सपूजोपस्करः सिंहः सायं खड्गभृता श्रीजयेन साकं देवीगृहेऽगमत् । देवीमभ्यर्च्य निशि दम्भाद् मन्त्रमजपत्, श्रीजय उत्तरसाधको भवन् सात्त्विको निःशङ्कं खड्गमुद्यम्य देवालयं परितो भ्राम्यन् प्रेत-भूतादीन्त्रासयन् उपसर्गान् न्यवारयत् । निशान्ते त्यक्तध्यानः सिंहस्तं जगाद–'यामद्वयेनाऽपि त्वत्प्रभावतो मे मन्त्रः सिद्धः । अथ त्वं श्रान्तः स्वपिहि, एषोऽहं रक्षकोऽस्मि । मन्त्रेऽप्ययं विधिः–मन्त्रं समाप्य निद्रा न कर्तव्या' । श्रीजयोऽपि तदाशयम् अजानानः स्वसदृक्स्नेहचिन्तयाऽऽर्जवात् सुप्तः, निद्राऽपि द्रुतमागता । ततोऽवसरं मत्वा सिंहश्छलं प्राप्य लब्धलक्ष्यो द्रुतं शस्त्रेण श्रीजयस्य नेत्रे उदपाटयत् । अवक् च–'रे दुष्ट ! ममाऽधर्मपक्षं राज्यं च निन्दसि, हारिते अपि नेत्रे न दत्से, तेन मया बलाद्गृहीते । अन्धः सन् धर्मफलं भुङ्क्ष्व, धर्मादेव वा म्रियस्व' । इत्युक्त्वा दुर्गतेः प्रस्थाने इव पल्लयामगात् । पुरा मन्त्रिभवे साधोः 'किं ते नेत्रे गते ?' इत्याक्रोशेनाऽज्ञानतः क्रुधा यत्पापं कर्मोपार्जितमासीत् तद् निन्दा-गर्हा-ऽऽलोचनादिभिः क्षपितमपि तस्य लेशोऽवाशिषत्, स च उदितः कर्मलेशस्तदा फलमदात् । ततः श्रीजयस्तीव्रव्यथाक्रान्तो ध्यातवान्–"धिग् मां, यतः शास्त्रवेदिनाऽपि मयाऽस्मिन् खले विश्वासः कृतः । यतः—

"जीर्णे भोजनमात्रे यः, कपिलः प्राणिनां दया । बृहस्पतिरविश्वासं, पञ्चालः स्त्रीषु मार्दवम्" ॥ १ ॥

श्वानो भोज्यमात्रप्रदानेऽपि भर्तरि स्निह्यन्ति; सिंहसारस्तु जीवितदानेऽपि मयि एवमवर्तत । अथवा ममैव प्राकृतकर्मणोऽयं दोषः, यतोऽकृतं कर्म न भुज्यते, कृतं च भुज्यते एव, सिंहस्तु निमित्तमात्रम् । यतः—'अवराहेसु[1] गुणेसु अ, निमित्तमेत्तं परो होइ' । इति क्षेत्रकालादिसामग्र्या पक्वं शुभा-ऽशुभं कर्म भुज्यते एव, अतो हे जीव! क्षमां कुरुष्व । यतः—

"पुनरपि सहनीयो दुःखपाकस्तवाऽयं, न भवति खलु नाशः कर्मणां सञ्चितानाम् ।
इति सह[2] गणयित्वा यद्यदायाति सम्यक्, सदसदिति विवेकोऽन्यत्र भूयः कुतस्ते?" ॥ १ ॥

अत आपद्यपि मया धैर्यं धार्यम्, एतद्धि सतां चिह्नम् । वायुना वृक्षाः कम्पन्ते, परं शैलाः कदापि न कम्पन्ते । कर्म सद्ध्यानेनैव क्षय्यम्, अतस्तदेव ध्यानं हृदि दधे । मनोवाञ्छितदायकं मे निश्चलं सम्यक्त्वमस्ति, अतस्तदेव आपद्रुदरसायनं[3] ममाऽधुना त्राणमस्तु" । इति ध्यात्वा कायोत्सर्गमधारयत् । परमेष्ठिमहामन्त्रम् एकाग्रमनसा ध्यायन् शत्रौ मित्रे च साम्यं दधद् आस्ते, कोविदा[4] हि समयज्ञा भवन्ति । तस्य सम्यक्त्व-सद्ध्यानप्रभावात् कम्पितासना सा गिरिमालिनी देवी द्रुतं समागत्य जगाद—'अहं देवी तव सत्पुरुषस्येमामापदं हर्तुं प्रादुरासम्, परं स्वस्य पूजां त्वभिलषामि । तत एकेन शुना पूजां प्रतिपद्यस्व, तवाऽक्षिणी प्रगुणीकुर्वे' । कायोत्सर्गे पूर्णे सति श्रीजयो जगाद—'अक्षिवद् मम प्राणा अपि यान्तु, परं जातुचित् प्राणिनं न हन्मि' । ततः सा क्रमाद् वलिभोज्यं ततः प्रणामं च ययाचे, परं 'सम्यक्त्व-

१ अपराधेषु गुणेषु च, निमित्तमात्रं परो भवति । २ सहस्व । ३ आपदेव रोगस्तस्मिन् रसायनम् । ४ बुधाः ।

म्लानिभीरुरहं मिथ्यादृशे तुभ्यं तमपि न कुर्वे' इति श्रीजयेन गदिते क्रोधाविष्टा सा जगाद–'रे दुर्मते! यदि प्रणाममात्रमपि मे न कर्तासि तदा रे दुराशय! मदवज्ञायाः फलं पश्य'। ततः सा उद्धूरफूत्कृतिं वातं विकुर्वितवती, तेन वायुनोत्पाट्य महाव्यथ एष नभसि भ्रामितोऽपि हृदये नाऽक्षुभ्यत्, ततः पतंस्तया पाणिपुटे दध्रे। अवादीच–'महाभाग! तव सत्त्वतोऽहं तुष्टा, औषधिं च गृहाण, अस्या रसेनाऽक्षिणी प्रगुणय'। श्रीजयोऽपि तद्दत्तामौषधीं लात्वा वारिणा च घर्षयित्वा नेत्रयुग्मे प्रचिक्षेप, तदैव दिव्यनेत्रो वभूव। पुरो दीप्रां सुरीमपश्यत्, यतो मणि-मन्त्रौ-षधीनां हि महान् प्रभावः। अथ देव्यवोचत्–'यस्य रक्षार्थं त्वमेवं क्लिश्यसे तत् सम्यक्त्वं ब्रूहि'। ततः श्रीजयो मुदाऽवदत्–'देव-गुरु-धर्मतत्त्वश्रद्धानरूपं सम्यक्त्वम्'। इत्यादिस्तेन श्राद्धधर्मः सविस्तरो गदितः। ततः श्राद्धधर्मश्रवणात् पटुसंस्कारजागराद् अवधिज्ञानेन सा विज्ञातपरभवा देवी जगौ–''प्राग्भवेऽहं सम्यक्त्वव्रतधारिणी श्राविकाऽभूवम्। परं पुत्रमान्द्येऽन्यदा कञ्चन लिङ्गिनं तदुपायमप्राक्षम्। सोऽपि परिव्राड् भूतादिदोषं जगाद। मया दोषरहितं कर्तुं प्रार्थितो मन्त्रचूर्णादिभिर्भाग्ययोगात् पुत्रमसज्जयत्। ततः प्रीत्या तस्मै नित्यं भिक्षां ददामि, सोऽपि यदा तदा शौचमूलं निजं धर्ममाख्याति। ममाऽन्यदा सन्देहो जातः–'अस्य शौचमयो धर्मः, जैनधर्मो मलमयः, अनयोः कः सत्यः?'। एवं शङ्का-ऽतिचाराद्यैस्तदा गुरोरनालोचितैश्चिरं सम्यक्त्वं विराध्याऽहं गिरिमालिनी देवी बहुदेवीपरीवारा महर्द्धिका गिरिनायिका क्रूरकर्मविधायिनी मिथ्यादृष्टिपरिचयेन मिथ्यादृशामग्रगामिनी जाता। यतः–

"अंबस्स य निंबस्स य, दुण्हमवि समागयाइं मूलाइं । संसग्गए विणट्ठो, अंबो निंबत्तणं पत्तो" ॥ १ ॥

अधुना त्वद्गिरा सम्यक्त्वेन समं मतिज्ञान-श्रुतज्ञाना-ऽवधिज्ञानानि मत्यज्ञान-श्रुताज्ञान-विभङ्गज्ञाननिवृत्तितो जातानि । ततः सम्यग्निजपूर्वचरित्रनिवेदनात् त्वं गुरुः साक्षीकृतः । अथ निरागसं प्राणिनं न हनिष्यामि, परं प्राकृतहिंसोत्थं पापं कथं क्षिपामीति कथय" । कुमारोऽवक्—"देवतानां निषिद्धत्वात् तपो न भवति । ततोऽर्हच्चैत्येषु नानाऽर्चादिप्रभावनाः कुर्याः, संघे धर्म्मसाहाय्यं, तदाशातनाकरं च दूरे निवारयेः' । देवी 'ओम्' इत्युक्त्वाऽवदत्—'त्वां क्व मुञ्चामि?' । कुमारो जगौ—'त्वं धन्याऽसि यत्प्रबुद्धा, मां हेमपुरे मुञ्च' । ततः सा तस्य धर्मगुरोर्विपदपहारिणीमौषधीं सर्वाङ्गीणमलंकारं दिव्यनेपथ्यं चाऽदात् । अथ तमौषधीद्वययुक्तं प्रातः समुत्पाट्य हेमपुरोद्यानेऽमुञ्चत् । प्रणम्य च देवी तिरोदधे । कुमारो दिव्यनेपथ्य-मण्डनः पुरस्यान्तः प्रविष्टः । तस्य श्रियं विलोकयन् लोको मोहं चक्रे । तत्र द्यूतकारान्निरीक्ष्य कौतुकादुपविष्टः, भूषणं च पणं कृत्वा राजसुतादिभिः सह रेमे । दशभिर्दायैर्दशलक्षीम् अजैषीत्, ततस्ते सर्वस्वापहारभयात् श्रीजयेन सह अग्रतो न चिक्रीडुः । अथ श्रीजयो गान्धर्वेभ्योऽर्हद्गुणगीतान्यश्रृणोत्, तदा तां दशलक्षीं याचकेभ्यो लीलयाऽदात् । ततो हेमपुराधीशः कुमारमुदारचरित्रं श्रुत्वा स्वपार्श्वे आकारयत्, सोऽपि साहसिकाग्रणीरागतः । दिव्यालङ्काराऽलंकृतम् अद्भुताकार-लावण्यमिमं दृष्ट्वा नृपः सभया सह विस्मितः । अथ कुमारो भूपमनमत् । भूपोऽपि सविस्मयमालिङ्ग्य अर्धासनोपवेशाय न्यमन्त्रयत, परं

१ आम्रस्य च निम्बस्य च, द्वयोरपि समागतानि मूलानि । संसर्गेण विनष्ट, आम्रो निम्बत्वं प्राप्तः ॥ १ ॥

कुमारो विनयेन भूपाग्रे नीचमासनम् अध्यासिष्ट। नृपेणोक्तम्–'कुशलवानसि?'। कुमारोऽवादीत्–'राजन्! ममाऽद्य सफलं जन्म, लोचने अपि सफले जाते । यतः—

"तीर्थानां प्रथमं तीर्थं, भूपतिर्नयपावनः । दर्शनादपि योऽत्रापि, दत्तेऽभीष्टाद्भुतश्रियः" ॥१॥

राजाऽवादीत्–'महाभाग! त्वदाकृतिः काचिद्दिव्या, विनयाद्या गुणाश्च परस्परं सौभाग्यं कुर्वन्ति । तव लावण्यपीयूषसरसि जगन्नेत्राणि मज्जन्ति, परं कदापि विरामं नेच्छन्ति' । कुमारोऽवक्–'प्रभो! तव सौम्यदृशाऽहं सुभगः' । एवं स प्रीतिवार्ताभिः कियत्कालं व्यतिक्रम्य मध्याह्नकार्यकरणाय सभां विसृज्य कुमारेण सत्रा स्नानं चक्रे । भुक्त्वा तल्पगतो राजा विष्टरमासीनं कुमारमाह–"हे वत्स! येन कारणेन त्वमत्राहूतस्तच्छृणु–मम सौभाग्यशालिन्यो ललिता-विमला-लीलावती-केलिकलादयः पञ्चशतानि राज्यः सन्ति । तासां पुत्रा भानुर्भानुधरो भानुवीरः सुभानुर्वरदत्तः सुदत्तः सुषेणो रवितेजाः सुभीमः सुमुखादयश्च शतं सन्ति । तेषामुपरि ललितापट्टराज्ञीतनुजा सौभाग्यमञ्जरी पुत्री एकैवाऽस्ति । सा च चतुःषष्टिकलाकुशला सर्वाङ्गीणगुणोत्तरा लावण्यैकखनिः विश्वहृदयाह्लादिनी प्रियंवदा सदा चित्तविश्रामभूर्वर्तते । सा दान-युद्धवीरं वरं वाञ्छति, तदर्थं मया रेलणी नाम कुलदेवी जपादिभिराराद्धा । तृतीयस्यां निशि तुष्टा सा मां स्वप्ने जगाद–'युवराजगृहासन्ने द्यूतपट्टके यो दिव्यालङ्कार-नेपथ्यधरः खड्गभृत् सुभगाकृतिर्दशलक्षीम् आशु जयति, अर्थिभ्यश्च लीलया दत्ते, स भुवनोत्तरः सौभाग्यमञ्जर्याः पतिर्भावी' । ततोऽहं प्रगे देवीमभ्यर्च्य पारणकं न्यधाम् । मया पुत्राणां कथितमासीत्–'यदेहक् पुमाना-

याति तदा मम द्रुतं निवेदनीयः'। तदद्य देव्योक्तं सर्वं सम्पन्नम्, अतः स्वानुरूपगुणां मम पुत्रीमङ्गीकुरु"। कुमारो व्याजहार–'राजन्! गुणान् वंशादि चाऽज्ञात्वा मह्यं कथं सुतां दत्से?। यतः—

"कुलं च शीलं च सनाथता च, विद्या च वित्तं च वपुर्वयश्च।
वरे गुणाः सप्त विलोकनीया–स्ततः परं भाग्यपरा हि कन्या" ॥ १ ॥

राजाऽजल्पत्–'तवाऽऽकार–विवेकाद्यैः सुरीगिरा च कुलादिकं ज्ञातमेव, अतः प्रार्थनां मा वृथा कृथाः'। कुमारे मौनं स्थिते ज्योतिष्कार्पिते लग्ने नृपस्तेन सह सौभाग्यमञ्जर्याः पाणिग्रहोत्सवमचीकरत्। ततो नृपदत्ते सौधे नवोढया पत्न्या सार्धं कुमारो यथाकामं विलसन् नृपं भजते। अन्येद्युस्तं कुमारं नृपो बभाषे–'अस्माकं कुलेऽसौ आचारोऽस्ति यद् उद्वाहानन्तरं वरो वध्वा सह प्रौढोत्सवैरेकेन पशुना मासान्तः कुलदेवतायाः पूजां कुर्यात्। अतः श्वश्चतुर्दश्यां युवां कुलदेवतां पूजयेतम्'। कुमारो व्याहरत्–"अहं कदाचन निरागसो जन्तोर्घातं न कुर्वे, न कारये, न चाऽनुमन्ये। यतः—

"नास्ति हिंसासमं पापं, नरकादिप्रदानतः। न चाऽहिंसासमं पुण्यं, दानात् स्वर्गा-ऽपवर्गयोः" ॥ १ ॥

हे राजन्! प्राणिनां वधात् शान्तिर्न भवति। यतः—

"अमृतं नौरगाद् वक्त्राद्, नैवाऽपथ्याद् गदक्षयः।
साधुवादो विवादान्न, न शान्तिः प्राणिनां वधात्" ॥ १ ॥

धात्रीशोऽभ्यधात्–'तदा भोज्य-खाद्यादिभिस्तामर्चेतम्, यतोऽनर्चिता हि साऽनर्थं दत्ते'। कुमारोऽ-

भ्यधत्त–'मिथ्यादृष्टेर्नुतिमात्रं[1]मपि नो कुर्वे, अर्चायास्तु का कथा? । यस्याऽर्हन् देवस्त्राता, तात्त्विको गुरुर्धर्मश्च, तस्येन्द्रोऽप्यनर्थाय न प्रभुः, ततः केयं वराकिका? । यस्य हृदि जिनस्तस्य ग्रहाः प्रसन्नाः स्युः, सुरा वशवर्तिनो भवन्ति, भूपा न प्रभवन्ति, खला दूरतो नश्यन्ति, सम्पदश्च विलसन्ति' । ततो जामातुरधिकं वक्तुमनुचितं मत्वा तं गृहे प्रेष्य नृपो देव्या गृहे गत्वा तामब्रवीत्–'हे देवि! यो जामाता त्वयाऽदायि स एव त्वां नाऽर्चति । ततस्त्वं स च जानीथः, त्वद्भक्तोऽप्यहं किं करोमि?' । इत्युक्त्वा भूपो देवीं नत्वा गृहेऽगात् । अथ कुमारोऽपि देवीं सप्रत्ययां विदन् मनाक् शङ्कमानस्तमस्विन्यां[2] जैनीमर्चां पट्टे निवेश्य पुष्प-धूप-दीपादिभिस्तामभ्यर्च्य जिनध्यानैकलीनात्मा निष्कम्पमानसस्तस्थौ । द्वितीये प्रहरे दिशो व्याप्नुवतीं धूम्यामद्राक्षीत्, तया व्याकुलितः परिकरः कृतकोलाहलो नष्टः । इममुपसर्गं देव्या कृतं संभाव्य सुधीः कुमारो दध्यिवान्–'अर्हन्तं ध्यायतो मम सम्यक्त्वस्थिरचेतसो भीर्नास्ति' । ततः पञ्चनमस्क्रियां ध्यायन् कुमारः कायोत्सर्गे तस्थौ । धूम्याव्यपगमे तत्र सर्वत्र ज्वालाः प्रासरन्, ततो रौद्रस्त्रीरूपधारिणी देवी प्रादुरभूत् । अग्निस्थानोपमेक्षणा तालमानचरणा मूटकाभशिरा गिरिकन्दरोदरी चक्र-त्रिशूल-खड्ग-डमरुकान्वितैश्चतुर्भिर्भुजादण्डैर्भीषणा स्पष्टमट्टहासैश्च नभस्तलं स्फोटयन्ती सा देवी प्राह–'रे रे दुष्ट! मयैव एवं परां श्रियं प्रापितोऽपि मामेव विगर्हसे? । सम्प्रत्यपि मम परां पूजां प्रणतिं च कुरुष्व, अन्यथा मत्क्रुधि सुत्रामा[3]ऽपि न त्राता[4], एवमेव मरिष्यसि' । तथाप्यक्षुभिते मौनिनि कुमारे

१ स्तुतिमात्रमपि । २ रात्रौ । ३ इन्द्रोऽपि । ४ रक्षिता ।

मौलौ रुषा ज्वालाकरालितं ज्वलनं ववर्ष, परं जिनध्यानप्रभावात् तेन ज्वलनेन कुमारो न पराहतः, ततोऽग्निर्विलीनः[1]। अथ सा देवी हर्यक्षम्[2] अमुचत्। स घोरं गर्जन् पुच्छाच्छोटैर्धरित्रीं कम्पयन् यावद् नखरायुधैराहत्य भक्षयितुं ससज्ज तावत् कुमारस्य जिनध्यानानुभावेन तस्य सिंहस्य दंष्ट्रा अपतन्, नखाश्च भग्नाः। ततः सिंहोऽपि द्राग् अपासरत्। अथ दर्पाद् देवी फूत्कारैर्भरिताम्बरान् सर्पान् अमुचत्, ते हि शतशो मणिभिर्दीप्रा यमदोर्दण्डसदृशाः स्फुटस्फटाटोपाः कोपाद् द्राक् तम् अवेष्टयन्, दंशनैः[3]रदशन्, शरीरैर्वेष्टं वेष्टम् अपीडयन्, स्फटाच्छटाभिश्च गदाभिरिव सर्वतो जघ्नुः। परं कुमारस्य जिनध्यानप्रभावेण तेषामपि दन्ता निपेतुः, स्फटाभ्यो मणयस्तुत्रुटुः, निःशेषाणि चाऽस्थीनि भग्नानि, ततस्तेऽपि तस्य न प्राभवन्। तेष्वपि नष्टेषु सविस्मया देवी दध्यौ—'इमं ध्यानस्याऽनुभावेन नैवाऽहं पराभवितुं समर्था, अतोऽस्य ध्यानमेव अनुकूलाचरणैर्बाधिष्ये, ततः प्रभविष्यामि'। इति ध्यात्वा सा चन्द्रमुखी कमलेक्षणा अलङ्कारतेजोभिर्विध्वस्तान्धकारा सलीलगतिः कामक्रीडावनी दिव्यरूपभृद् मधुरमवोचत्—"हे स्वामिन्! मम समस्तमपराधं क्षमस्व। अहं स्मरातुरा कञ्चित् सुभगं सात्त्विकं पतिं गवेषयामि, तव सौभाग्यं वीक्ष्य परीक्षा कृता। ततः स्निग्धां मुग्धां मनोऽनुकूलां च मां प्रपद्य मनुष्यभवेऽपि दिव्यान् सुदुर्लभान् भोगान् मुदा भुङ्क्ष्व। तव दास्यं विधास्यामि, नित्यशो दिव्यं लास्यं करिष्यामि, तवाग्रे च यथामनःप्रीतं गीतं गास्यामि"। एवंविधैः कामोज्जागरुकैर्वचोभिश्चाल्यमानोऽपि कुमारो ध्यानान्न चलितः। ततो विस्मिता

१ विध्यातः। २ सिंहम्। ३ दन्तैः।

देवी आत्मन आकारं संवृत्य अभाणीत्–"तव सत्त्वात् सम्यक्तुष्टाऽस्मि, अत उपसर्गं न विधास्यामि । हे कुमार! वद, किमिदं मन्त्रादिकं ध्यायसि यत्प्रभावाद् न प्रभवामि?, कश्च तव धर्मो येनोपकारिणीमपि मां नाऽर्चयसे?" । इति तद्वचनं श्रुत्वा कायोत्सर्गं प्रपार्य कुमारोऽवक्–"जगज्ज्येष्ठान् परमेष्ठिनो ध्यायामि, येषां ध्यानाद् आध्यात्मिकम् आधिदैहिकम् आधिदैविकं च त्रैधमपि दुःखं क्षणाद् ध्रुवं विलीयते । मम धर्मोऽर्हत्प्रणीतो जगद्धितो दयामूलः, यस्मिन् सम्यक्त्वधारिभिर्मिथ्यादृगर्चादिकं त्याज्यम् । अतो भद्रे! यदि आत्मनो हितमिच्छसि तदा हिंसां मा कारय, देवा अपि हिंसातः क्रमेण नरकं प्रापुः" । ततस्तस्यै पृच्छन्त्यै कुमारो विस्तरत आर्हतं धर्मं विविच्य दया-हिंसाफले आचचक्षे । ततः कुमारवचनात् प्रबुद्धा सती सा सम्यक्त्वं प्रपेदे, वधाच्च विरता । पूर्वकृतहिंसोत्थपापहृद् अर्हत्पूजादि सङ्घे धर्मसाहाय्यकादि शासनप्रभावनादिकं चाऽङ्गीचकार । गुरुभक्त्या कुमाराय दिव्यामौषधिं ददौ, यया शिरसि न्यस्तया स्वा-ऽन्ययोर्यथेच्छं रूपं भवेत् । ततोऽलङ्कार-नेपथ्ये दत्त्वा, पुष्प-रै-मणीन् वर्षित्वा, दुन्दुभिं वादयित्वा, तं च नत्वा देवी तिरोदधे । अथ सा राज्ञो गृहे गत्वा इत्यवक्–'शेषे जागर्षि वा?' । नृपः स्माह–'जामातुर्गृहे धूम्यादि पश्यन् किं शये?' । देव्यभणत्–"स सात्त्विकसत्तमः प्रतिकूलैरनुकूलैश्च उपसर्गैर्न क्षुब्धः, मां च दयामूलम् आर्हतं धर्मं प्रत्यपीपदत् । राजन्! त्वमपि तत्पार्श्वे आर्हतं धर्मं प्रतिपद्येथाः" । इत्युक्त्वा देवी तिरोदधे । प्रातर्भूपादयः सर्वे दुन्दुभिनादैर्मुदिता निशावृत्तं शुश्रुवांसः कुमारागारमागमन् । तत्र नव्यदिव्यालङ्कार-वाससं कुमारं रत्नादिपुञ्जांश्च दृष्ट्वा आश्चर्यानन्दाऽद्वयं ययुः । कुमा-

रोऽपि अभ्युत्थानादिविनयं विधाय पृच्छते महीभुजे निशावृत्तं यथातथमवोचत् । ततश्चमत्कृता भूपादयः कुमारस्य सत्त्वं जिनधर्मानुभावं चाऽस्ताविषुः । यावत् ते कुमारस्य वचनेन धर्ममङ्गीकर्तुमिच्छन्ति तावद् उद्यानपालको धराधीशं व्यजिज्ञपत्—'ज्ञानी धर्मयशा गुरुर्बहुपरीवारयुक्तः समागतः' । तच्छ्रुत्वा कुमारवचनाद् नृपाद्या हर्षेण तत्र गत्वा वन्दित्वा च धर्मम् अशृण्वन् । सविस्तरं धर्मं तत्प्रभावं च निशम्य अमी सम्यक्त्वाद्यं प्रपद्य स्वस्वधामसु अगमन् । अथ नृपो नृपपुत्रा राजवर्ग्याः पौराश्च कुमारवृत्तं संवीक्ष्य कुमतानि मुक्त्वा जिनधर्मैकप्रवणा बभूवुः । एवं धर्मकर्ममयं समयं गमयन् सर्वलोकमहितो जगद्विदितश्च कुमारोऽभूत् ।

इति तपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे श्रीजयानन्दकुमारस्य महासेनपल्लीशविजय-गिरिमालिनीदेवीप्रतिबोध-तदर्पितमहौषधीद्वयलाभ—हेमपुराऽऽगमन-सौभाग्यमञ्जरीद्वितीयपत्नीपरिणयन—रेल्लणीदेवीप्रतिबोध-तदर्पितकामितरूपकारिमहौषधीप्राप्ति—हेमप्रभभूपादिबोधिलाभादिवर्णनो नाम षष्ठः सर्गः ॥

# अथ सप्तमः सर्गः ।

अर[1]मरं[2] रमणं[3] रमणीोज्झितं[4], शिवकरं प्रणमामि शिव[5]श्रियम् ।
अतिशयाऽद्भुतमद्भुतसौख्यदं, जिनवरं जनता[6]नतपत्कजम् ॥ १ ॥

अथ श्रीजयानन्दकुमारः शत्रुविजयादीनि कुर्वन् भूपं स्वगुणैश्च प्रजा रञ्जयामास । अन्येद्युर्भूपतिः श्रीवर्धनकुमारादिपुत्रशतयुक्तः सभायामुपविष्टोऽस्ति, तदा उद्यानपाल औत्सुक्यादागत्य व्यजिज्ञपत्— 'देव! तव क्रीडावनमेकेन कोलेन[7] भज्यते, स च घोरैर्घुर्घुरारावैर्निर्जरा[8]नपि त्रासयन् कोलरूपेण काल इव भटानपि भापयते'। एवं श्रुत्वा क्रुद्धो नृपस्तं हन्तुं यावद् यातुमिच्छति तावत् शतं पुत्रास्तं विनय-युक्त्यादिभिर्निषिध्य सन्नह्य गज-वाज्याद्यैः सह कोलं हन्तुमुद्यानं गताः । श्रीजयानन्दस्तु पराक्रम्यपि पशुत्वेन तमुपैक्षत, योद्धुमनिच्छुरपि च कौतुकाय तान् अन्वगात् । अथ भूजानिपुत्रा[9] वने कोलं दृष्ट्वाऽऽकारयन्त, तं च कोपकरालाक्षं स्फुटमभ्यापतन्तं युगपद् बाणश्रेणीर्ववृषुः । ता बाणश्रेणीः कोल उत्पतन् अवपतंश्च दंष्ट्राभ्यां खण्डशश्चक्रे, तेषामेव च पश्यतां हस्त्यश्वादीन् अपातयत् । गदा-मुद्गर-खड्गौघानपि अवग-

---

१ अरम्—अरनाथम् । २ अरम्—अत्यर्थम् । ३ स्वात्मनि रमते इति रमणस्तम् । ४ कामत्यक्तम् । ५ शिवस्य श्रीर्लक्ष्मीर्यस्य तम् । ६ जनसमूहैर्नते—प्रणते पत्कजे—चरणकमले यस्य तम् । ७ किरिणा । ८ देवानपि । ९ पृथ्वीपतिसूनवः ।

णयन् नखरैराहत्य वीरहृदयानि व्यदारयत् । फालाकुलो वली कोलः क्षणं व्योम्नि क्षणं च भुवि रणस्य अग्रे मध्ये प्रान्ते च योद्धृभिर्दृष्टः । इत्येवं राजकुमारान् व्याकुलितान् भयविह्वलांश्च त्रातुं श्रीजयस्तं प्रत्यधावत । युद्धनीतिवित् कुमारः कोलं निरायुधं भूस्थं च दृष्ट्वा अश्वं विमुच्य खड्गं च कट्यामाबध्य कोलमाह्वत । कोलः फालं दत्त्वा यावत्कुमारस्योपरि पतति तावत्कुमारेण मुष्ट्याऽऽहत्य तद्दंष्ट्रे खण्डशो व्यधात् । तथापि बलवत्त्वेन कोलमात्मनि पतन्तं चरणे धृत्वा कुमारश्चक्रभ्रमम् अविभ्रमत्, ततस्तमुत्क्षिप्य दूरात् सप्ततालान्तेऽत्यजत् । सोऽपि कृताक्रन्दो भुव्यपतत् । भग्नास्थि-नखरः स नंष्ट्वा गहनेऽविशत्, कुमारोऽपि दूरात्तं त्रासयितुमन्वधावत । श्रीजयोऽपि गहने प्रविष्टः, परं क्वचिदपि तं कोलं नेक्षते, पक्षाभ्यां चाऽभ्यापतन्तं चतुर्दन्तं कैलासशैलाभं श्वेतं गजमैक्षिष्ट । तं वीक्ष्य कुमारोऽमोदत, भ्रमि-मुष्टिप्रहाराद्यैश्च तं वशीकृत्य आरुरोह । आरुह्य मुष्ट्या हेमपुरं प्रत्यवालयत्, परं गजराजस्तु बलाद् दूरं वनं प्रत्यधावत । कियद्भुवमतिक्रम्य स गजो जितवायुना वेगेन सपक्षोऽचल इवोत्पत्य गगनेऽचालीत् । कुमारस्तत्पृष्ठस्थः सरांसि गोष्पदानीव, सरितः सारणीरिव, पर्वतांश्च वल्मीकानिव[1] पश्यन् 'कोऽप्ययं वैरी मां समुद्रादौ मा क्षैप्सीत्' इति विचिन्त्य वज्रेणेव मुष्टिना तं जघान । अथ स घातविह्वलस्तम् अनाधारं विहायसि[2] विहाय क्वापि गतः । कुमारस्तु तदैव पतन् देवीदत्तां विघ्नवारिणीमौषधीं स्मरन् क्वापि सरस्यपतत् । तत्तीर्त्वा तटेऽगमत् । अथ कुमारो मार्ग-ग्रामादिशुद्ध्यर्थं महावटमारुरोह । तत्र निकटे एकं ग्रामं तन्मार्गं च पश्यन्

१ वामलूरानिव, भाषायां 'राफडो' । २ गगने ।

कुमारो यियासया यावदुत्तरति तावद् न्यग्रोधोऽपि व्योम्नाऽगात्। वटो द्रुतं गत्वा महारण्ये कस्यापि गिरेर्निकुञ्जे तस्थौ। कुमारस्तस्माद् अवरुह्य तापसैः सेव्यमानमेकं व्याघ्रं समालोक्य विस्मितः। तस्मै तापसाः प्रोचुः—'हे अक्षिसुधावृष्टे! नरर्षभ! एहि एहि, ते स्वागतम्' एवं कथयद्भिस्तैः ससम्भ्रममुत्थाय प्रीतहृदयैरालिङ्ग्य उचितासनेऽवस्थापितः। कुमारोऽप्राक्षीत्—'हे तापसाः! कोऽयं व्याघ्रः?, कथं चाऽसेव्यः?'। तेऽप्यूचुः—'महतीयं कथा, वक्ष्यामः, भोजनं कुरु' इत्युक्त्वा गौरवाद् अलपयन्। ततो मिष्टैः फलाद्यैर्महिषीपयोनिष्पादितेन च पायसेन तम् अभोजयन्। ततः प्रधानासनासीनं कुमारं हरिवीराह्वयो युवा तापसः सर्वं व्याघ्रादिचरितं जगौ—

"महापुरे नरसुन्दरो नृपोऽभूत्। अस्य पुत्रादिभ्योऽप्यतिस्नेहपात्रं क्षत्रियपुङ्गवो हरिवीराभिधो बालवयस्यः सेनाधिपोऽस्ति। इतश्चाऽस्य भूभुजः प्रीतिपात्रं भोगपुरेशः स्वजनाग्रिमो भोगराजो मातुलोऽस्ति। स च सूरपुराधीशेन पृथिवीभुजा सूरपालेन वैरिणा भोगपुरे गत्वा युद्धार्थमाहूतः। सोऽपि मानी अभिगम्य चिरं युयुधे, परं न्यूनबलत्वेन भग्नः सन् पुरस्यान्तरविशत्। ततो बलवन्तं भागिनेयं त्राणायाऽऽजूहवत्। सोऽपि धीर-वीराग्रणीर्धन्यंमन्यो व्यचिन्तयत्—'अद्य भाग्येन स्वजनोपकृतिक्षण उपतस्थे। यतः—

"किं तद्राज्यं रमा सा किं, यतो नोपकृतिः परे। सर्वेपूपचिकीर्षन्ति, महान्तः किं पुनर्निजे?" ॥ १ ॥

एवं ध्यात्वा भूपो यावद् मातुलं त्रातुं यियासति तावत्सेनानीरूचे—'भेके तार्क्ष्यस्य कः पराक्रमः?। अहं सूरपुरे गत्वा सूरपालं च विजित्य भवतो मातुलं त्रास्ये, हे नाथ! आदेशं ददस्व'। तच्छ्रुत्वा हृष्टो

सती सुरसुन्दरी यथास्थितमवक्, समये च शुभलग्ने दिव्यां पुत्रीमजीजनत्। तस्यास्तापससुन्दरीति नाम दत्तम्। क्रमेण सा तापसीभिः पाल्यमाना पुण्यलावण्यवल्लीव सुलक्षणा ववृधे । अवसरे च बुद्ध्या जितशारदां सद्गुणाढ्यां तां तत्पिता स्नेहात् चतुःषष्टिमपि कला अपीपठत्। काले हेमजटः स्वर्णजटाय निजं पदं दत्त्वा साधनविधिनाऽन्वितां च व्योमगां पल्यङ्कविद्यां दत्त्वा पञ्चत्वं प्राप्य देवत्वं लेभे । ततः कुलपतिः स्वर्णजटस्तान् तापसान् शास्ति। अन्येद्युः स्वर्णजटस्तद्गिरेर्मूर्ध्नि तापसरक्षितुर्गिरिचूडस्य यक्षस्य चैत्ये तस्य पुर उपोष्य ध्याना-ऽऽसनादिभिर्विधिवत् तां विद्यामाराद्धुमारेभे। तस्या लक्षजापे पूर्णे एकविंशेऽह्नि स देवोऽतुष्यत्। ततः स सुरोऽसौ यथेच्छं व्योमगामिनं पल्यङ्कमदात् । स्वर्णजटो यक्षेशं नत्वा स्तुत्वा च पारणं व्यधात्। अथ तापसस्तं पल्यङ्कमारुह्य दूरेष्वप्यद्रि-वनादिषु स्वैरं विमानारूढो विद्याधरवत् तीर्थानि वन्दते। तस्य सौभाग्यसीमा तनया यौवनं प्रापत्, यद्रूपन्यकृता कमलाऽपि दुःखात् चपलाऽभवत्। तस्याः पिताऽनुरूपवरचिन्तया व्याकुलः सन् पल्यङ्कस्थितो नानाभूपपुत्रविलोकनार्थं नानादेशेषु बभ्राम। अन्येद्युः क्वाऽपि राजकुले कमपि भूपजं द्रष्टुं गतः, तल्पगश्चाऽयं व्याघ्ररूपेण प्रत्यागतः । तं दृष्ट्वा भीतास्तापसा नश्यन्तस्तेन संज्ञया संधीरिताः। ततो व्याघ्रो नखैर्भूमौ इत्यलिखत्—'नरोऽहं स्वर्णजटः केनचिद्देवेन शप्त्वा व्याघ्रीकृतः, धर्मतत्त्वज्ञात् पुनरहं नरो भावी, अतोऽत्र तमानयत' । तैश्चिन्तितम्—'तापसेभ्यः परो धर्मतत्त्वज्ञः को भवेत्?' । इति ते स्वमन्त्रविधानादीन् अकुर्वन्, परं कार्यसिद्धिर्न जाता। ततः साङ्ख्यौ-लुक्या-ऽक्षपादादीनां पार्श्वे मन्त्रादिविधानं कारितं, परं ते सर्वेऽपि प्रतीकारा विफलतां

प्रापुः । तत उपायान्तरम् अनासाद्य सर्वेऽपि मदाद्यास्तापसाश्चिन्ताकुला गिरिचूडस्य मन्दिरं जग्मुः । तत्पुरो दर्भसंस्तरस्था उपोषिता जप-ध्याना-ऽऽसना-ऽर्चाद्यैः प्रयत्नत आराधनं व्यधुः । सोऽपि देवोऽष्टोपवासान्ते तुष्टः सन् प्रयोजनमप्राक्षीत् । तेऽप्यवोचन्–'अस्मत्कुलपतिं स्वरूपस्थं कुरु' । देवः प्रोचे–'मम शक्तिर्नास्ति, यतो महता देवेनाऽयं व्याघ्रीकृतः । तस्माद् भो ! ब्रूत, अन्यद् वः किं करोमि ?' । तेऽवदन्–'अस्माकमिष्टसिद्ध्यै धर्मतत्त्वज्ञमानय' । देवो जगौ–'ज्ञानिनो वचसा विज्ञाय तम् आनेष्ये' । ततः क्षण क्वापि गत्वा पुनरागत्य सोऽवदत्–'चतुर्थेऽह्नि स पुमान् स्वयं मिलिष्यति' । इत्युक्त्वा गगनेऽगमत् । ततश्चतुर्थेऽह्नि मदादिषु तापसेषु मार्गं निलोकयत्सु भाग्यात् कुतोऽपि त्वमागाः । हे भद्र ! कुलपतिं चेत् स्वरूपस्थं कर्तुं समर्थोऽसि तदा कुरु, यतः सज्जनानां परोपकार एव स्वकृत्यम्" ।

एवं हरिवीरमुखाद् व्याघ्रस्य चित्रं चरित्रं श्रुत्वा श्रीजयानन्दः सविस्मयं तान् प्रत्यवदत्–'यदि मदुक्तं सर्वज्ञदेशितं धर्मतत्त्वं सम्यक् प्रपत्स्यध्वे तदा भवत्प्रार्थितं करोमि' । तैरुक्तम्–'यद्यस्माकं कार्यं करिष्यसि तदा देवोक्त्या त्वमेव तत्त्वज्ञोऽस्माकं गुरुश्च भावी' । कुमारः प्राह–'तर्हि द्रुतं वह्नि-फलाद्यानयत' । तेऽपि तदुक्तमानिन्युः, वह्निकुण्डाद्यपि च व्यधुः । कुमारोऽचिन्तयत्–'एते आडम्बरेणैव ग्राह्याः प्रतिबोध्याश्च' । इति चिन्तयन् श्रीजयानन्दः स्नात्वा मुद्राध्यानासनादिकमकरोत् । ततः "ॐ नमोऽर्हद्भ्यः, ह्रीं सर्वसम्पद्वशीकरेभ्यः, ह्रीं नमः सर्वसिद्धेभ्यः सिद्धानन्तचतुष्टयेभ्यः, श्रीँ नम आचार्येभ्यः पञ्चाचारपरेभ्यः, ॐ नम उपाध्यायेभ्यः सर्वविघ्नभयापहारिभ्यः, ॐ नमः सर्वसाधुभ्यः सर्वदुष्टगणोद्घाटनेभ्यः,

सर्वाभीष्टार्थान् साधय साधय, सर्वविघ्नान् स्फोटय स्फोटय, सर्वदुष्टान् उच्चाटय उच्चाटय, एनं स्वं रूपमानय, हूँ फुट् फुट् स्वाहा"। इत्यादिमन्त्रान् उच्चार्य पुष्प-फलादिकं च हुत्वा पुरः स्थापितं व्याघ्रम् असकृत् पाणिना स्पृशन्, रेल्लणीदेवीदत्तां यथेच्छं रूपकारिणीमौषधीं नैपुण्यात् तच्छीर्षे न्यस्य पूर्वरूपं नरं व्यधात्। पूर्वरूपं कुलपतिं दृष्ट्वा सर्वेऽपि तापसाः प्रमुदिताः कुमारस्तुतिकारिणः प्रणेमुः। कुलपतिरपि सोत्कण्ठमालिङ्ग्य मुदा कुमारमवदत्–'हारितमानुष्यचिन्तारत्नप्रदाय तुभ्यं नमः'। अथ कुमारस्तापसाश्च कुलपतिमपृच्छन्–'तवैषा व्याघ्रता कथमभूत्?'। ततः कुलपतिरभ्यधात्–"कन्याया वरगवेषणार्थं पर्यङ्कस्थितो भ्राम्यन् अन्यदा गगनाद् गिरिमूर्धनि भ्रष्टपर्यङ्कः पतितः। तत्क्षणे स्वं व्याघ्रीभूतं, शिलास्थं च जैनं मुनिं ध्यानगमद्राक्षम्। तस्य मुनेरग्रे देवीचतुष्टयान्वितं गीत-वाद्यादिसमेतं विश्वनेत्राणां मोहनं दिव्यभङ्गिभिर्नृत्यन्तं सुरमैक्षिषि। तदा मया चिन्तितम्–'अयमेव मुनिः केनचिद् आगसा ममेत्थमकार्षीत्'। ततो दुःखाद् रुदन् प्रणम्य च स्वभाषयाऽवदम्–'भगवन्! मया किमपराद्धं येनाऽहं पातितो व्याघ्रतां च नीतः?, अथ कृपानिधे! प्रसीद, नृत्वं च नय'। मुनिर्जजल्प–'अत्र मम संकल्पमात्रमपि नैव, किन्तु कुतश्चिद् रोषादयं देवोऽकार्षीत्'। अथ नाट्यं कृत्वा देवे स्थिते सति समयं विदित्वा पुनरपि मया मुनिः पृष्टः–'कोऽयं देवः? कस्माच्च ममोपरि चुकोप?'। ततः करुणासागरो मुनिः सुरवृत्तमूचे–"अहं वैराग्याद् विद्याधरेशत्वं परित्यज्य प्रव्रज्यामाददे। क्रमाद् अधीतसिद्धान्तः सन् भव्यजीवान् बोधयन् गुर्वनुज्ञया एकाकी विहरे। अन्यदाऽस्यैव गिरेर्मूर्धनि गगने गच्छन् मृगारिणा हन्यमानं महान्तम् इभमद्राक्षम्।

ततोऽहं करुणया द्रुतमाकाशादवतीर्णः, तपःप्रभावाच्च सिंहो नष्टः । सिंहे नष्टे स्वस्थस्य गजस्य सर्वजीवक्षमणापूर्वं सर्वपापव्युत्सर्जनादिकं कारयित्वा पञ्चपरमेष्ठिनमस्कृतिं ददे । स गजः शुभध्यानान्मृतः पञ्चपरमेष्ठिनमस्कारानुभावतः सौधर्मे मणिचूडाभिधो देवोऽभूत् । यतः—

"नाणाविहपावपराणो वि, जं पाविऊण अवसाणे । जीवो लहइ सुरत्तं, तं सरसु मणे नमोक्कारं" ॥ १ ॥

सोऽयं देवः पूर्वपुण्यं विचिन्तयन् ममोपकारं ज्ञात्वा भक्तितो द्रागत्रागत्य तेजोभिर्दिश उद्द्योतयन् शिलास्थितं मां नत्वा स्ववृत्तान्तमाख्याय मुदा मम पुरोऽनृत्यत् । अत्रान्तरे पर्यङ्कच्छायां दृष्ट्वा त्वां ममोपरि आयान्तं मत्वाऽऽशातनया क्रुद्धः शापं दत्त्वा इमां दशामनैपीत्" । एवं मुनिगिरं श्रुत्वा विनयात् तं सुरं नत्वाऽहमश्रूणि वर्षन् दीनोक्त्या शापमोक्षं याचितवान् । देवोऽपि कृपयाऽलपत्—'रे मूढ ! राज्य-भोगादि त्यक्त्वाऽपि ऋषिमाशातयन् तत्त्वानि न जानासि । निष्फलं तपो मा कार्षीः, मत्प्रभावेण च सज्जितं सपर्यङ्कमारुह्य प्राग्वन्निजं स्थानं व्रज । मासान्ते तत्त्ववेदी पुमान् त्वां स्वभावस्थं करिष्यति, तस्मात् तत्त्वानि विज्ञाय तस्मै निजां कनीं दद्याः' । ततोऽहमत्रागाम्, अग्रतश्च सर्वं वो ज्ञातम्" । इत्याकर्ण्य श्रीजयानन्दः कुमारस्ते तापसाश्च चमचक्रुः । ततो हर्षात् तापसीगीतमङ्गलान् उत्सवान् कृत्वा सर्वे तापसाः संभूय कुमारं धर्ममप्राक्षुः । सोऽपि कुमारो गृहिधर्म-यतिधर्मभेदाद् द्विविधमार्हतं धर्मं विस्तरतो दिदेश । तापसाः प्रतिबुद्धाः सन्तः सम्यक्त्वा-ऽणुव्रतादिकं धर्ममूरीचक्रुः । अथ कुलपतिः प्रोचे—'हे कुमार !

१ नानाविधपापपरायणोऽपि, यं प्राप्याऽवसाने । जीवो लभते सुरत्वं, तं स्मरत मनसि नमस्कारम् ॥१॥ २ स्वीचक्रुः ।

देवेन मम कन्यायाः पतिस्त्वमुक्तोऽसि, तत्त्वां द्रुतं परिणय'। इत्याकर्ण्य कुमारो यावद् न किञ्चिद् वक्ति तावत् तन्मूर्ध्नि पुष्पवृष्टिरभवत्। तां वृष्टिं वीक्ष्य चमत्कृतास्तापसा यावत्समीक्षन्ते तावद् गिरिचूडः सुरः प्रादुर्भूय इत्यभाषत—"भो भो! गिरिस्थितो मुनिर्मया पृष्टः—'एष व्याघ्रः कथं नरो भावी?'। सोऽवक्—'तत्त्वज्ञसङ्गमात्'। पुनरहमप्राक्षम्—'कथमेष तत्त्वविद् ज्ञेयः?'। मुनिः स्माह—'यो नरेन्द्रभूः कोलरूपं त्वां जेष्यति स तत्त्वविद् ज्ञेयः'। ततोऽहं राजधानीषु उपवनावलीर्भञ्जन् बभ्राम, परं मां न कोऽप्यजैषीत्। अथ हेमपुरे भूपाराममर्दिनं मां भूपपुत्राणां शते नष्टेऽयं दोर्मात्रशस्त्रोऽजैषीत्। ततो हस्तिरूपादिमायया व्योममार्गेण मया सवटोऽयं कृच्छ्राद् युष्माकं हितकाम्ययाऽऽनिन्ये। सौन्दर्यौ-दार्य-शौर्यो-पकार-सद्धर्मतादिभिर्गुणैरस्य तुल्योऽन्यो नास्ति, इदं मयाऽनुभूतम्। हे कुलपते! कौतुकं द्रष्टुमदृश्योऽहमत्रागतः, स्वभावरूपकरणादि समस्तं मया दृष्टम्। तथैतेनोपदेशितम् अर्हद्धर्मं श्रुत्वाऽहं प्राग्भवसंस्कारात् प्रबुद्धः सन् मुदा प्राग्भवमचिन्तयम्। तथाहि—पुरा धन्यपुरे धन्याभिधानो धनवानभूत्। तस्य वसुमती नाम्ना पत्नी। धन्यस्य श्रावकः सुहृदभूत्। तत्संसर्गाद् अन्यदा गुरोः सङ्गमे सम्यक्त्वमूलं धर्ममुपाददे। अन्यदा तस्य जायायाः शरीरे रोगोऽभूत्, तच्छान्त्यै सद्वैद्यैश्चिकित्सामचीकरत्। वैद्यभापितैर्वीर्यवद्भिर्विविधभेषजैरुपचारः कृतः, परं तद्देहे गुणो नैव ददृशे। तथापि तद्दृढप्रेम्णा मान्त्रिकादिकान् अपृच्छत्, तैरपि स्वस्वोपायाः कृताः, परं गुणः कोऽपि नाऽभूत्। ततः स गाढस्नेहेन ग्रथिलात्मा नगरे परिभ्रमन् पदे पदे जटि-कार्पटिकानपि आख्यत्—'मज्जायां यो नीरुजं करोति तस्मै लक्षं ददामि'। इति श्रुत्वा कश्चिज्जटी

तमनैषीत्—'तव प्रियां गतरोगां क्षणात् कुर्वे, परं सत्यप्रतिज्ञो भवसि ?' । तेनाऽप्युक्तम्—'सत्यमेव लक्षं ददामि' । ततो विनयेन तं गृहं नीत्वा भार्यामदर्शयत्, भक्त्या च संतोष्य प्रतीकारमकारयत् । तत्प्रयुक्तैरुपायैर्गदोऽगमत् । तां सज्जां संप्रेक्ष्य मेघमालां दृष्ट्वा मयूर इव श्रेष्ठी संहृष्टः । क्रमादुपायैस्तद्भार्या पुष्टशरीरा जाता । ततो जटिनमाग्रहाद् मासं यावत् स्थापयामास । सोऽपि तत्र स्थितः स्वधर्ममुक्त्वा श्रेष्ठिनं जैनधर्मे श्लथं निर्ममौ । ततः श्रेष्ठी तत्पापमनालोच्य मृत्वाऽहं गिरिचूडसुरो जातः, युष्माभिश्च सह प्रबुद्धः सन् शुद्धदर्शनं प्रपेदे । ततो मया पुष्पवृष्टिः कृता । देवोक्तायाऽसौ वराय तापससुन्दरीं दद्धम्" । इति श्रुत्वा कुलपत्याद्याः कुमारमभ्यर्थ्य द्राक् तां कन्यां प्रत्यपीपदन् । सुरः सर्वां सामग्रीमकरोत् । रत्नस्तम्भस्थमुक्तास्रक्तोरणे स्वर्णमण्डपे देवीभिस्तापसीभिश्च गीयमानमङ्गलं दुन्दुभिशब्दं देववन्दिजयारवं गीर्वाणविद्याधरगणसंस्तुतम् उत्सवं गिरिचूडे देवे कुर्वति सति दिव्यवस्त्राभरणभूषितां कनीं कुमारेण सह तापसाः पर्यणीनयन् । देवस्तुष्टः कुमाराय दैवतं कल्पादि ददौ, कुलपतिरपि व्योमगामिनं पल्यङ्कं ददौ । तत्र रम्ये वने गिरिचूडेन निर्मिते स्वर्विमानोपमे सप्तभौमे हिरण्मये हर्म्ये खाद्यादिसामग्र्या संभृते चिन्तितदायिना तद्देवपरीवारेण सेव्यमानः कुमारो नवोढया पत्न्या सह दिव्यभोगसौख्यानि विलसन्नास्ते, पल्यङ्कबलाच्च नित्यं नानातीर्थानि वन्दते । कदाचित् पत्न्या सहितः कदाचिच्च पत्नीविरहितोऽपि कुमारः स्वैरं नदी–वार्द्धि-वनादिषु अमरवद् नानाप्रकारं क्रीडति । पुनः कुमारो जैनधर्मविधिं सम्यक् तापसान् शिक्षयति,

जैनीं दीक्षां तस्याश्च फलमुपदिशति। तेऽपि तापसाः क्रमाद् अधीतसिद्धान्ता अर्हच्छासने दक्षाः सर्वानुष्ठानकुशलाः प्रविव्रजिपवोऽभवन् ।

इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे श्रीजयानन्दकुमारस्य देशान्तरचर्यायां हेमपुरोद्यानगतदुर्जयकोलविजय-तापसाश्रमगमन-स्वर्णजटकुलपत्यादितापसपञ्चशतीसहितगिरिचूडयक्षप्रतिबोध-कुलपतिपुत्रीतापससुन्दरीतृतीयपत्नीपरिणयन-कुलपतिदत्तविद्याऽन्वितगगनगामिपल्यङ्कचलनानातीर्थनमस्करणादिवर्णननामा सप्तमः सर्गः ॥

## अथ अष्टमः सर्गः ।

स्थित्वा सिंहासने यः समवसरणगे धर्ममाख्याति सम्यग्,
वक्त्रैः शस्यैश्चतुर्भिः श्रुत-चरणगतं भव्यजीवव्रजानाम् ।
चिद्रूपं तत्त्वनिष्ठं प्रगतकलिमलं नन्दनं सुव्रतायाः,
वन्देऽहं धर्मनाथं सुर-नरनिकरैरर्चितं तं जिनेन्द्रम् ॥ १ ॥

अथाऽन्येदुः स कुमारः स्वगृहावासे सप्तमीं भूमिमास्थितो भद्रासनासीनो यावद् आकाशं विलोकते तावदेकं परिव्राजं सुरूपं यौवनस्थं गगनादवतरन्तं द्रुतं स्वसमीपमागच्छन्तं ददर्श । स मुनिस्तत्रागत्य

आशीर्वादं दत्त्वा दापितासने निविष्टः सन् यावत् कुमारस्य वदनकमलं निरीक्षते तावत् कुमारः स्माह–'भोः! कस्त्वम्?, कुत आगाः?, प्रयोजनं ब्रूहि, किमिच्छसि?'। परिव्राजकोऽवादीत्–"हे शूर! तवाऽसाध्यं किमपि नास्ति, त्वत्तः परोपकारी परो नास्ति, अतः स्ववृत्तान्तं वच्मि, त्वं शृणु–भद्रदत्ताभिधानो मद्गुरुर्गङ्गातटेऽभूत्, तस्याऽहं गङ्गदत्ताभिधः शिष्योऽस्मि। गुरुणौषधीकल्पो दत्तः, तस्मात्कल्पादहम् औषधीर्लक्षयामि। ताः पुनर्विविधा औषध्यो मलयकूटाह्वे गिरौ सन्ति, ताश्च विधिना साधिता एव सम्यग् लक्ष्याः स्युः। ततस्तत्राऽसकृद् गत्वा मया साधना प्रारेभे, परम् अस्य गिरेः प्रभुः क्षेत्रपालो मलयमाल उपसर्गैर्मां भापयति, अतः साधयितुं समर्थो न भवामि। पुनर्गुर्वाम्नायतः पादलेपाद् एकैकोत्पातत आकाशे योजनं यामि, स्वैरं च पृथिव्यां भ्रमामि। अद्याऽस्मिन् वनेऽसम्भवं स्वर्णमन्दिरं वीक्ष्य तापसप्रश्नात्तव लोकोत्तरं वृत्तं ज्ञातम्। ततो देवैरप्यजय्यं त्वां ज्ञात्वा स्वार्थसिद्धिं याचितुमागतोऽस्मि, यतो महति याच्ञाऽपि न त्रपायै भवति। अतो भद्र! चेत्तं क्षेत्रपालं जेतुं शक्तोऽपि तद् औषधीः साधयतो मम विघ्नान् हर्तुमुत्तरसाधको भव"। ततो विश्वोपकारकर्ता कुमारः स्माह–'शक्रमपि विजित्य तव कार्यं साधयामि'। मुनिरभ्यधात्–'साधु साध्वेतत्, त्वयि सर्वं सम्भवति। परं सोऽद्रिराट् इतो योजनानां शतं दूरं वर्तते, साधना च कृष्णद्वादशीत आरब्धा त्रिभिर्दिनैश्चतुर्दशीरात्रौ यदि निर्विघ्नता भवेत्तदा सिद्धिं याति। अद्य तु कृष्णाष्टमी वर्तते, तद् हे सन्मते! सज्जो भव, प्रातस्त्वां स्कन्धेऽधिरोप्य त्रिभिर्दिनैर्यास्यामि'। कुमारः स्मित्वा स्माह–'त्वं याहि, स्वार्थं साधय। द्वादश्यां रवेरुदये स्वशक्त्यैवाऽहं समेष्यामि,

अत्रार्थे संशयो न कर्तव्यः, युगान्तेऽपि सतां वचनं मेरुरिव न चलत्येव'। इति श्रुत्वा प्रमुदितः परिव्राजकः कुमारं मिलनस्थानं प्रज्ञाप्य उपस्करान्वितः खगत्या तत्राऽद्रौ गतः । अथ श्रीजयानन्दः कुमारः स्वपत्नीं प्राह—'प्रिये! मलयकूटाद्रौ गत्वा तत्र दिनत्रयं स्थित्वा विद्यासाधकसान्निध्यं कृत्वा इह वेगादेष्यामि । परोपकारपुण्यस्यांशस्तवापि भविष्यति, अतः पित्रादिना पाल्यमानाऽत्र समाधिना तिष्ठः' । इति पत्नीं प्रज्ञाप्य कुमारः पल्यङ्केन एकादशीनिशायां तत्राद्रौ अगात् । पल्यङ्कं क्वापि संगोप्य प्रातः साधकममिलत् । अकथयच्च—'भो! इष्टं साधय, तव मयि रक्षके सति न कुतोऽपि भयम्'। ततः प्रमुदितः स कुमारस्य सत्य-साहसे स्तुवन् विधिना साधनामारेभे। अथ तृतीयेऽह्नि चतुर्दश्यां भूतेष्टनिशायां प्राच्यां दिशि कुमारो घोराम् अन्धितदिङ्मुखां धूम्यामुदैक्षत । सोऽप्यकुतोभयो धीरः प्राग्देव्यर्पितौषध्याः सान्निध्याद् नमस्कारजापाच्च तां द्रुतमनाशयत् । ततः सोऽवहितः क्षणाद् धूम्यानुगमग्निं पश्यन् प्राग्वत् प्रत्यक्षिपत् । अथ कुमारो भीमाट्टहासमश्रृणोत्, तेनापि धीरितसाधक एप यावन्न क्षुभ्यति तावदाकाशे वाण्यभूत्—'किं पूर्वं साधकमसि अथवा उत्तरसाधकम्?' । श्रीजयः स्माह—'पापाणान् मुञ्च, आवां तव वशौ न वर्तावहे । अथ च मृगः सिंहं कथमत्ति? सिंहरक्षितं वा मृगं कथमत्ति? । अहं त्वेप शक्रमपि जयामि, पुनस्त्वज्जये का कथा?' । तदा पुनरपि वियति गीरभूत्—'रे मूर्ख! अन्यार्थं किं मुमूर्षसि? किं त्वया श्रुतमपि न यद् निर्जराः क्वचिदपि मौखर्यान्न जय्या भवन्ति?। अतस्त्वं दूरे व्रज, स्थैर्यं त्यज, निरागसं त्वां न हन्मि, परं त्वयि रक्षके सत्यपि सागसं साधकं तु हनिष्यामि । अयं हि मद्गिरेर्विविधौपधी-

रादातुमिच्छुर्निधां साधयन् ममाऽर्चादि नाऽकरोद् इति हन्यते'। कुमारोऽपि हसित्वा प्राह 'त्वं वीरश्चेद् अदृश्यः किं भवसि? दृश्यो भव, यथा तव वीरतामहमपि वेद्मि'। एवं श्रीजयेन तर्जितः सन् सोऽप्यमरः कोपात्कोलरूपेण[1] पदाहतैः कम्पिताद्रिर्दृश्योऽभूत्। कुमारोऽपि तमभ्यापतन्तं शूकरं वीक्ष्य क्रुद्धस्तेन समं युद्धं चिकीर्षुर्देवीदत्तौपधीबलात् शौकरं रूपं विधाय युद्धेऽभ्यधावत। ततो द्वावपि मिलितौ मदोद्धुरौ घोरैर्घुर्घुरारावैर्गिरेर्गुहा गर्जयन्तौ अयुध्येताम्। मिथो दंष्ट्राभ्यां घ्नन्तौ, खरैर्नखैर्दारयन्तौ, वलन्तौ, विचरन्तौ, सस्पर्द्धौ, जयकाङ्क्षिणौ उत्प्लुत्योत्प्लुत्य पाततो गिरेर्धात्रीं[2] कम्पयन्तौ, महाकायौ महौजस्कौ दारुणं रणं चक्राते। अथ श्रीजयो दंष्ट्राभ्यां द्रुतं दंष्ट्रे भङ्क्त्वा दैवतं दंष्ट्रिणमजैषीत्, तदा स दंष्ट्री कष्टाद् रसन्नष्टः। ततः सुरो गजरूपेण पुरः प्रादुरभूत्, कुमारोऽपि करिरूपेण तमयोधयत्। तयोर्युधि अचलाऽप्यचलत्, आकाशं स्फुटितमिवाऽभवत्, ऊर्जितैश्च गर्जितादिभिर्गिरिश्रृङ्गाण्यपतन्। अथ कुमारेभः सुरेभं भमदन्तं त्रुटच्छुण्डं[3] सर्वाङ्गस्फुरितव्यथमनाशयत्। ततस्तौ सिंहरूपेण पुच्छाच्छोटस्फुटद्गिरि विविधं युयुधाते, तदाऽपि सुरसिंहोऽभज्यत। एवं सर्वयुद्धेषु तमजय्यं दृष्ट्वा क्रोधान्वितः सुरो विश्वभयावहं रूपं कृत्वा प्रादुरासीत्। तथाहि—तालोच्चस्थूलजङ्घाभृद्, गिरिगुहासदृशोदरः, पृथुदीर्घशिलासमहृदयो, लम्बायमानकृशकन्धरः, कटाहतुल्यास्यः, कीलकसदृशरदावलिः, अग्निकुण्डसदृक्षनेत्रः, स्थूलतुच्छचिपिटनासिको, वटशाखासमानदोर्दण्डः, त्र्यस्रमस्तकः, स्थूलकर्बुरकेशो, बिलवत्कर्णो, निम्नगल्लः, स्थूलरज्जुसमस्नायुजालः,

---

१ शूकरस्वरूपेण। २ पृथ्वी। ३ त्रुटन्ती शुण्डा यस्य तम्।

अञ्जनश्यामो, रौद्रबीभत्सरूपः, किङ्किणी-स्वनादैर्गुहा नादयन्, एकेन हस्तेन डमरुं, द्वितीयकरेण स्फारस्फटाटोपान् नागान्, तृतीयकरेण मुद्गरं, चतुर्थेन च करवालं दधत्; पाद-भुजाघाता-ऽट्टहासैर्दिशो गर्जयन् जगौ—'अहम् अस्य गिरेर्विभुर्मलयमालाख्यः क्षेत्रपालोऽस्मि यस्त्वया सार्द्धं कोलादिरूपभाग् युद्धकेलिं व्यधात्। यच्च स्वाभिभवमदीदृशं तत् केलिवृद्धये, अतो रे मूढ! मुधा स्वं जित्वरंमन्यो मा स्म भूः। अद्यापि न किमपि विनष्टं, चेज्जिजीविषुरितोऽपसर, परार्थं हि मुमूर्षुं त्वां बालं घ्नतो मम यशो नास्ति'। श्रीजय उवाच—"युद्धानि तव केलयेऽभवन्, मम तु परोपकाराय। अपि च वपुषो वयसश्च वृद्ध्या न जीयते, किन्तु तेजसः स्फात्या; यतो भूधरैरपि बालस्य रवेः पादा मूर्ध्नि धार्यन्ते। यदुक्तम्—

"हस्ती स्थूलतनुः स चाऽङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो, वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरिः।
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तम—स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः?" ॥१॥

किञ्च, धीरैर्मृत्युरपि परोपकारायाऽर्थ्यते, यतो येषां धर्म-यशःप्राणाः स्थिरा भवन्ति ते मृता अपि जीवन्त्येव। अतो मम जयो वा मरणं वा युद्धे एव ज्ञास्यते, परं तव स्वौजश्चेत् प्राग्युद्धैर्न प्रतीतं तत्पुनर्युध्यस्व'। एवं श्रीजयेन तर्जितः सन् क्रोधान्धः क्षेत्रपालोऽसि-मुद्गरौ समुत्पाट्य कुमारं हन्तुं प्रत्यधावत। कुमारोऽपि औषध्या तद्रूपसदृशं रूपं कृत्वाऽसिभृत्करः स्मृतपञ्चनमस्कृतिर्योद्धुमुपतस्थे। तौ मिथो दत्तान् घातान् पाटवाद्वञ्चयमानौ मदोद्धतौ वीरौ क्रुधा चिरं खड्गाखड्गि युयुधाते। अथ च्छलान्वेषी क्षेत्रपालः श्रीजयं दुर्जयं ज्ञात्वा वाद्यध्वानैः कर्णौ विध्यन्, नागैरङ्गानि दंशयन्, चतुर्भिर्भुजैर्युगपद् मुद्गर-खड्गाभ्याम्

आघ्नन्, त्रिदशानपि भापयन् सर्वशक्त्या युयुधे । तदा कुमारोऽपि विघ्नहरौषधीबलाद् धर्मप्रभावाच करवालेन डमरुकं द्रुतं खण्डशश्चक्रे, नागांस्त्रोटयामास, मुद्गरमचूर्णयत्, खड्गं च शतखण्डं व्यधात्; पुण्यैर्हि किं न साध्यते? । अथ कुमारस्तं शस्त्ररहितं दृष्ट्वा स्वयमपि असिमत्यजत् । ततः क्षेत्रपालो वृक्षं जग्राह, कुमारोऽपि वृक्षेण द्राक् तद्वृक्षमचूर्णयत् । एवं नवैर्नवैर्वृक्षैश्चिरं युद्धमभूत् । ततो द्वावपि समत्सरौ चमत्कृतस्वान्तैर्देवैर्मुहुर्मुहुः स्तूयमानौ महतीभिः शिलाभिरयुत्सातात्म् । ततस्तौ मल्लयुद्धेन दृढं ढुढौकाते । पादैर्भुवं स्फोटयन्तौ, कुर्कुटवदुत्प्लुत्योत्प्लुत्य मुष्टिप्रहारिणौ, पतन्तौ उत्पतन्तौ च कैरपि न लक्षितौ; भुवि मिथ उपर्यधो लुठन्तौ युद्धेऽपि सम्बन्धिनाविव आश्लेष-विश्लेषादि अन्वभूताम् । भुजास्फोट-परस्कन्धाघात-मुष्टिप्रहारोत्थितशब्दैर्विश्वभयङ्करैश्च सिंहनादैर्गिरयो जगर्जुः, अचलाऽप्यचलत्, दिशो बधिरिताः, वार्द्धय उद्वेला अभवन्, सरितो विसंस्थुला जाताः, वृक्षेभ्यः फलानि पेतुः, शैलानां शृङ्गतः शिलाः पेतुः, प्रेताश्च प्रीता ननृतुः । अथ श्रान्तं क्षेत्रपालं कुमारो मुष्ट्याद्यैर्घातं घातं लीलया दूराद् उदलीलयत्, ततो घोरशब्दचूर्णितविशालशिलो जाततीव्रव्यथः पतितः, परं देवत्वात् खण्डशो न जातः । ततो देवः कुमारस्य महिमौजसी संप्रेक्ष्य चमत्कृतः सन् जितंमन्यः स्वस्वरूपं प्रकटीकृत्य कुमारमभ्यधात्—'अहो! भुवि सुरैरप्यजय्यो वीरस्त्वमेवाऽसि, यतोऽहं प्राक् सुरा-ऽसुर-नरेषु न केनाऽपि जितोऽस्मि । मयि जिते त्वया सर्वं जगज्जितमिति मन्ये । ततः पृच्छामि—कस्ते मन्त्रोऽथवा धर्मो यद्बलात् त्वं बलवानसि' । तदा श्रीजयस्तं शान्तं मुक्तक्लेशं धर्मार्थिनं प्रीतं च विज्ञाय जगाद—'मम देवो वीतरागोऽस्ति, गुरुश्चारित्रवान्, दयाढ्यः

सम्यक्त्वादिर्धर्मः, तस्मादहं जयामि'। एवं सविस्तरं कथितं धर्ममाकर्ण्य प्रमुदितः क्षेत्रपालोऽभाणीत्—"साधु साधु बोधितोऽस्मि। अहं प्राग्भवे ऋद्धिमान् धर्मदत्तः श्राद्धोऽभूवम्। अन्येद्युरुद्याने धनेश्वराह्वः परिव्राजको दृष्टः। स च कीदृशः?—मासक्षपणकर्ता, चतुष्कोटिधनं त्यक्त्वा गृहीतदीक्षो, ध्यानलीनो, निश्शङ्कं निश्चलासनः। तं नमस्कारार्थमागतानां लोकानां पुरो मया गार्हस्थ्यसौहृदाद् 'अहो! एष ध्यानी त्यागी तपस्वी च' इति वर्णितः। ततः श्राद्धैरपि तं स्तुत्यं मत्वा नृपादयो विशेषतः पूजयामासुः। इति चतुर्थातिचारेण मिथ्यात्वस्य प्रवर्तनात् स्वं सम्यक्त्वं विराध्य मृत्वाऽहं मिथ्यादृक् क्षेत्रपालो जातः। सम्यक्त्वे हि सम्यगाराधिते जीवो वैमानिको भवेत्। यदुक्तम्—

"सम्मद्दिट्ठी जीवो, विमाणवज्जं न बंधए आउं। जइ नवि सम्मत्तजढो, अहव न बद्धाउओ पुव्विं"[1] ॥१॥

सम्यक्त्वे हि विराधिते नीचदेवत्वं प्राप्नोति, बोधिर्दुर्लभा स्यात्, अनन्तश्च भवभ्रमो भवति। मया ह्याराधितो धर्मोऽतिचारमात्रेण म्लानः, अतो दुर्गतौ न गतः, बोधिं च त्वत्तः प्राप्तः। त्वदुक्तं धर्ममाकर्ण्य पूर्वसंस्कारजागराद् ज्ञानेनैतत्सर्वमधुना मया तवाख्यातं, ततस्त्वमेव ममोपकारी सुहृद् बन्धुर्गुरुश्च त्वमेव, अधुना मह्यं सम्यक्त्वं यथोचितांश्च नियमान् प्रयच्छ"। इति देवोक्तं श्रुत्वा श्रीजयोऽपि तं प्राशंसत्—'धन्यस्त्वं यद् बुद्धोऽसि'। इत्युक्त्वा कुमारस्तस्मै सम्यक्त्वं हिंसादिनियमांश्च ददे। अथ देवोऽवादीत्—'धर्मदातुस्तवाऽनृणो न स्यां, तथापि वरं वृणु, तं दत्त्वा गुरुमर्चामि'। कुमार उवाच—'भो! मम

१ सम्यग्दृष्टिर्जीवो, विमानवर्जं न बध्यते आयुः। यदि नाऽपि सम्यक्त्वजडः, अथवा न बद्धायुष्कः पूर्वम् ॥ १ ॥

किञ्चिद् याच्यं नास्ति, तथाप्यस्मै साधकाय वाञ्छितौषधीर्देहि, यत एतदर्थमेव ममाऽयमुपक्रमोऽस्ति'। देवोऽजल्पत्–'अहं प्रदास्ये, परमस्य ता न स्थास्यन्ति, यतो न हि भाग्यं विना देवदत्तमपि तिष्ठति। तथाप्यहं तु अनुजानामि, औषधीकल्पपण्डितोऽयं यथाभाग्यं स्वयमुपलभ्य संगृह्णातु। परं प्राग् इमास्त्वमपि गृहीत्वा ममोपकारं कुरु, यतो मद्गिरः साराभिराभिर्गुरुरर्चितः स्यात्'। इत्युक्त्वा स देवः कुमाराय पञ्च वरौषधीर्ददौ। कुमारोऽपि प्रार्थनाभङ्गभीरुरग्रहीत्। देवोऽवादीत्–"कुमार! आसां महिमाद्भुतं शृणु। या पीता द्व्यङ्गुलस्थूला चतुरङ्गुलमायता सा द्वादशसहस्रमन्त्रजापात् सिध्यति। एषाऽर्चिता सती दिने दिने रतानां पञ्चशती दत्ते। तन्महामन्त्रश्चाऽयम्–'ॐ महाभैरवि क्षाँ क्षौँ क्षः श्रियं वितर वितर स्वाहा' १। पीतौषधीप्रमाणा परा रक्तौषधी, साऽर्चिता सती आख्याति–'किं ददे?'। ततोऽर्थे उक्ते सति 'द्विगुणं त्रिगुणं वा लाहि' इति भाषते। मन्त्रश्चाऽयम्–'ॐ महावादिनि ज्ञाँ ज्ञैँ ज्ञौँ महाश्रियं वद वद स्वाहा'। परमेषा कौतुकादिप्रयोजना तु न किमपि दत्ते, अस्या मन्त्रस्य साधनाविध्यादि तु सर्वं पूर्ववत् २। तदर्धप्रमाणाऽपरा श्वेता सर्वरोगापहारिणी समस्तं स्थावरं जङ्गमं च विषं हन्ति। स्वाम्बुसेचनेन प्राणिनां घातव्रणादि सद्य उपशमयति, गते अप्यक्षिणी दत्ते। अस्याश्च साधना काऽपि नास्ति ३। तदर्धमानाऽन्या नीला स्वमन्त्रेण मन्त्रिता सचेतनस्याऽचेतनस्य वा यस्य मस्तके न्यस्यते, पश्चाद् अतीताऽनागतादि यत् पृच्छ्यते तद् ज्ञानिवत्सम्यग्वक्ति, मन्त्रे साधना प्राग्वत्। मन्त्रश्चायम्–'ॐ महाघण्टे चण्डे चण्डशासने प्रश्नार्थं वद वद क्रैँ क्रैँ स्वाहा' ४। पञ्चमी तु श्यामा स्वाम्बुना दुष्टकार्मण-दुर्मन्त्र-चूर्णौ-षध्यादिसम्भ-

वान् दोषान् हन्ति ५" । एवं पञ्चानामप्यौपधीनां विधि-प्रभावादि सर्वं हृदि धारयन् हृष्टः कुमारः क्षेत्रपालसहितः साधकस्यान्तिकेऽगमत् । देवोऽवादीत्–'हे भद्र! कुमारानुभावात् तव तुष्टोऽस्मि, ततो ध्यानं मुक्त्वा ममादेशात् स्वैरमौपधीर्गृहाण' । साधकोऽपि मुदा तस्याऽर्चां चक्रे । अथ कुमारमापृच्छ्य 'कार्यावसरे स्मरेः' इति वदन् नत्वा च देवोऽन्तर्दधे । ततः साधकोऽपि तस्मिन् गिरौ भ्रान्त्वा भ्रान्त्वा स्वभाग्यानुसारेण कियतीरिमा अल्पमहिमा औषधीर्यथाविधि समादाय कुमारमित्याख्यत्–'तव प्रभावाद् ममेप्सितं सिद्धम्, अथ तवाऽनुज्ञया स्वस्थानं यामि' । कुमारोऽपि सहर्षं तं विसृज्य पल्यङ्कगतो रत्नपुरस्योपवने आकाशे आगात्, तत्र चैत्यमद्राक्षीत् । तदुल्लङ्घनाशातनाभियाऽधोऽवतीर्य तस्मिन् चैत्ये विधिना प्रविश्य जिनमनमत् । तत्र मन्त्रसाधनयोग्यतां विभाव्य क्वचित् पल्यङ्कं संगोप्य, शुचिः सर्वं विधिं विदन् श्रीयुगादिजिनस्याग्रे त्रिरात्रेणोपोषितस्त्रीनपि मन्त्रान् जिनध्यानैकतत्परोऽसाधयत् । ततो मुदा परमेश्वरमभ्यर्च्य फलैः पारणकमकार्षीत् । आद्यौपध्या यथाविधि रत्नपञ्चशतीमाप, ततस्तत्राऽष्टाह्निकपूजोत्सवं कृत्वा रत्नपुरेऽविशत् । पुरे भाटकाद् गृहीते निःस्वश्रावकगृहे निवासं चक्रे । तत्र गोशीर्षचन्दनस्याऽर्हत्प्रतिमां लघीयसीं कारयित्वा गुरुणा च प्रतिष्ठाप्य नित्यमर्चते, तत्पूजानन्तरम् आद्योपधी अर्चिता सती सारां पुरुपार्थत्रयसाधिकां निरन्तरं रत्नपञ्चशतीं दत्ते । श्रीजयोऽर्हत्प्रतिमामौपधीयुतां सौवर्णे समुद्गके स्थापयित्वाऽभ्यर्च्य गर्भगेहगे सुरक्षे स्थाने समुद्गकं मुञ्चति । श्राद्धकुटुम्बं नित्यं कुमारस्य भक्तिं करोति, कुमारोऽपि दानैः संतोपयति । याचकेभ्योऽपि भूरिदानं ददत् प्रचुरपरीवारं कृत्वा स स्वैरं

गीत-नाट्याद्यै रमते। अर्थिगृहेषु श्रीविलासनात् श्रीजयानन्देति नाम अजानानैर्जनैः 'श्रीविलास' इति स सान्वयमौच्यत ।

अथ तत्र रत्नरथो भूपतिरस्ति, अहं मन्ये यस्याऽङ्गसौन्दर्य-धैर्य-गाम्भीर्य-शौर्यं दृष्ट्वा इन्द्रः पठितुमद्यापि बृहस्पतिं भजते। तत्र रतिमाला गणिकाऽस्ति, या चतुःषष्ट्या विशुद्धाभिः कलाभिः कलाभृतं जित्वा कृतवहुभं तं नखदम्भाद् अंह्र्योः अपीपतत्। सा च राज्ञाऽतिरूप-कलावत्त्वात् सर्वोत्तमरतिप्रदा सतीवाऽन्तःपुरे स्थापिता। साऽपि विनयादिगुणैर्विचित्रैश्च कामोपचारैर्भृशं भूपमरञ्जयत्। भूपस्तस्यां कालात् सुलक्षणां पुत्रीमजीजनत्। पुराऽपि पुत्र्या अभावेन तल्लाभाद् राजा हृदि मुदं दधार, आदराच्च तस्या जन्मोत्सवं चकार। ततो राजा स्वजनान् भोजयित्वा सुदिने सुक्षणे तस्या रतिसुन्दरीति नाम चक्रे। सा धात्रीभिर्लाल्यमाना कल्पलतेव ववृधे। क्रमाद् वयसा स्पर्धयेव रूप-सौन्दर्य-लावण्य-दाक्षिण्य-विनयादयो गुणा ववृधिरे। ततः कलाग्रहणयोग्यं चतुरं वयः अपेदे, सा च नृपेण सर्वोत्तमकलाचार्यायाऽर्पिता। साऽपि स्वल्पैरेव दिनैः सकलाः कला अशिक्षत। रतिसुन्दरी विनयान्विता प्रज्ञाजितभारती चतुःषष्टिकलाभिज्ञा त्रिवर्गसाधकशास्त्रज्ञा विज्ञाताऽखिलविज्ञाना सम्यक्षड्दर्शनतत्त्वज्ञा प्राग्भवसंस्काराद् जैनेनाऽध्यापकेनाऽध्यापनाच्च जिनधर्मेऽधिकं सक्ता पञ्चपरमेष्ठिषु च भक्ताऽभूत्। 'ईदृग्गुण-रूपा काऽप्यन्या अभूद् भविष्यति वा न' इति ज्ञातुं मन्ये सरस्वती करे पुस्तकं धारयति। तस्या वरं द्रष्टुं भूपो दिशो दिशं दूतान् प्रैषीत्, परं ते तत्समं क्वापि न प्रापुः। अथ रतिमालाया उपरि अन्यराज्ञीनामीर्ष्यां दृष्ट्वा

नृपस्तामदूरे बाह्यावासेष्ववासयत्, रतिसुन्दरीमपि प्रागधीतकलाभ्यासस्थैर्यार्थं तन्मातुः पार्श्वे तयोर्धनं पूरयन् स्थापयामास । अथ तस्य राज्ञः सप्रत्यया कुलदेवी चन्द्रेश्वरी नाम तत्पुरोद्यानचैत्यस्था लोकैः पूज्यते । अन्यदा तस्याः प्रासादे स्वाध्याय-ध्यानलीनः कश्चिदप्रमत्तो महामुनिश्चतुर्मासीमुपोषितः । चन्द्रेश्वरी देवी तस्य महामुनेर्गुणै रज्यमाना सती स्वाध्यायार्थविभावनाद् जागरितपूर्वभवसंस्कारा प्राग्भवं सस्मार । तथाहि—

“नन्दिपुरे देवशर्मद्विजन्मनः सुरूपा पुत्री नन्दिनी नाम्नाऽभूत् । सा सुशर्मणा परिणीता । स च वर्षगते मृतः । दुःखिता नन्दिनी पित्रा प्रतिबोधिता पितुर्गृहे तस्थौ । अन्यदा तद्गृहासन्नोपाश्रये धर्मगुप्ताभिधाना गुरवः स्थिताः । तैः स वाडवः प्रबोध्य श्रावकीकृतः । तत्सुताऽपि सम्यक्त्वा-ऽणुव्रतसंयुता जाता, साध्वीभ्यश्च जैनमार्गानुष्ठानादिज्ञात्री पित्रादेशात्तपस्यति । तां षड्विधावश्यकतत्परां, देवे गुरौ च भक्ताम्, अल्पारम्भां, पठन-गुणनादितत्परां वीक्ष्य पिता तद्विघ्नाशङ्कया गृहकर्मादि निषेध्य धर्मेष्वेव न्ययोजयत् । अथ कालाद् गुर्वादिसामग्र्या अभावाद् गृहासन्नमठवासिन्या परिव्राजिकया सह प्रियालापादिभी रज्यमाना नन्दिनी गोष्ठ्यादि कुर्वती ‘हे पुत्रि! पाखण्डिपरिचयात् स्वसम्यक्त्वं मा सातिचारं कुरु’ इति पित्रा निषिध्यमानाऽपि गाढप्रीतिप्रतारिता तस्याः सङ्गतिं नाऽमुञ्चत्, यतः स्त्रीणामयमेव स्वभावः । अथ तस्याः प्रातिवेश्मिकी सावित्री ब्राह्मणी अस्ति, तत्पुत्रो यज्ञदत्तः, तस्य प्रिया अञ्जना नाम्नाऽस्ति, परं सा यज्ञदत्ताय न रोचते । अन्येद्युर्नन्दिन्याः पिता स्वर्गमगमत्, तां सदा पश्यन् यज्ञद-

त्तस्यां रक्तो जातः, परं तदप्राप्त्या विषीदन् कृशाङ्गः समभूत् । अन्यदा मात्रा पृष्टो लज्जां मुक्त्वा स्वाशयमाचख्यौ । साऽवादीत्—'मा खेदं कुरु, अहं तव मनोरथं पूरयिष्ये' । ततोऽन्यदा विश्वस्तां नन्दिनीं रहोऽवादीत्—"वत्से! त्वं धन्याऽसि यत्त्वा युवा मत्पुत्रः कामयते, अतः स्मररूपमिमं श्रित्वा स्वं यौवनं कृतार्थय । यतो रूपं लावण्यं यौवनं विभवश्च सर्वं भर्तारं विना निष्फलम् । हे मुग्धे! जरद्योग्यैस्तपोभिर्भोगार्हं वयो मुधा किं क्षिपसि? । बाल्येऽपि तव पतिर्मृतः, अतस्तव दोषो नास्ति । उक्तं च—

"पत्यौ प्रव्रजिते क्लीबे, प्रनष्टे पतिते मृते । पञ्चस्वापत्सु नारीणां, पतिरन्यो विधीयते" ॥ १ ॥

इति श्रुत्वा श्राविकोत्तमा नन्दिनी क्रुद्धा सत्युवाच—"रे मूढे! धिग् धिग्, दुःश्रवं वचः किं भाषसे? । सत्यः प्राणान्तेऽपि किं मुक्तिदं शीलं लुम्पन्ति? । लोकद्वयविरुद्धेऽर्थे पवित्रबुद्धिः को रमेत? । तदुक्तम्—

"वरं प्रविष्टं ज्वलितं हुताशनं, न चाऽपि भग्नं चिरसञ्चितं व्रतम् ।
वरं हि मृत्युः सुविशुद्धकर्मणा, न चापि शीलस्खलितस्य जीवितम्" ॥ १ ॥

कामशास्त्रोक्तानुष्ठानैर्नरको न निवार्यते, जीवानां शीलभ्रंशेनाऽवश्यं नरकपातः स्यात्" । इति प्रतिहता सावित्री मौनं कृत्वा स्वस्थानमगात् । पुनस्तयोर्द्विस्त्रिरुक्ति-प्रत्युक्तय आसन् । ततः सावित्री स्वाऽसाध्यं कार्यं मत्वा नन्दिनीं परिव्राजिकाया वशां जानाना तामुपाचरत् । साऽपि तुष्टा कार्यमप्राक्षीत् । मोहग्रहिला सावित्र्युवाच—'मातः! मत्पुत्रं नन्दिन्या भर्तारं प्रतिपादय' । तयाऽप्युक्तम्—'प्रतिपादयामि' । ततः परिव्राजिका तां विसृज्य एकां शुनीं स्ववशां कृत्वा पादपातादिचेष्टाः स्पष्टमशिक्षयत् ।

अथ नन्दिन्याः स्वसमीपे समागमावसरे तां दृक्क्षिप्तौषधां साश्रु शुनीं निजपादयोरपातयत् । तां तथा दृष्ट्वा नन्दिन्यप्राक्षीत्–'शुनी किमिति रोदिति?' । परिव्राजिका स्माह–"ममाऽस्याश्च कथां शृणु–पृथ्वीपुरनगरे दत्तविप्रस्य द्वे सुते अभूताम् । आद्याऽग्निदत्तेन ऊढा, तस्यास्त्रयः पुत्रा अभवन् । पत्यौ मृते सा परिव्राजिकाऽभवत् । अथाऽस्या लघुभगिनी अग्निशर्मणा परिणिन्ये, सा च षण्मास्या विधवाऽभूत् । अन्यदा सा रूपवती यूना हरिदत्तेन प्रार्थिताऽपि शीलव्रतखण्डनभिया तं नाऽङ्गीचकार, परं मूढा न जानाति यद् भोगान्तरायजं पापं भवति!। सा ज्यायसीं भगिनीं मां प्रार्थयति–'मां परिव्राजिकां कुरु' । मयोक्तम्–'अपुत्रा व्रतयोग्या न भवति' । एवं मया वारितापि स्वर्गार्थिनी पारिव्राज्यमाददे । पश्चात्सा कियत्कालं तपः कृत्वा मृत्वा च शुनी जज्ञे । ततो मां वीक्ष्य प्राग्भवस्मरणाद् हारितनरभवं भोगान्तरायजं कर्म शोचन्ती मम पादयोः पतिता निरन्तरं रोदिति!। ततस्त्वमपि यदि केनापि प्रार्थ्यसे तदा शास्त्रनिवारितं भोगान्तरायं मा कार्षीः" । अस्याः कपटिन्या इत्यादिकल्पितानि निशम्य सा धर्मादचालीत् । चिन्तयति च–'दुष्पालं ब्रह्मव्रतं पालयन्त्येषा शुनी जाता!, ज्ञानदृष्टं हि मिथ्या न भवति; तस्माद् मम का गतिर्भविता? । इहलोके तपो-ब्रह्मादिनिर्मितौ महाकष्टं, परभवेऽपि च चेदीदृशी गतिस्ततो भोगान् किं न भुञ्जे?' । इति चिन्तयन्ती सन्देहशल्या नन्दिनी गृहेऽगात् । परिव्राजिका तच्चित्तमिङ्गितैर्ज्ञात्वा सावित्र्यै कथयामास । अन्येद्युः सावित्री मुदा प्राग्वत्प्रोवाच । सापि त्यक्तधर्माऽभ्यधात्–'अहं वन्ध्वादिभ्यो बिभेमि' । सावित्र्यूचे–'तीर्थयात्राच्छलात् तथा यास्यावो यथा कोऽपि विरुद्धं नैव शङ्किष्यते ।

ततो देशान्तरे गत्वा यथेच्छं भोगान् भुङ्क्ष्व, परं पित्रर्पितं द्रव्यं निजहस्तगतं कुरु' । नन्दिन्या एवं प्रतिपन्ने सति सावित्री द्रव्योपार्जनच्छलात् पुत्रं देशान्तरे प्रेषयामास, तद्वधूं च पितुर्गृहे प्रैषीत् । नन्दिनीग्रहणार्थं सावित्री यावत्तिष्ठति नन्दिनी च द्रव्यग्रहणार्थं तिष्ठति तावत्तत्र सुव्रतार्या आगात् । तत्पार्श्वे शिक्षिताधीता अर्हद्धर्मानुष्ठानादिषु प्रवणा जाता नन्दिनी पूर्वप्रीत्याऽऽशु आगत्य भाग्यतोऽवन्दत, धर्मनिर्वाहं चाऽप्राक्षीत् । आर्यिकाऽपि धर्मलाभाशिषमदात् । अथ नन्दिनी वार्ताप्रसङ्गेन गूढं स्वाशयं जगौ । साध्वी कर्णौ पिधायाऽभ्यधत्—"आः! मुग्धे! श्रुताधीताऽपि अर्हदुक्तमार्गानुयायिनी चाऽपि कल्पितोक्तिभिः पाप्मभिः किं विमुह्यसि? । मूढा रक्ता द्विष्टाश्च कानि पापशास्त्राणि न चक्रुः?, एतेषां प्राग्भवज्ञानं कुतः? कपटे तु पाण्डित्यं वर्तते । यदि पुत्रैः स्वर्गो भवेत् तद् नागी शूकरी शुनी कुक्कुटी खरी अजाप्रमुखाश्च जीवाः प्राक् स्वर्गं गच्छेयुः । ततो भद्रे! सर्वज्ञोक्तं वचः श्रद्धेहि, शीले मनो दृढं विधेहि, वीतरागो हि कारणाऽभावाद् मिथ्या न भाषते । यदुक्तम्—

"रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषा—स्तस्याऽनृतकारणं किं स्यात्?" ॥ १ ॥

दौःशील्याद् नृ-नारीणाम् इहापदः, प्रेत्य च नरकभवं दुःखमिति जैनं वचः । पुनर्दुःशीला स्त्री तिर्यक्षु भारवाहनाद्युग्रदुःखभाक् खरी उष्ट्री तुरगी मृगी शूकरी अजाऽपि भवति । कथञ्चिन्नरभवेऽपि प्राप्ते वन्ध्या निन्दु[1]र्विषाङ्गना बालरण्डा कुरण्डा दुर्भगा दुर्गन्धा कुरूपा कटुवाग् योनिरोगा कुष्ठादिरोगिणी हीनाङ्गी

---

१ प्रसूतमृतबाला स्त्री निन्दुः ।

निष्कला[1] दुष्कुला अभिभवस्थानम् अल्पायुरिष्टैः स्वपुत्राद्यैर्वियोगिनी इत्यादिदीर्घदुःखानि स्त्री दौःशील्याद् अनुभवेत् । अपि च, स्त्रीजन्म निन्द्यं, तत्रापि वैधव्यम् अतिदुःखदम् । तत्रापि बाल्यम् अपुत्रत्वं निर्धनत्वं निर्धर्मता च, एवं चतसृष्वापत्सु पापकर्मणा पातितमात्मानं शीलेनोद्धर" । इत्यादि श्रुत्वा नन्दिनी नरकादत्यन्तभीता सती ततः परं शीले धर्मे च स्थिरचित्ताऽऽसीत् । ऊचे च–'हे भगवति ! उपदेशामृतदानैः कुबोधविषनाशनाद् दुर्गतेः साधु रक्षिताऽस्मि' । ततः सा साध्वीं नत्वा निजगेहं गता । अन्यदा सावित्री गमनार्थमभणत् । साऽप्यूचे–'नीचाचारं नाऽहं विधास्ये, त्वया पुनर्न वाच्या, चेदथ ब्रूषे तदा स्वबन्धुभिस्तवाऽनर्थं कारयिष्ये' । तदा सावित्री विलक्षास्या भीता स्वसुतमन्वगात् । अथ विहृतास्वपि साध्वीषु नन्दिनी धर्मतत्परा प्राग्वद् रत्नावली-मुक्तावल्यादि तपः कुरुते, परं परिव्राजिकासङ्गं तु प्रीत्या नाऽत्यजत् । साऽपि पाखण्डिनी ज्ञाततद्भावा दौःशील्यप्रेरणां नाऽकरोत् । एवं परपाखण्डसंस्तवात् सम्यक्त्वं विराध्य सहस्रवर्षं यावत्पालितश्राद्धधर्माऽपि मृत्वाऽल्पसमृद्धिकाऽहं चन्द्रेश्वरी देवी बभूव । सम्यक्त्वादिविराधनाद् वैमानिकसुखेभ्योऽहं वञ्चिता" । इति प्राग्भवं मत्वा मुनिं नत्वा तस्मै स्ववृत्तान्तमाख्याय बुद्धा सती सम्यक्त्वमग्रहीत् । चतुर्मासानन्तरं साधौ अन्यतो विहृते सति देवी सङ्घरक्षादिभिः शासनं प्रभावयति ।

अथ तां सप्रभावां जनाच्छ्रुत्वा तातचिन्तां छेत्तुम् अनुरूपं वरं लिप्सू रतिसुन्दरी अर्चति । सापि

१ निष्कला विगतार्तवा–हीनरजस्का ।

तुष्टाऽन्यदा स्वप्ने स्पष्टमवादीत्—'त्वयि भूपाग्रे नृत्यन्त्यां स्तम्भाद् द्वे पुत्रिके उत्तीर्य यं वीणावादकं वीजयिष्यत: स तव प्राग्भवस्य भर्ताऽर्धचक्रिसम इहापि भर्ता भावी'। रतिसुन्दरी प्रबुद्धा सती मुदिता प्रातरर्हन्तं देवीं च पूजयित्वा तद्दिनादारभ्य पूर्वभवभर्तारं विनाऽन्यं नेक्षते। कर्मकरादिरपि तद्गृहे प्रवेशं नैव प्राप्नोति, तत्र गतागतयोश्च नरा दासीभिरपसार्यन्ते। अथ कियत्यपि काले गते तत्र पुरे नाट्यदक्षा स्वयोग्यपरिवारयुक्ता विजयाभिधाना नटी महाराष्ट्रादागात्। सा राजवेश्मनः प्रतोल्यां चारिं नीरं चाऽमुञ्चत्। नगरे च सप्रतिज्ञामुज्जुघोष—'नाट्येन यो मां जयति तस्याऽहं दासी भवामि, मया च जितं दासीकुर्वे'। इति प्रतिज्ञां ज्ञात्वा राजा पुरे पटहेनोदघोषयत्, परं तां जिगीषुः कोऽपि नाविरभूत्। ततः स्वनगरं कलाभिः शून्यं सम्भावयन् नृपतिर्विषसाद। इति पितुर्वैलक्ष्यं ज्ञात्वा रतिसुन्दर्यागत्याऽवादीत्—'तात! अमूं लीलया जयामि'। नृपो जगौ—'नृणां दूरस्थितौ ससभ्यस्य पितुरग्रे नृत्यं कुर्याः'। इति प्रतिपद्य रतिसुन्दरी नृत्यदिनमवधार्य गृहेऽगमत्। ततो राजा नृत्यदिने विजयामाजूहवत्। रतिसुन्दर्यपि नृपाज्ञया सुखासनारूढा सारपरीवारा सनाट्योपस्करा तत्र याति। 'मम नाट्यानुरूपा वीणावादिका नास्ति' इति किञ्चिच्चिन्तातुरां, पुरोऽध्वनि प्रतीहारीभिः पुनः पुनर्दूरोत्सार्यमाणनरां तां चतुष्पथमध्ये यान्तीं दृष्ट्वा श्रीविलासः कौतुकेन 'किमेतद्?' इति कञ्चित् स्वपार्श्वस्थितं पप्रच्छ। सोऽपि रतिसुन्दर्या वृत्तान्तं तद्दिनपर्यन्तमाख्यत्। अथ स सर्वकलाविशारदो नाट्यावलोकनकौतुकी पुंसः प्रवेशाऽसम्भवाद् विजने स्त्रीरूपं कृत्वा कुतोऽपि चाऽभिमतां वीणां नीत्वा तत्पेटकेऽमिलत्, सुधीश्च रतिसुन्दर्या सह भूपसभायामागात्।

अथ नाट्यसामग्र्यां कृतायां कियत्सभ्ययुतो नृपो नाट्यादिदर्शनार्थमागतान् नरान् किञ्चिद्दूरेऽतिष्ठिपत् । ततो राजा सपरीवारो-पस्करां विजयां प्राग् नाट्यायाऽऽदिदेश। सापि यथारूपं गीत-वाद्य-लयानुगं नानाकरणादिमनोहरं नर्तितुं प्रारेभे । चित्रैकरसात्मिकां सर्वां सभां रञ्जयन्ती अनुक्रमेण वंश-भल्ला-ऽसि-क्षुरिकाग्रादिषु अनर्तीत् । ततः सा तण्डुलपुञ्जस्थसूचीपुष्पे ननर्त । प्रतिनाट्यं नृपादिभ्यो महाद्भुतं दानं लेभे । सा नृत्यन्ती भ्रू-नखा-ऽङ्गुलिभङ्गान् वितथान् व्यधात्, तद्वैतथ्यं रतिसुन्दरी सदस्यान्[1] अजिज्ञपत् । अथ भूपादेशाद् रतिसुन्दरी तांस्तान् सर्वान् नाट्यविधीन् देवानामपि मोहनान् लीलया ननर्त । तस्यां नृत्यन्त्यां स्त्रीवेषधारी कुमारो वीणामवादयत्, तद्ध्वनिश्च सकर्णानां[2] कर्णेषु अमृतमिवाऽभवत् । अत्र स कोऽपि नादोऽभवद् यः सुरैरपि दुष्प्रापः, तेन नादेन गजा-ऽश्वाद्याः पशवोऽपि स्तब्धाः, नराणां तु का वार्ता ? । तेन नादेन रतिसुन्दर्या नाट्यं तादृगद्भुतमभूद् येनैषा रम्भामपि जयेत्, किं पुनर्विजयाम् ? । अथ तदवसरे देवीप्रभावात् स्तम्भाद् मणिपुत्रिके उत्तीर्य वीणां वादयन्तीं कपटस्त्रीं चामराभ्यामवीजयताम् । तद् दृष्ट्वा सर्वे विस्मिताः । रतिसुन्दरी दध्यौ—'अहो! देवीवचनसंवादो जातः, परं स्त्री तु मम पतिः कथम् ? । किं काऽपीयं माया ?, अथवा यद्भाव्यं तत् स्वयं ज्ञास्यते, परम् इयं सुगृहीता कार्या, स्वान्तिके च मया स्थाप्या' । अथ विजया नैपुण्यात् पद्मतन्तुष्वनृत्यत्, तदा रतिसुन्दरी लूतातन्तुषु[3] नर्तित्वा तामजैषीत् । तदा जयजयारावोऽभूद्, नृपो हर्षमयस्तस्यै महाप्रसादं ददौ । अथ आनन्दैकमयी रतिमा-

१ सदोपान् । २ पण्डितानाम् । ३ लूता—ऊर्णनाभ-तन्तुवाय-मर्कटकेति पर्यायाः, भाषायां 'करोळीयो' ।

ला नृपादेशाद् विविधोत्सवान् कुर्वाणा पुत्रीं रतिसुन्दरीं स्वावासे निन्ये । रतिसुन्दर्यादिष्टाः प्रतीहार्यस्तां मायानारीं सभक्ति–बहुमानतः सहैवाऽऽजूहवन् । अथ स्त्रीरूपेण कुमारस्ताभिः समं कियद्गत्वा नागरूपेण तास्त्रासयित्वा स्वरूपः स्वधाम्न्यगात् । दासीत्वं प्रतिपन्नां दण्डधारिणीम् अग्रे चारिणी विजयां गृहं यावन्नीत्वा रतिमालाऽमुञ्चत् । अथ दास्यस्तां मायानारीं सर्वतोऽपि विलोक्य अप्राप्य च तत्स्वरूपं रतिसुन्दर्यै न्यवेदयन् । सा तु तच्छ्रुत्वा दुःखार्ता इति प्रतिज्ञां चक्रे–'अहं ताम् अदृष्ट्वा न भोक्ष्ये' । ततस्ता व्याकुला अभवन् । अथ रतिमालादिभिर्भृशं प्रार्थ्यमानापि नैव भुङ्क्ते तदा दास्यो राज्ञे न्यवेदयन् । भूपोऽपि व्याकुलस्तां पुरे सर्वतोऽपि नरैरशोधयत्, परं दिवसत्रयेणापि न प्रापत्, यतोऽसद्रूपं किमाप्यते ? । ततो निराहारां स्वस्मिन्नेकान्तरागिणीं संदिग्धजीवितां तां श्रुत्वा कुमारः कृपापरः पूर्वभवस्नेहरागाच्च तदुज्जीवनेच्छया प्राग्वद् नारीरूपं कृत्वा तद्गृहसमीपे तस्थिवान् । तदा दास्यस्तां मायानारीं वीक्ष्य द्राक् चोपलक्ष्य बहुमानादाहूय रतिसुन्दर्याः सौधमुपानयन् । काचित्तु प्रागेव गत्वा मुदा रतिसुन्दरीमवर्धापयत्, सापि परमानन्दमयीभूय तस्यै स्वामलङ्कृतिं ददौ । रतिसुन्दरी तां द्वारागतां वीक्ष्य हर्ष-स्नेहाकुला सम्मुखं गत्वा पादयोः पतित्वा उत्थाय चाऽवदत्–'हे सखि ! मम जीवितदायिनि ! अद्य भाग्यैर्जागरितं यत् त्वयाऽनुकम्पिताऽस्मि । तव स्वागतम्, एहि एहि' । ततस्तां गृहान्तर्नीत्वा मुदा पल्यङ्के आसयत्, धर्मशास्त्रकलानुगैश्च विनोदैरपिप्रिणत् । तां स्वहस्तेन स्नपयित्वा भक्ति-नैपुण्याच्च अमृतोपमानाहारान् भोजयित्वा पश्चात् सा रतिसुन्दरी स्वयं बुभुजे । ततस्तां मायानारीमभ्यर्थ्य स्वसद्मन्यरक्षत्, साऽपि प्राग्भवमोहतः

स्थिता । ततस्ते कृत्रिमा-ऽकृत्रिमस्त्रियौ धर्म-कामा-ऽर्थशास्त्रवार्ताभिः परस्परं प्रीयमाणे बहून् दिवसान् सुखमयान् व्यतीयतुः । अथ सामुद्रिकशास्त्रज्ञा रतिसुन्दरी अन्येद्युर्दध्यौ–'अहो! अस्याः सर्वेष्वङ्गेषु तानि लक्षणानि लक्ष्यन्ते यैर्लक्षणैश्चक्रितुल्यराज्यलक्ष्मीर्भवित्री, परं सा स्त्रीत्वे कथं भवेत्? । गति-चेष्टा-स्वरादयोऽपि पुरुषयोग्या विभाव्यन्ते, अतोऽत्र केनापि हेतुना कृत्रिमं स्त्रीत्वं जाने' । इति निश्चित्य सा स्नेहस्मेराननां जगौ–'स्वामिन्! देवीगिरा मया प्राग्भवीयः पतिर्ज्ञातोऽसि, यथा त्वं कला-स्नेहादि अकृत्रिमं प्रादुरकार्षीस्तथा रूपमपि स्वाभाविकं प्रकटय, दयानिधे! मामनुगृहाण' । इति प्रार्थनया प्रौढस्नेहवशाच्च श्रीविलासः स्वाभाविकं रूपं चक्रे । साऽपि स्मरातिरेकं तद्रूपं दृष्ट्वा आनन्दैकमयी रोमाञ्चिततनुर्जगौ–'अद्य मम पुण्यसुरतरुः फलितः, रचिताचश्चि देवतास्तुतुपुर्यत् तव सङ्गमो जातः' । श्रीजयोऽपि निजगाद–'सुभगाक्षि! मम मनःकलहंसः सुभगिमाऽमृतवाप्यां त्वयि व्यश्रमत्' । रतिमालापि दासीमुखाच्छ्रुत्वा तं च निरीक्ष्य, तयोर्न्युञ्छनानि कृत्वा विविधोत्सवान् विदधे । ततो दासीभिर्भूपतिर्वर्धापितः–'स्वामिन्! अद्य देव्यादिष्टस्तव पुत्र्याः पतिः प्रादुरभवत्' । भूपस्ताभ्योऽर्थितं दत्त्वा समस्तस्वरूपं च ज्ञात्वा सोत्कण्ठः सादरं तं नरैराजूहवत् । अथ राज्ञाहूतः कुमारो गत्वा यावद् निनंसति तावद् विश्वोत्तराकारं तं भूप आलिलिङ्ग । उवाच च–'अद्याऽस्माकं फलवती घटिका यद् अनुत्तररूपस्त्वं वीक्षितोऽसि । सुभग! अद्य तव प्रतिपत्तिं किं कुर्महे? । तव कुलादिकं प्रश्नं नाऽर्हति, यतो देवी विपरीतवाग् न भवेत् । परं यत्पुरं त्वं जन्मना पवित्रं कुरुषे तत् किमस्ति, विदग्ध! वद' । सोऽप्युवाच–'नृपवर! विजयपुरीयोऽहं

देशदर्शनकुतूहलकाङ्क्षी बम्भ्रमद् बहुसमृद्धिसमेतं तव पुरं प्राप्तः' । इत्याद्यभिलापसुधापानगोष्ठीं विधाय भूपस्तेन सह भोजनादि चकार । अवसरे राजा जगाद–'ममैतां कनीमुपयच्छस्व' । स आख्यत्–'अज्ञातकुलाय सुतां किं ददसे ?' । राजाह–'देव्या गीरेते तव गुणाः प्रकृतिराकृतिश्च तव कुलं जगुः, तत् प्रार्थनां भङ्क्तुं नाऽर्हसि' । इत्याकर्ण्य मौनजुषा कुमारेण भूपः सुलग्ने नानोत्सवौघैस्तनयां पर्यणीनयत् । नृपो गजा-श्वादि ददौ, परं कुमारो नाऽग्रहीत्, अत्याग्रहाच्च सर्वसाराणि अष्टौ पुराण्याददे । कुमारस्तानि पुराणि प्रियासाद् अकार्षीत्, साऽपि तेषु चिन्तिकामम्बां चक्रे । अथ नृपदत्ते सोपस्करे सौधे सर्वकामगुणोपेतः कुमारः पूर्वाभ्यासात् स्निग्धया नवोढया पत्न्या सह रेमे । कदाचिद् वापी-वनादिषु यथाकामं क्रीडन् देव इव सर्वोत्तमं विषयानुगं पञ्चधा सुखं बुभुजे । कदाचित् पत्नीं नर्तयन् स्वयं च वाद्यानि वादयन् देव-गुरून् भक्त्या गायन् मोदितप्रियो मोदते । गीत-नृत्तादौ आर्थिभ्यो दीनादिभ्यश्च ईप्सितं यथेच्छं यच्छन् असौ कुमारोऽनुत्तरां धर्म-कीर्ती लेभे । प्रत्यहं देवपूजां गुरुनमस्कारं च विना कर्हिचिद् नैव भुङ्क्ते । अथ गुप्तापवरके विधिना देवतावसरं कृत्वा रत्नानि संगोप्य तालकं च दत्त्वा कुञ्चिकां पत्न्या दत्ते, साऽपि तां स्वशरीरादौ जीवितवद् दृढं गोपायति । कुमारः प्राग्विधिना रत्नानि प्राप्नोति, यथारुचि च व्यापारयति, कर्हिचिच्च प्रियायै समर्पयति । सा हि दक्षा कुमारस्याऽनुकूला वपुर्मात्रेण भिन्ना वर्तते । अथ रतिमाला मुदा सुतास्नेहात् सदा तदावासेऽभ्येति, विनोदैश्चाऽवतिष्ठते । विश्वासिन जामातरं भक्त्या प्रीणाति, उद्गृहीतं च पुरद्रव्यं पुत्र्यै दत्ते ।

एवं कियति काले गतेऽन्यदा विस्मिता रतिमाला दध्यौ–'जामाता भूपदत्तं न गृह्णाति, न च स्वयं धनमर्जति, पुराष्टकस्य नामाऽपि नाऽऽदत्ते तदा धनमार्गणं क्व?, नित्यं च दान-भोगैर्देववद् विलसति, ततोऽनर्गलं धनं कुतोऽप्यायाति' । इत्याश्चर्येण अन्यदा सा कुमारमप्राक्षीत्–'धनागमे तव को मार्गः?' । सोऽप्यूचे–'पित्रा दत्तं स्वार्जितं च मम प्रचुरं धनमस्ति' । परं सा धूर्ताऽश्रद्दधती अन्यदा सुतामाख्यत्–'त्वं स्वपतिं पृष्ट्वा धनोपायं वद, यतो मम कौतुकमस्ति' । रतिसुन्दरी आख्यत्–'मातः! किमनेन प्रश्नेन? यत आवयोः सर्वमिष्टं तु पूर्यते' । ततः क्रुद्धा माता प्रोचे–'रे दुष्टे! कुक्षौ धृत्वा किं वर्धिताऽसि यदेतावदपि मातुः कौतुकं न पूरयसि?' । तदा सरला कृतज्ञा रतिसुन्दरी दाक्षिण्यादाह–'मातः! अभ्यासाद् यावद्वेद्मि तावद्वदामि–मत्पतिर्गुप्तवेश्मनि देवतावसरं कृत्वा, अस्माच्च बहूनि रत्नानि संगोप्याऽऽदाय निस्सरन् तालकं दत्त्वा संभाल्य च मम कुञ्चिकां गोपायितुमर्पयते, भोग्यशेषरत्नान्यपि कर्हिचिदर्पयते । कदाचिच्च तानि रत्नानि गृहीत्वा यथेच्छं दान-भोगादौ व्यापारयति । अतः परमधिकं न वेद्मि' । रतिमालाऽवक्–'एतद्देवताऽवसथं सकृद् मे दर्शय' । पुत्र्याख्यत्–'अहं जीवन्ती कथञ्चनैवं न करोमि' । मातोवाच–'वत्से! तर्हि कुञ्चिकां सकृद् मम समर्पय' । पुत्र्याह–'मयि जीवन्त्यामयं तव मनोरथो न सेधिता । अम्बा रुष्यतु वा तुष्यतु, परं प्राणान्तेऽपि पतिद्रोहं नाऽहं कुर्वे, यतो मया प्राणाः पत्ये समर्पिताः' । कपटे पटू रतिमाला एवं तन्निश्चयं ज्ञात्वा, अन्यदा ताम् ऋजुं विश्वस्तां च सुतां चन्द्रहाससुरासिक्तं भोज्यमबूभुजत् । तयाऽऽच्छादितचैतन्या रतिसुन्दरी पल्यङ्के स्वापिता । ततस्तच्छरीरशोधनात्

कुञ्चिकां लब्ध्वा, तया तालकमुद्घाट्य रतिमाला देवतास्थानमैक्षत । तत्र दिव्यामौषधीं दृष्ट्वा ता रत्नदां संभाव्य गृहीत्वा च सर्वं तद्गोपनादिकं पूर्ववच्चक्रे, मुदिता च कुञ्चिका प्राग्वत् पुत्र्याः शरीरे जुगोप । अथ रतिसुन्दरी अवसरेऽपगतनिद्रा लब्धचेतना उत्तस्थौ, कुञ्चिका-तालकाद्यं च प्रागवस्थं समीक्ष्य किञ्चिच्छङ्कां न प्राप; धूर्तैर्हि को न वञ्च्यते। द्वितीयदिने कुमारो जैनीं प्रतिमामर्चित्वा औषधीमर्चितुमपश्यत्, परं न लब्धा । ततः सशङ्कः प्रेयसीमपृच्छत् । सापि चकिता चतुरा मातृकर्म विभाव्याऽऽचख्यौ–'अत्र कस्यापि प्रवेशो नास्ति, कुञ्चिकां च क्वापि न मुञ्चे। परं गतकल्ये मातृदत्तसुरावशाद् अचेतनाऽस्थाम्, तदा च मात्रा कृतं यदि किञ्चिच्छलं भविष्यति तन्न वेद्मि, अस्या इङ्गितानि तु तादृशानि दृष्टानि' । ततो रतिसुन्दरी पूर्वं मातृप्रयुक्तं धनोपार्जनप्रश्नाद्यं समस्तं वृत्तान्तं जगौ । कुमारोऽपि तच्छ्रुत्वा तामौषधीं तन्मातृहृतां मेने। अथाऽवसरे श्वश्रूमौषधीशुद्धिमप्राक्षीत् । सा हि कर्णौ पिधायाऽऽख्यत्–'आः! शान्तं पापम् । मनोरम! तव दानेन बहुमानेन च पर्याप्तम्, अनेनाऽनीतिमार्गेण ममात्मानं मा योजय । राज्ञि सर्वेष्टकरे त्वयि च सति चौर्यं किं करोमि?, मम परिकरेऽपि कश्चित् चौर्यनामापि नो वेत्ति । अन्यः कश्चिद् देवतागारस्यासन्नेऽपि नैव एति, परं यदि शङ्कसे तदा तस्य चिन्तिकां स्वपत्नीं पृच्छ' । एवं श्रुत्वा कुमारो दध्यौ–'धिगिमां दुश्चेष्टितां यदेषा क्रुधा स्वसुताया अपि दोषमाख्याति । इयं कुबुद्धिस्तामौषधीमुपायं विना नो दास्यति, अत उपायात् तां रत्नदामौषधीं गृहीत्वाऽमूं शिक्षयामि' । इति ध्यात्वोचे–'मातः! अन्यत्रौषधीम् आलोकिष्ये' । एवमुक्त्वा मुदितां तां विसृज्य कुमारः स्वयोग्यकृत्यान्य-

करोत्। अन्यदा देवतासद्मनि द्वितीयां वाक्पटुमौषधीं रत्नानां सहस्रेण सह रहः क्षिप्त्वा, जैनीं प्रतिमां भक्त्याऽर्चित्वा तामौषधीं च पूजयित्वा कुमारोऽब्रवीत्–'हे देवि! रत्नाना पञ्चशतानि मे देहि'। साऽप्युच्चैराह–'वत्स! तत्सहस्रं किं नाऽऽदत्से?'। कुमारो 'देहि' इत्युक्त्वा तया दत्तं गृहीत्वा निर्गतः। देवतायतनं प्राग्वत् तालकादिप्रदानतो दृढं कृत्वा रत्नानि सोऽन्वहं यथोचितं व्यापारयति। अन्येद्युः कुमारः प्रियां प्रत्याह–'कुञ्चिकां तथा गोपायेर्यथाऽम्बा वेत्ति। तद्योगाद् यदि देवसद्म ईक्षते तदोपेक्ष्य स्वयमजानानेव दूरगा तिष्ठेः'। पतिव्रताऽनुगा रतिसुन्दर्यपि तच्छ्रुत्वा तथा कुरुते। अथ रतिमाला कुमारं रत्नानि गृहीत्वा नित्यं निर्गच्छन्तं दृष्ट्वा दध्युषी–'अहो! अस्य द्विगुणा रत्नाप्तिः कथम्?'। इति विस्मिता सा धूर्ताऽन्यदा देवार्चनसमये रहः स्थित्वा कुमारस्य औषध्याश्च भाषितमश्रृणोत्। ततः सा प्राग्गृहीतामौषधीं साधनां विना निष्फलां दृष्ट्वा दध्यौ–'पूर्वं देवगृहे औषध्योर्युगलमभूत्। तत्र दुर्दैवाद् मयाऽदात्र्येव औषधी आदितो दृष्टा गृहीता च, परं भयौत्सुक्याद् इयं दात्री वाचा च सत्या नेक्षिता, न च गृहीता। इयमौषधी दात्री सत्यवाक् च, ततोऽस्मै अर्चाविशेषादधुनाऽधिकं ददाति, अत एव चाऽस्य गतौषध्या गवेषणेऽपि चिन्ता नास्ति। अधुनाऽनयोः कथमपि परावर्तः कार्यः,यतश्चिन्तामणेर्लाभयोगे कर्करात् कस्तुष्यति?'। ततः साऽन्यदाऽवसरं प्राप्य, ते औषध्यौ परावर्त्य प्राग्वद् देवताऽवसथे रक्षोपायादि चकार। कुमारोऽपि तया प्राग्वद् रत्नागमाद् 'वाक्पटुं तु क्षणेन वालयिष्यामि' इति चिन्तयन् मुमुदे। गणिका तु तामौषधीमर्चित्वा धनं याचते, परम् एषा तु साधनादिविधिं विना न वक्ति न च धनं ददाति।

तथापि कुमाराग्रे रतिमालया स्वयं प्रत्युत्तरं ददाना श्रुता, अतः प्रत्ययितां तां न मुञ्चति, जानाति च—'विधिर्नाऽऽयाति' । तज्ज्ञानार्थं गणिका खेदं करोति, अभिन्नमुखरागा च जामातरं गोष्ठ्यां प्रीणयति । अन्यदा विविधे वार्ताप्रसङ्गेऽप्राक्षीत्—'विज्ञानादि कियद् वेत्सि ?' । सोऽवादीत्—'अनेका औषधीः, सकलाः कला, विचित्रान् मन्त्रान्, सम्पूर्णानि च विज्ञानान्यहं जानामि; तत्रैको मम मन्त्रोऽस्ति येन विधेः सम्यक्सम्पादने सुरूपा नित्ययौवना सुभगा च नारी भवेत्' । गणिकाह—'तर्हि मामीदृशीं कुरु, येन नृपस्य मान्या स्यां, सपत्नीनां च मानं गालयामि' । कुमारोऽवदत्—"तर्हि प्रातः शिरो भद्रयित्वा मुखं च मष्या लिप्त्वा उपोषिता सती एतं मन्त्रं जप । मन्त्रश्चाऽयम्—'रुङ् बुडुबुडु बुडुबुडु स्वाहा" । अथ सा हर्षेण तथा कृत्वा सन्ध्यायां तदन्तिकेऽगात् । सोऽपि बाह्याडम्बरं कृत्वा औषध्या तां शूकरीं व्यधात् । ततस्तां शृङ्खलया स्तम्भे बद्धा 'पापे! ममौषधी गृहीत्वा पुनः पुत्र्या दोषं दत्से!, ततश्चौर्यफलं भुङ्क्ष्व' इति क्रुधाऽऽक्रुश्य दण्डेन बह्वताडयत् । तां रुदती दीनचेष्टाभिर्भृशं कृपां जनयन्ती पत्नीगिरा जातकृपः कुमार औषधीदानं पुनश्चौर्याऽकरणं चाऽङ्गीकार्य दिवसद्वयानन्तरं स्वरूपस्थां व्यधात् । तत औषधीं दत्त्वा सुतां जामातरं च क्षमयित्वा सा ताभ्यां क्षमिताऽनुमता च तद्गृहे भोजनादि व्यधात् । अन्यदा कुमारस्तस्या आयत्यां हितमुपादिशत्—"मातः! पूज्याऽपि यन्मया विडम्बिता तत्क्षमस्व, एवं हि मया त्वत्प्रतिबोधकृते कृतम् । अदत्तग्रहणफलम् इहापि कटुकविपाकं विद्धि, परभवे च घोरं नरकं दौर्भाग्यं निःस्वतादि

च अदत्तादानफलं मत्वा को बुद्धिमांस्तदपि इच्छेत्? । ये प्राणनाशेऽपि स्तोकमपि अदत्तं नैव गृह्णन्ति तान् अत्र परत्र च लक्ष्मीपुञ्जवद् लक्ष्मीर्वृणोति । तथाहि—

"हस्तिपुरे नगरे रूपेण नाम्ना धाम्ना च पुरन्दरो नृपः, तस्य पौलोमी राज्ञ्यस्ति। तत्र दयापरः सद्गुरुसेवारतोऽर्हद्भक्तश्च यथार्थनामा सुधर्मा श्रेष्ठी, तस्य धन्या गेहिनी विचक्षणाऽस्ति । स श्रेष्ठी लाभान्तरायतः क्रमात् क्षीणधनोऽभूत्; तथाप्यर्हद्धर्मं स्निग्धबन्धुवद् न तत्याज, किन्तु अङ्गीकृतं षडावश्यक-देवार्चादि सर्वं सुकृतं तद्वेलायां करोत्येव । अथान्यदा धन्या स्वप्ने पद्महृदं ददर्श, तं स्वप्नं पत्येऽलपत् । सोऽपि विमृश्य जगौ—'अनन्यसामान्यन्पुण्याढ्योऽक्षीणलक्ष्मी-लावण्यनिधिस्ते सुता भविष्यति'। इत्याकर्ण्य सा मुदिता जज्ञे। तदनन्तरं तस्या अङ्गे गर्भप्रभावात् सौभाग्य-भाग्य-सद्बुद्ध्यादयः शुभा भावा आसन् । श्रेष्ठिगृहतो दारिद्र्यं दूरतोऽनेशत् । व्यवसायपरायणः श्रेष्ठी प्रत्यहं क्रये विक्रये च प्रतिपण्यं लाभमलभत । गर्भवृद्ध्या सह पित्रोः सीमातिगं सुखं सन्मानतादिकं चासीत् । अथ पूर्णे समये शुभदिवस-योग-तिथि-नक्षत्र-करण-लग्ने, उच्चस्थानस्थसमस्तग्रहे, प्रास्तभय-विग्रह-विड्वरे, सस्योत्पत्तिभिः प्रीतजने, सुगन्धि-शीतल-मृदुस्पर्शे समीरणे वाति सति, प्रातःकाले सा सुतं प्रासूत । पुत्रपुण्यप्रभावतस्तन्मातुः काऽपि बाधा न जाता; प्रत्युत हर्षोत्कर्ष उदितः । सूर्येण पूर्वेव, दीपेन च वेश्मगता भूमिरिव साऽधिकाधिकं दिदीपे । अथ श्रेष्ठी क्वचिद् बाह्याङ्गणगवादिके स्थाने स्थितः केनचिद् वर्धापितः, तदा सुतजन्मप्रकाशेन तुष्टः श्रेष्ठी तस्मै बहुधनं दातुकामो यावता स्वान्तिके मुहुर्मुहुः स्वार्थस्थानं पश्येत् तावता स तत्र स्वेच्छाप्रमाणं धनं न प्राप । देयार्थाऽप्राप्त्या

स मनाग् विमना न्यग्मुखश्च स्वाङ्गुलीनखैर्मुहुर्भूमिं व्यलिखत्, तदा पुत्रपुण्यप्रभावतस्तत्कालं कीटिकानगरद्वारसदृशं बिलं लेभे। पुनर्निलेखनात् क्षणादिदं पृथुद्वारं जज्ञे, तत्र श्रेष्ठी नव्यं बहुस्वर्णद्रव्यमद्राक्षीत्। ततः स्वपुत्रभाग्यं ज्ञात्वा व्यचिन्तयत्–'अयं मम पुत्रो मनुष्येषु उत्तमपुण्यानां सीमाऽऽसीत्'। ततस्तस्य लक्षाद्यप्रमितं धनं दत्त्वा विसृज्य च चारुचीवर-भूषणादिकमानाय्य यथोचितं तस्मै परेभ्यश्च ददौ। तूर्यनिर्घोष-धवलमङ्गलाद्युत्सवान् विदधे। महेभ्यानां गृहेभ्यो वर्धापनान्यायान्ति। एवं दशदिनीं पित्रा तज्जन्मोत्सवश्चक्रे। षष्ठीजागरण-चन्द्रसूर्यदर्शनादिनिखिलोत्सवान् यथाकालं पिताऽकरोत्। अन्यदा श्रेष्ठी दध्यौ–"मम पुत्रस्य जन्मदिनादारभ्य प्रत्यहं स्वेच्छया तद्बिलाद् लक्ष्मीर्गृह्यते, भुज्यते, सत्पात्रे नियुज्यते, दीनादिषु विसृज्यते, एवम् आदीयमानाऽपि महोदधेर्जलमिव न क्षीयते। अथ च पृथिव्यां स्थितस्य द्रव्यस्य स्वामी भूप एव, अत इदं पार्थिवायोक्तमेव मम सौख्यदं स्यात्, अन्यथाऽदत्तत्वाद् अत्राऽमुत्रापि दुःखदं भविष्यति"। इति सुश्रावकत्वात् श्रेष्ठी विचार्य सत्प्राभृतढौकनपूर्वकं यथास्थितं नृपं विज्ञपयामास। राजाऽपि न्यायवत्त्वेन तस्याऽदत्तपरिहारव्रतं श्रुत्वा हृष्टोऽभ्यधात्–'भाग्यैकधाम्नस्तव पुत्रस्य पुण्यतः प्रादुर्भूता प्रभूता लक्ष्मीस्तवैव'। एवं नृपप्रसादमासाद्य सोऽपि सोत्सवाडम्बरात् स्वगृहमविशत्। ततः शुभेऽह्नि स्वजनान् भोजनादिभिरुपचर्य उपवेश्य च तान् सुधर्मश्रेष्ठ्युवाच–"यत्प्रभृति एषोऽवतीर्णस्तद्दिनाद् मम गृहे लक्ष्मीपुञ्जोऽक्षीण एव स्फुरति, तदस्य धर्मसाम्राज्यभाजो मत्पुत्रस्य 'लक्ष्मीपुञ्ज' इति नामाऽस्तु"। क्रमेण कल्पवृक्षाङ्कुर इव सुन्दरतरावयवः कुमारः प्रवृद्धिं प्राप्नोति। दन्तोद्गमा-ऽङ्घ्रिन्यसना-ऽशनादौ पितृप्रयुक्तोत्सवैस्तस्य

प्रशंसनीयं प्रथमं वयोऽभात् । सवयोभिः समं क्रीडामनोहरं बाल्यं वयः कियदत्यवाहयत् । ततः पिता पठनयोग्यं ज्ञात्वा उपाध्यायसमीपे सोत्सवं मुमोच । कुमारो विनयेन उपाध्यायं तथोपाचरद् यथा स तुष्टो मुदाऽस्मै सर्वा विद्या ददौ । उपाध्यायः सर्वविद्यासु केवलं साक्षीमात्र आसीत् । जिनधर्मकलाऽपि तस्य समागता । अथ स्वैरं निरन्तरं वेश्मा-ऽट्टादिषु सुखेन क्रीडति । प्रश्न-प्रहेलिका-काव्य-तर्क-गोष्ठीपुरस्सरैर्बहुविधैर्विद्यारसैर्मित्रैः सह तत्पुरोपवनादिषु सहर्षं क्रीडन् अन्येद्युरेकत्र मुनिं दृष्ट्वा वन्दितवान् । स मुनिर्धर्माशीर्दत्त्वा गृहिधर्मस्य शिक्षां ददौ, बाल्येऽप्यसौ तामाददे । ततश्च कुमारस्य वीतरागे गुरौ च परमा भक्तिर्बभूव, पित्रोर्वचस्यास्था सम्यक्त्वे च दृढताऽऽसीत् । अथ यौवनागमे लीलाललितं सौम्यदर्शनं तं दृष्ट्वा विवाहयितुं पिता चित्ते यावदचिन्तयत् तावद् अष्टौ महेभ्या युगपत्तद्गृहे कन्यावरमिच्छव आगमन् । तथाहि–धनेश्वरः पृथ्वीधरो यशोधरः श्रीधरः श्रीपतिर्धनदो धनावहो जिनदासश्च । एते व्यवहारिणो मुदा तं श्रेष्ठिनमनमन् । जगुश्च–'त्वत्सुतस्य सुरूपाभिः स्वसुताभिः समं पाणिग्रहोत्सवं कर्तुकामाः स्मः । तथाहि–रूपश्री रूपरेखा पद्मा पद्मावती धनश्रीर्मदनश्रीर्लक्ष्मीर्लक्ष्मीवती चेति नामतः सुशीलाः सद्गुणाः सर्वकलोज्ज्वलाः सौन्दर्यशालिन्यः कन्याः सन्ति, तद् आसां स्वसुतेन सह पाणिग्रहणं कार्य'। श्रेष्ठी योग्यतां ज्ञात्वाऽनुमेने । ततोऽष्टाभिः कन्याभिः समं लक्ष्मीपुञ्जकुमारस्य तत्पित्रा करग्रहोऽकारि । श्वशुरा बहुमणि-माणिक्य-दूष्यादिकं ददिरे । कुमारो नवोढाभिस्ताभिः सह खेलति, प्राक्पुण्यानुभावात् चिन्ताविमुक्तः सन् भोगान् भुङ्क्ते, गतकालमपि न जानाति, तथापि धर्मपुष्टिं तथैव विधत्ते । यतः—

"सामग्गिअभावे वि हु, वसणे वि सुहे वि तह कुसंगे वि ।
जस्स न हायइ धम्मो, निच्छयओ जाण तं सड्ढं" ॥ १ ॥

तस्मात् कर्मकराद्या अपि धर्मकरा जज्ञिरे, यतो लोकेऽपि व्यवहार एवमेव, मुख्यानुयायिनः सर्वेऽपि भवन्ति । अस्य पूर्वपुण्यानुभावत आपदो गेहे देहेऽपि च प्रवेष्टुं न प्रभवन्ति, प्रत्युत वयो द्रुमिव नद्यश्च समुद्रमिव स्वयंवराः सम्पद आयान्ति । लक्ष्मीः सुपात्र-मित्र-दीनादिषु नित्यं दीयमानाऽपि अधिकाधिकम् ऐधत । उक्तं च—

"गृहकूपी कृपणानां, लक्ष्मीर्व्यवहारिणां नगरवापी ।
व्यापारिणां च सरसी, तरङ्गिणीव क्षितीशानाम्" ॥ १ ॥

तस्य लक्ष्म्या सज्जनाः स्वजना वणिक्पुत्रादयश्च कोटिशः सुखनिर्वाहा धर्मादितत्परा निर्मिताः । यतः—

"सा लक्ष्मीर्या धर्मकर्मोपयुक्ता, सा लक्ष्मीर्या बन्धुवर्गोपभुक्ता ।
सा लक्ष्मीर्या स्वाङ्गभोगप्रसक्ता, याऽन्या मान्या सा तु लक्ष्मीरलक्ष्मीः" ॥ १ ॥

पुत्रप्राग्भवधर्मस्य फलं दृष्ट्वा सुधर्मा श्रेष्ठी आदरात् चतुर्धा धर्मं निर्माति, व्यवसायमप्यनेकधा करोति, अन्यैश्च कारयति । एवं वह्वीः कोटिकोटीः स्वयमुपार्जयन् प्रीत्या पुत्रं गृहचिन्तायां न न्ययुङ्क्त । श्रेष्ठी

---

१ सामग्र्यभावेऽपि खलु, व्यसनेऽपि सुखेऽपि तथा कुसङ्गेऽपि । यस्य न हीयते धर्मो, निश्चयतो जानीहि त श्राद्धम् ॥१॥
२ वृक्षमिव । ३ अवर्धत ।

धर्मसाधनं कृत्वा सौधर्ममाप, माताऽपि गार्हस्थ्यमनुपाल्य अर्हद्धर्मात् स्वर्गं गता । अथाऽन्येद्यू रजन्याः पश्चिमे यामे जाग्रतो लक्ष्मीपुञ्जस्य धर्मध्यानपरस्याऽपि इति चिन्ताऽजायत—'मम जन्मदिनादारभ्य साक्षाल्लक्ष्मीरक्षया कुतो जाता?'। इति ध्यायतस्तस्य पुरः कश्चिद् दिव्यदेहभृद् ज्ञानिवत्संशयोच्छेदपटुः प्रादुरभूत्। ततो लक्ष्मीपुञ्जो व्यचिन्तयत्—'किमेष देवर्षिर्देवो वा दानवो वा योगीन्द्रो वा खेचरेश्वरो वा?, अथवा यः स कोऽप्यस्तु, परं तेजस्वी कश्चित् सद्गुणो वर्तते। स्वसद्मन्यागतः शत्रुरपि पूज्यः, किं पुनरेषः?, किम् अज्ञातगुणोऽपि मणिर्नाऽर्च्यः स्यात्?'। इति क्षणं ध्यात्वा विनयात् तं नत्वा कृताञ्जलिरुवाच—'के यूयम्? किमर्थं कुतः स्थानादागताः?'। एवं तस्य विनयाकीर्णां वाचमाकर्ण्य सोऽपि कुमारं प्रतिनम्य इदमभ्यधात्—"प्राग्जन्मस्नेहरज्जुभिर्यन्त्रितोऽहं सुरङ्गः सुरस्तव संशयं छेत्तुं मित्रताकृष्टो मुदा स्वस्थानादागतोऽस्मि, ततः सावधानेन मनसा शृणु। तथाहि—जम्बूद्वीपे दक्षिणभरतार्धे मध्यमखण्डस्य मध्ये पुरा मणिपूरं पुरमभूत्। तत्र श्रीपालाभिधो भूपालः। तत्र नाम्नाऽर्थेन च धनपतिः श्रेष्ठ्यासीत्। तस्य प्राणेभ्योऽपि प्रिया सती प्रीतिमती प्रिया बभूव। तयोः सुत्रामा सुतः, स च द्वासप्ततिकलाकुशलः क्रमाद् यौवनं प्राप्तः। ततः पित्रा महोत्सवैर्महेभ्यानां गुणोत्तराभिः कन्याभिः सह परिणायितः। ताभिः समं स्वेच्छया भोगान् भुङ्क्ते, श्रियोऽपि चाऽर्जयति। अन्यदा मित्रादिपरिच्छदः क्रीडन् उद्याने ज्ञानचतुष्टयविराजितं विमलं विमलाशयं चारणश्रमणं दृष्ट्वाऽभिगम्य च वन्दितवान्। गुरुर्धर्माशिषं दत्त्वा भद्रकं च ज्ञात्वा सविस्तरं साधुधर्मं श्राद्धधर्मं च नानोदाहरण-हेतु-फलकथनपूर्वकं कथितवान्। कुमा-

रोऽपि तदीयां सारभूतां देशनां सम्यगवधार्य हृदि न्यधात्। ततः स यथारुचि सम्यक्त्वं व्रतानि उचितांश्च अभक्ष्या-ऽनन्तकायादिनियमान् आदत्त। तेषु चाऽदत्तादानव्रतं विशिष्य निरतिचारमग्रहीत्, तत्स्वरूपं चाऽपृच्छत्। गुरवोऽप्यूचुः—'परसम्बन्धिनो मणि-तृणादिमात्रस्यापि तत्स्वामिनाऽनाज्ञातस्याऽनादानं यत् तदेवाऽदत्तादानव्रतम्। तच्च केषाञ्चित् त्रिविधेन त्रिधाऽपि स्यात्। केषाञ्चिच्च त्रिविधेन द्विधाऽपि स्यात्, अन्येऽपि देशविरतौ बहवो भेदाः सम्भवन्ति। तेषु भेदेषु येन ये यादृशाः प्रपन्ना आराद्धा विराद्धाश्च ते तथानुरूपफलप्रदा भवन्ति। तेषामाराद्ध-विराद्धानां शुभा-ऽशुभं फलं शृणु। तथाहि—पतितं विस्मृतं नष्टं हृतम् आहितं स्थितं वाऽणुतममपि बह्वपि वाऽदत्तं धनादि यो गृह्णाति स नरके पतति। स विविधैर्वध-बन्धैर्बहुधा पीड्यते, अखिला विपदस्तमनुयान्ति, लोकद्वयविनाशो भवति। अथ स्वहितं विमृश्य ये विवेकदृशः परकीयं तृणाद्यपि परिहरन्ति ते जगतोऽपि मान्या भवन्ति, क्रमेण सिद्धिमपि गच्छन्ति। येऽदत्तत्यागं प्रतिज्ञाय कुलाद्रिवद् न चलन्ति तेषामनन्तं जगद्व्यापि यशो भवति। एवं तृतीयाणुव्रतस्य पालना-ऽपालनोद्भवे शुभा-ऽशुभे फले ज्ञात्वा तच्चिरं सम्यक् पालयेः'। सोऽपि तथैव प्रतिपद्य सपरिच्छदस्तान् वन्दित्वा तद्भावभावितः स्वं वेश्माऽगमत्। अथाऽबाधया त्रीनपि धर्मादिवर्गान् साधयन् लक्ष्म्या आनन्त्येऽपि स्वं भाग्यं परीक्षितुं माता-पितॄन् स्वजनान् प्रियाश्चाऽऽपृच्छ्य क्रयाणकान्यादाय दूरदेशान्तरे पृथ्वीप्रतिष्ठितं पुरमगात्। तत्र प्राभृतैस्तद्राजानं संतोष्य भाटकगृहीतगृहे पण्यान्युत्तार्य नित्यं देवान् गुरूंश्चाऽर्चन् धर्मनिष्ठस्तिष्ठति। मधुरया वाण्या वणिक्पुत्रान् श्रियां

पात्रीकुर्वन् धर्मोपदेशेन च बहून् लोकान् पवित्रयन् व्यवहारशुद्ध्याऽनेकशो व्यवहारान् करोति, अन्यैश्च कारयति, यतो व्यवहारशुद्ध्यैव साधर्म्यस्य जीवितम्। सा खलु गृहस्थानां तृतीयव्रतातीचाराणां विवर्जनात् प्रयत्नेन साध्या। यतः—

"तेनाहड-प्पओगे, तप्पडिरूवे विरुद्धगमणे अ। कूडतुल-कूडमाणे, पडिकमे देसिअं सव्वं" ॥ १ ॥

एतान् अतीचारान् वर्जयन् पूर्णविश्वासभाजनः सुखेन श्रियमर्जित्वा विशांपतिं च वशीकृत्य तत्रापि धर्मोन्नतीर्व्यधात्। अथ स्वपित्राहूतो राज्ञाऽनुज्ञातश्च सार्थपः पूर्वं स्वं सार्थं प्रस्थाप्य ततः पश्चात् स्वयमचलत्। अथो वाजिनमारुह्य वेगेन गच्छन् क्रमेण ग्रामा-ऽऽकर-पुराद्यतिक्रामन् अन्येद्युर्दूरं गन्तुं यावद् वने प्रयाति तावत् पथि दिव्यदेव्याः कर्णच्युते इव रम्ये मणिमये कुण्डले पुरः पश्यति, अग्रे मणिमयं हारं दृष्टवान्, क्रमेण च स्वर्णसमूहैः पूर्णं कुम्भमपि अपश्यत्, परं स तु स्वव्रतं स्मृत्वा निधिं दृपत्पूर्णमिव कुण्डले हारं च रज्जुमालामिवाऽत्यजत्। अचिन्तयच्च—'किमिदं कथं चैतत्त्रयं मम पुर आगाद् इति ज्ञातुमीहे, अथवा किमेतया चिन्तया?'। अथ विस्मयविस्मेरमनाः स मार्गमतिक्रामन् सवेगमपि वाजिनम् अकस्मात् श्रान्तमद्राक्षीत्। ततोऽश्वादुत्तीर्य यावच्चिन्ताकुलः स तस्थौ तावत् तत्क्षणमेव तमश्वं गतप्राणमपश्यत्। तदा स विच्छायमुखः सखेदो हृदि चिन्तितवान्—'किमयं तुरगस्तृपाद्यार्त्त्या मृतो मूर्च्छितो वा?, अथवा केनचित्क्षुद्रदेवेनाचेतनीकृतः?'। इत्यादि क्षणं विमृश्य दैवं प्रत्यवदत्—'रे दैव! बलवत्तरं मार्ग-

१ स्तेनाऽऽहृत–प्रयोगे, तत्प्रतिरूपे विरुद्धगमने च। कूटतुल-कूटमानयोः, प्रतिक्रामामि दैवसिकं सर्वम् ॥ १ ॥ २ नृपम्।

सदायं चक्रवानमपि सानिभक्तं चित्तप्रियंकरं रङ्गद्युतिकरं लक्षणाढ्यं तेजस्विनं जातं कृशकर्णं मृदुमध्य-संस्थानं विपुलाननम् ऋद्धिदं मांसलं सर्वगुणोपेतं सुखावहं चेममश्वम् अकाले संहरंस्त्वं किमकार्षीः? । येरं मदपेक्षानिमुक्त एवमकृथास्तदा कुर्वीथाः, परं मम व्रतं मा यातु' । इति प्रोच्य अश्वं विना स्वस्य मार्गोल्लङ्घनं दुष्करं मत्वाऽचिन्तयत्–'यदि कोऽप्यन्यो वैद्य उपकृतिप्रवण एति, औषधैश्चिकित्सयति, वाजिनं च जीवयति तत्तस्मै प्रचुरं धनं ददामि' । एवमालोच्य आशावश इतस्ततो भ्राम्यन् सर्वा अप्याशा विलोकयति । तस्यैवं कुर्वतो बही वेलाऽतिक्रान्ता, तथापि तदा तत्र मार्गे कश्चिदपि पथिको नागतः । परं तस्य चिरप्रयासोत्था तृषा लग्ना, तथापि वनमभ्रमत् । ततः खिन्नः क्वचिद् निबिडच्छायस्य तरोर्मूले यावदागत्य तिष्ठति तावद् ऊर्ध्वालोकी तच्छाखावलम्बिनं गलज्जलं दृतिं पश्यति । चिन्तयति च–'कस्याऽयं केन च जलेन पूरितः?। अस्य पतिः पुनः क्व गतः?, चेद् दृश्यते तदा प्रार्थ्यते, पानीयं पीयते, तृड्दुःखं चाऽपनीयते' । इति ध्यात्वा स सत्त्वाधिको यावत्तिष्ठति तावत् तद्वृक्षशाखाग्रगः कश्चित् शुक-स्तदाशयवेदिवद् तृषापया व्यक्तमुवाच–'इङ्गिताकारैरत्यन्तं तृषितो दृश्यसे, ऊर्ध्वं दृतौ जलं दृष्ट्वा पिपासु-रपि नाऽपिबः, किन्त्वेवमेव स्थितोऽसि, तत्र कारणं वद । अन्यच्च, अहमत्र वृक्षे वसामि, अतस्त्वं ममा-ऽतिथिः । यादृशात्तादृशोऽप्यतिथिः पुण्यैरेवाप्यते, किं पुनर्भवादृशो गुणवान्? । अतो हे महानुभाग! यत्नात्तरमपि हि एतत्पानीयं सत्वरं पिब । एकाश्रयत्वसम्बन्धाद् अस्याऽनुज्ञाऽपि मे उचिता, अतो

मयि कृपां कृत्वा तृषां हृत्वा सुखी भव। तृषायां गाढायां सत्यां धर्मबुद्धिर्न भवति, ततश्च धृतिमान् भूत्वा पुनः पुण्यं समाचरेः। यतः—

"सव्वत्थ संजमं, संजमाओ अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायाओ, पुणो विसोही न याऽविरई" ॥ १ ॥

सार्थपः स्माह—"हे कीर! शृणु, त्वं धर्मतत्त्वं न जानासि। यत्त्वया मम हितं प्रोचे तत् तत्त्वविदां परमार्थतो न हितम्, यतस्त्वं दृतेस्तज्जलस्य च नाऽधिपतिः। यो यस्याऽधिपतिस्तेन दत्तं गृह्यते, तत्र च स्वामिदत्तत्वाद् अदत्तदोषो न भवति। 'अदत्तं नाऽऽददे' इति लोकद्वयाराधिनीं प्रतिज्ञां कथं लोपयामि। किञ्च—अदत्तग्राहिणां पुरुषाणां न कोऽपि गुणो, न सुखं, न यशो, न श्रीः, न धर्मः; किन्तु दुर्गतिः स्यात्। अदत्तादानदोषस्तु सकृदप्यारूढो ध्रुवम् आजन्मार्जितसत्कीर्तिं क्षणादेव लुम्पति। इदं जलं तव न, अतस्त्वद्गिराऽपि प्राणान्तेऽपि न पिबामि। जलाऽपाने तृपादयात् सकृदेव मरणं स्यात्, परं सकृदपि व्रतभङ्गे तत्कर्ताऽनन्तमरणभाग् भवति"। एवं शुकपक्षिणा साकं सार्थपतेः व्रतदृढतां कथयतः क्षणात् स शुकोऽदृश्यो जातः। तस्मिन्नेव क्षणे तस्य पुरः कुतोऽप्यचिन्तितः कश्चित् पुमान् आविरभूत्, सत्यसन्धाय च तस्मै नमस्कारं कृत्वा तमभ्यधात्—'त्वमेवैको व्रते दृढः सात्त्विकश्च'। एवं तत्कृतां श्लाघां श्रुत्वा सार्थवाह उवाच—'अन्यगुणान् दृष्ट्वा मोदसे, अतस्त्वमपि गुणवानसि। परं पृच्छामि—कस्त्वं, किमर्थं कुतश्चाऽत्रागतः?'। सोऽप्युवाच—"भो भद्रप्रकृते! शृणु। अत्रैव भरते वैताढ्यो भूधरः। तत्र दक्षिण-

१ सर्वतः संयमं, संयमाद् आत्मानमेव रक्षेत्। मुच्यतेऽतिपातात्, पुनर्विशोधिर्न चाऽविरतिः ॥ १ ॥

श्रेण्यां यथार्था विपुला पुरी । तत्र चन्द्रो नाम विद्याधरनृपः । तस्यां नगर्यां विशदाह्वो विद्याधरोऽस्ति, तस्य मणिमालेव मणिमाला प्रिया, तयोस्तनुजोऽहं सूर्याभिधानोऽस्मि । पित्रा समये कला ग्राहितः, पाठकान्ते सर्वाणि शास्त्राणि अध्यापितः, पित्रादिदत्ताश्च प्रज्ञप्तिप्रमुखाः सङ्ख्यातीता विद्याश्चित्रार्थदात्रीरसाधयम्, तद्बलाद् यथेच्छं शैल-वनादिषु स्वेच्छया विचरन् यथेच्छं विलसामि वसामि च । अन्यदा मम पिता विमलाचार्यसमीपे धर्मदेशनां श्रुत्वा गृहं त्यक्त्वा दीक्षामादत्त । स च ग्रहणा-ऽऽसेवनात्मिकां शिक्षां लात्वा गुरूनाराध, तपसा च सम्पन्नाऽनेकलब्धिगुणोदधिर्गुरुप्रसादेन प्राप्तसर्वातिशयश्रुतः परीषहाऽक्षोभ्यः क्रमेण गुरुणा दत्ताचार्यपदश्चारुचारित्रवैशद्याद् अवाप्तज्ञानचतुष्टयो भव्यप्राणिप्रबोधार्थं पृथिव्यां विहरन्नास्ते । अथाऽहं गृहवासे वसन् पितृधुरां धरन् कुतश्चित्कुसंसर्गात् चौरतां दधौ । अनेकैर्विद्याबलैर्भूचराणां भूपादीनां निरन्तरं धनमपाहरम्, चौर्यबुद्ध्या च क्रौर्यमपि मानसेऽवसत्, तत्स्नेहादिव चाऽन्येऽपि दोषास्तत्र स्थितिं व्यधुः । सन्मति-सन्तोष-क्षमा-दया-सत्य-दमादयो गुणाः सर्वेऽपि एभ्यो भीता इव दूरं गताः । अत्रावसरे मद्भाग्याकारिता इव मम जनका विशदसूरयोऽनेकैः साधुभिः सह विपुलापुर्यां समागताः । उद्यानपालादेस्तन्निशम्य सपरिच्छदैर्नृपाद्यैः सह गत्वा मया भक्त्या स्तुता वन्दिताश्च । तद्धर्मदेशनां श्रुत्वा बहवोऽपि सम्यक्त्व–देशचारित्राद्युचितं प्रपेदिरे । अथ सर्वेषु स्वस्थानं गतेषु द्वेधा पूज्यैस्तैर्न्यक्षशिक्षापुरस्सरं धर्मोपदेशमादिश्य अहं चौर्यनियमं ग्राहितः, मद्व्रतस्थै-

१ धर्मतो व्यवहारतश्च । २ विस्तृतशिक्षणपूर्वकम् ।

र्यसिद्धये चाऽदत्तपरिहारस्य पालने मह्यं तव दृष्टान्तं ते दर्शयामासुः । ततोऽहं चेतसि चिन्तयाञ्चकृवान्—'स किमाकारः ? किमाचारः ? व्रते च कीदृग्दार्ढ्यः ?, यस्याऽमी महर्षयोऽपि श्लाघां कुर्युः' । इति विचार्य वने गच्छन्तं भवन्तं पथि भ्रष्टान् मणिकुण्डल-माला-सेवधीन् अदीदृशम् । तान् दृष्ट्वाऽपि तदादाने तव मनो मनागपि नाऽक्षुभ्यत् । ततस्त्वद्दुःखाय ते जात्याश्वमपि मृतमदर्शयम्, साम्प्रतं चैतं स्वविद्यया जीवन्तं दर्शयामि, बन्धो ! तमारुह्य मुदा निजं पुरं व्रज । तथा तृषार्त्तस्य तव जलपूर्णदृतिं दर्शयित्वा शुकीभूय निमन्त्रणा कृता, तथापि परादत्ततया त्वया पयो नाऽपायि, तृषा च सोढा, अतो धन्यस्त्वं यः स्वव्रतमेवं निरवाहयत् । यथा गुरुणा प्रोक्तं तथैव दृष्टम्, इदानीं तुभ्यं मिथ्यादुष्कृतं ददे । तव दार्ढ्यं दृष्ट्वा तुष्टोऽस्मि, तत् किञ्चिद् गृहीत्वा मामनुगृहाण" । इत्युक्त्वा पठितसिद्धिदां नभोगामिविद्याम् अन्यदपि च योग्यं विद्या-मन्त्रौ-षध्याद्यनेकधा दत्त्वा, भक्त्या भूरि धनं दातुं व्यज्ञपयत् । सोऽपि तत्सर्वं लात्वाऽपृच्छत्—"कस्येदं धनं ददासि ?' । स प्राह—'पुरा तु ममाऽन्येषां च साधारणं, परं सम्प्रति तु ममैवाऽऽयत्तम्' । सार्थवाहः स्माह—"हे खेचर ! एवं विरुद्धमाचरन् वचनीयतां प्राप्नोषि । यत एकतो धर्मतत्त्वं वदसि, अन्यतो विपर्ययं ब्रूषे । चौर्यागतधनमिश्रितं तव शुद्धमपि धनमशुद्धं जज्ञे, यथा मद्यबिन्दुनाऽखिलं पयः । चेत् स्वपितुर्गुरोरन्तिके धर्मं प्रपन्नोऽसि, यदि स्वच्छात्मनस्तव तं धर्मं प्रतिष्ठां नेतुं वाञ्छाऽस्ति, चेच्चौर्यान्निवृत्तोऽसि, यदि च सद्व्रतो भवितासि तदा सर्वमिदं लाप्त्रं सत्वरं स्थाने स्थापय । यद्यदीयं धनं किञ्चिद् ज्ञायते स्मर्यते वा तत्तदीयं समस्तमभुक्तं भुक्तं वा तत्र तत्र

प्रापय । एवं च तव सर्वतः ख्यातिः प्रीतिश्च भविष्यति" । एवं सार्थवाहस्य प्रशस्यया गिरा परमप्रीतिसम्पन्नस्तथाऽकरोत्, कियद्धनं च सार्थवाहसाक्षिकं धर्मस्थाने व्ययितम् । ततस्तौ स्वस्वस्थानं गतौ । अथ सार्थवाहोऽर्हच्चैत्यानि तथाऽर्हद्बिम्बानि कारयित्वा, सप्तक्षेत्रेषु धनं व्ययित्वा, सत्पात्राणि पोषयित्वा, दीनादिदानानि दत्त्वा, सम्यग् व्रताभिग्रहं पालयित्वा, नन्दीश्वरद्वीप-मेरुपर्वत-शत्रुञ्जयो-ज्जयन्तादिसमस्ततीर्थान् शाश्वता-ऽशाश्वतान् व्यामगविद्यया नत्वा, नानाप्रकारोत्सवैः पूजाः कृत्वा, मन्त्रौषधिप्रभृति समस्तं च वित्तं कृतार्थयित्वा, स्वजीवितं सफलं विधाय स्वं चाऽऽयुः प्रपूर्य हे लक्ष्मीपुञ्ज ! त्वमिहोत्पन्नोऽसि । स च खेटो गुरूपदिष्टं विशुद्धं धर्मं विधिवद् विधाय स्वायुःक्षयेऽहं महर्द्धिः पल्यायुर्व्यन्तरसुरेन्द्रोऽभूवम् । त्वया पुरा सार्थवाहभवे सुकृतं कृतं तस्मादिह भवे जन्मदिनात्प्रभृति तव सकलार्थसम्पदभूत्, अहं च प्राग्भवधर्मस्नेहादिहागत्य तव सुखाय त्वदीये गृहेऽक्षीणलक्ष्मीं निरन्तरं पूरयामि" । इत्युक्त्वा व्यन्तरेन्द्रस्तत्सन्देहं निरस्तवान्, दिव्यनेपथ्य-हारादिदानैश्च सन्तोष्य तमापृच्छ्य सुरः स्वस्थानं गतः । लक्ष्मीपुञ्जोऽपि प्राग्भवश्रुतेर्मुदितः सन् जातिस्मृतिं लेभे । सर्वं सुरोक्तं निश्चित्याऽर्हद्धर्मेऽतिदृढोऽभवत् । निरन्तरं धर्म्याः क्रिया असृजन्, गर्हिताः क्रिया अकुर्वन्, अनर्गलं दानं ददत्, शिष्टानां सङ्गतिं सृजन्, अन्यदा गुरोर्देशनां निशम्य जातवैराग्यः संवेगजलक्षालितकश्मल इभ्यजनैः समं तस्याऽभ्यर्णे दीक्षामाददे । दीक्षां लात्वा एकादशाङ्गधरो बहुधा तपो व्यधात् । एवं शुद्धचारित्रं प्रपाल्याऽनशनादिना मृत्वा द्वादशे सुरलोके सुरोऽभूत् । तत्र द्वाविंशतिं सागरोपमान् देवसुखं भुक्त्वा देवभवं त्यक्त्वा ततो

नृभवे नृपीभूय क्षपकश्रेणीं कृत्वा केवलज्ञानमवाप्य पृथिव्यां विहृत्य भव्यान् सम्बोध्य सेत्स्यति । भो भव्या ! इति लक्ष्मीपुञ्जस्य चरित्रं निशम्य तृतीयव्रताराधनाय प्रयत्नं निर्मिमीध्वम् ”।

एवं श्रीजयानन्दकथिताद् अदत्तस्य ग्रहण-त्यागयोर्दृष्टान्तात् प्रबुद्धा सती सा रतिमाला गणिकाऽदत्तादानं प्रत्याचक्षे, अन्यमपि च श्राद्धयोग्यं धर्मं प्रपेदे । तत एषा तौ च वधूवरौ धर्मसाधर्म्यतो मिथः प्रीत्या सर्वसुखसङ्गता अवर्तन्त । अन्येद्युः कुमारः कस्यचिद्गिरेः समीपे क्वचित्पुरे चतुष्पथे आत्मानं मूर्ध्नि काष्ठभारं दधतं कुरूपं भिक्षुरूपिणमद्राक्षीत् । ततः प्रबुद्धः सन् स दध्यौ—‘अहो ! मनो-वाक्-कायाऽगोचरः स्वप्नोऽयमसम्भवी, न जाने किम्फलोऽयम् ?’ । तदैव तस्य दक्षिणनेत्रमस्फुरत् । तदा निश्चिक्ये—‘समीचीनोऽयं शुभफलप्रदश्च’ । इति विचार्य एकं प्रौढं पटं कारयित्वा तत्र नैपुण्यात् चित्रकारसमीपे यथादृष्टं पुरादिकं सर्वमलीलिखत् । वर्ण्यैः पर्वत-क्रीडासरो-वापी-चतुष्का-ऽट्ट-गृहादिभिर्लिखितैः स पटो मनोहरोऽभूत् । अथ तत्पुरोद्याने श्रीऋषभप्रभोश्चैत्यमस्ति, तद्द्वारमिलद्द्वारं सत्रागारं कुमारोऽचीकरत् । तत्पुर एकं मनोहरं वृत्तं पीठं सूत्रधारैरसूत्रयत् । अथ स्वकिङ्करान् तत्र दानशालायां नानादेशागतान् सार्वदिकान् दीनादिकानपि नित्यं भोजयितुमादिशत्, चित्रितं च तं पटं पीठेऽन्वहं विस्तारयितुं दर्शयितुं च दक्षान् सेवकानादिक्षत् । एवं सर्वं कृत्वा कुमारः सेवकानवोचत्—‘यः कोऽपि स्थिरदृष्ट्या निरीक्ष्य तत्पुराद्यभिधां ब्रूते स मम मेलनीयः, पटश्च युष्माभिर्यत्नेन पालनीयः’ । ते कुमारस्य सेवका यथादेशं सर्वं कुर्वन्तस्तिष्ठन्ति । ततश्च तत्र चैत्ये दानशालायां च गतागतं कुर्वाणा जना उल्लसच्चित्ताश्चि-

॥ ६६ ॥

त्ररूपाणि वर्णयन्ति। अन्यदा केचिद्दूरादागता धूलिधूसरवाससः पथिकास्तं दृष्ट्वाऽवोचन्—'अहो! अस्माकं निवासस्थानं पद्मपुरं केनापि विज्ञानवताऽऽलेखि'। तदा पटस्य पालकाः प्रोचुः—'यूयं कुत आगताः?'। तेऽप्याहुः—'पद्मपुरत आगताः'। ततो द्राग् नियुक्तपुरुषैरूपकुमारं निन्यिरे। कुमारः पान्थान् सन्तोष्य पप्रच्छ। तेऽपि पद्मपुरादीनां स्वरूपं जगुः—'अस्मात्पुरात् पद्मपुरं पुरं योजनानां शतेऽस्ति, तत्समीपे आलेखितानुसारी पद्मकूटगिरिर्वर्तते। तत्र पुरे पद्मरथाह्वयो राजाऽस्ति, सर्वोज्ज्वल-गुणस्यापि तस्य कर्मणो वशाद् नास्तिकधर्मित्वकलङ्कोऽस्ति'। इत्यादि श्रुत्वा कुमारो योग्यं दानं दत्त्वा तान् विससर्ज। अथाऽन्येद्युस्तस्मिन् पुरे जिगमिषुः कुमारः प्रियां प्राह—'प्रिये! अमुकं तीर्थं नमस्कृत्य यावदहमुपैमि तावद् मातुः पार्श्वे कलाभ्यासं वितन्वती तिष्ठेः, अष्टपुरोत्पन्नैश्च धनैर्दानादीनि कुर्वीथाः'। तच्छ्रुत्वा सा पतिव्रता विषण्णाऽपि आज्ञां मेने। अन्यदा कुमारो रात्रौ पल्यङ्कमारुह्य तस्मिन् पद्मकूट-गिरौ द्रुतं नभसाऽगमत्। तत्र क्वापि पल्यङ्कं संगोप्य कुत्सितं भिल्लरूपं कृत्वा मेलितकाष्ठानां भारकं मूर्ध्नि न्यस्य दुर्दशाग्रणीः प्रातः पद्मपुरस्याऽन्तः प्राविशत्, चतुष्पथे च गत्वा दारुभारकं विक्रेतुमस्थात्। अथ केचिद् राजपुरुषा आगता ददृशुः। तं च कुरूपेषु सीमानं, स्थूल-पिङ्गलकुन्तलं, कटाहकतलाऽऽ-भवदनं, पृथु-स्फुटमस्तकं, पिङ्गाक्षं, दन्तुरं, श्याम-लम्बोष्ठं, विलसदृशश्रवणं, चिप्पुटनासं, पृथु-स्थूलपद-द्वयं, धारितोष्ट्रगतिं, श्यामं, बीभत्सं, कटुदुःस्वरं, दृश्यस्थूलस्वसाजालं, कालभैरवं, समग्रकुलक्षणाङ्गं, मूर्तम् उत्थितं पापमिव, पिशाचमिव दुष्प्रेक्ष्यं, पिण्डितं दौर्भाग्यमिव, लतावेष्टितमूर्धानं, शीर्णकौपीनवाससम्,

एतादृग्रूपं दृष्ट्वा थूत्कारं कृत्वा ते जगदुः—'भोः ! त्वां भूपाल आह्वयति, तद् नृपसंसदम् एहि'। भिल्लो जगौ—'क्व नृपः, क्वाऽहं, क्व च मम भूपसभाऽऽगतिः। चेद्दारुभिरर्थस्तदा तानि गृहीत्वा मां विमुञ्चत'। ते जगुः—'भद्र ! मा भैषीः, तवैव प्रयोजनमस्ति। तद् भो ! एहि, नृपस्तव प्रसादं कर्ता'। ततः स तैः सहाऽगमत्। तैर्नरैः सद्यः सदसि नीत्वा राज्ञो दर्शितः। सोऽपि दारुभारकं भूपाग्रे प्राभृतीकृत्य तस्थौ। भूपो जगाद—'कस्त्वम् ? किंनामा ? क्व च वससि ?'। सोऽवदत्—'अहं पिठराभिधानो भिल्लो गेहाऽभावतः पञ्चकूटाद्रेर्दर्यां वसामि, तव पुरस्याऽन्तर्निरन्तरं काष्ठविक्रयाद् जीवामि'। राज्ञोचे—'भद्र ! किं ममाऽपि पुरे दुःखितोऽसि ?, स्वपुरवासिनः कस्यापि दौःस्थ्यं नाऽहं सहे'। सोऽवादीत्—'स्वर्गसन्निभे तव पुरे कर्मभिर्दुःख्यसि, यतो जलपूर्णेऽपि तटाके चातकः किं तृषार्दितो न स्यात् ?'। नृपः प्राह—'यत् किञ्चिद् रुच्यते तद् याचस्व'। स आह—'दारुविक्रयाद् उदरपूरं धनमर्जामि। भाग्याधिकमर्जितमपि धनं नृणां न हि तिष्ठति, यतश्चातकैः पीतमपि पानीयं किं गलरन्ध्रेण न निर्गच्छति ?। अतो भूप ! त्वयि तुष्टेऽपि किञ्चिद्धनादिकं न याचे, परं मम धान्यरन्धनी नास्ति, तत्तां प्रदेहि'।'ददामि' इत्युक्त्वा विजयसुन्दरीमाहूय नृप उवाच—'हे पुत्रि ! यदि तव जैनधर्मात् सुखं तदा स तव प्रचुरोऽस्ति, इमं भिल्लं वरं वृणु, सुखं भुङ्क्ष्व। यदि तव धर्मादेव सुखं ततस्तत्सुखदायिनि धर्मे स्थितेऽस्मादपि सुखं भविष्यति'। तच्छ्रुत्वाऽविषण्णा सुता प्राह—'यत् पिताऽऽदिशति तदेवाऽहं करिष्ये, अयमेव कुलस्त्रीणां धर्मः'। अथ कुरूपमपि तं दृष्ट्वा प्राग्भवस्नेहजागरात् सा तस्मिन् भृशमस्निह्यत्, सोऽपि तथैवाऽस्निह्यत्।

ततः सा सहसा गत्वा भिल्लस्याऽतिकर्कशं पाणिं पाणिना जग्राह । तदा कश्चिद् मौहूर्त्तिकः समीपगान् रहोऽवादीत्—'साम्प्रतं स मुहूर्तोऽस्ति येन न्यायविवाहतो वरश्चक्री भवेद्, वधूटी च राज्ञी भवेत् । एष तु विवाहो न न्याय्यः, ततो न जानेऽस्य फलम्' । अथ स्वपुत्रीसाहसात् प्रवर्धमानेर्ष्या-कोपो नृपतिर्भटान् प्रत्याह—'भो भटाः ! यद् वधूर्वरवेषानुसारेण वेषमर्हति, तदस्यै काञ्चिद् दरिद्रार्हां शाटिकाम् अवैधव्यज्ञानार्थं च कथीरवलये दत्त' । तेऽपि कुतश्चिन्नीचगेहतस्तत्त्रयमानिन्युः । ततः सा राजाज्ञया तां शाटिकां ते च वलये परिधाय पूर्ववेषालङ्काराडम्बरममुचत् । अथ स भिल्लो जगाद—'राजन् ! तव सुतामहं नाऽर्हामि, खरस्य गले किं कैश्चिद् मणिघण्टिका बध्यते ? । मम काणां कुब्जां श्यामां काञ्चिद्दासीमर्पय, यतः काकस्याऽर्हा प्रिया काकी शस्यते, न तु हंसिका । इयं सम्पूर्णचन्द्रमुखी कमलनयना सर्वाङ्गसुभगाकारा लावण्यरसकूपिका राजहंसगतिका प्राज्ञा पिकवन्मधुरध्वनिः चतुःषष्टिकलादक्षा धर्मज्ञा धर्मचारिणी निजरूपेण रति-प्रीति-रमा अपि जयन्ती तव तनया क ?, अहं च दुर्भगो दारुभारपरिग्रहो निर्लक्षणशिरोमणिः सर्वकुरूपेषु सीमा क ?' । अथ हाहारवतत्परे लोके खिन्ना मन्त्रिणोऽप्यवदन्—'हे राजन् ! दुर्विनीतेऽपि निजापत्येऽतिक्रुधं नार्हसि, प्रभोरपि तवैतद् लोक-धर्मविरुद्धं कुकर्म परिणामहितं न भावि' । राजा प्रोचे—'हे मन्त्रिणः ! स्वल्पोऽपि मम दोषो नास्ति, अयं भिल्लो जैनधर्मिण्याऽनया स्वयमेव वृतः । भूपानां चेयं रीतिर्यत् कन्याः स्वयंवराः स्युः, अहं तु साक्षिमात्रं भवामि' । ततो राजा भिल्लं स्माह—'भो ! मदुक्तमन्यथा नो भवेत्, ततः सर्वकलामिमां भजन् यथा-

भाग्यं सुखं भुङ्क्ष्व' । पुत्रीमपि भूपोऽभ्यधात्—'भद्रे ! पण्डितमानिनि ! इमं स्वयमेव वृतं भिल्लपतिं भजन्ती पितृवज्ञा-कुलाचार-विनयातिक्रमादिजं फलं भुङ्क्ष्व, दृष्टफलं चाऽऽर्हतं धर्मं स्वैरं कुर्याः' । सा जगौ—'तात ! अत्र कार्ये तव दोषो नास्ति, सुख-दुःखानां कर्ता कर्मभ्यः परो न हि वर्तते । तत् पितुरादेशकारिण्यहं कुलमुद्द्योतयिष्ये, यतः पितृदत्तं पतिं कुत्सितमपि सत्यो देवमिवाऽऽराधयन्ति' । अथ भूपस्तद्गिरा घृताहुत्याऽग्निरिव क्रुधाऽज्वलत् । ततो भोजनान्ते यामत्रयेण नयनघातकृद् विषमिश्रितं ताम्बूलं तस्यै अदात्, वराय च शुद्धं ताम्बूलमदात् । ततो भूपतिरकथयत्—'सवधूको निजं पदं याहि' । भिल्लोऽपि राजाज्ञां प्रतिपद्य स्वं स्थानं प्रति नृपपुत्रीयुतः प्राचलत् । सा नृपनन्दिनी छायेव तस्याऽनुगामिनी जज्ञे । अथ भूपतिरुच्चैर्जगौ—'भो भो ! योऽनयोरनुगन्ता अथवा धनादिकं किञ्चित्प्रदाता स मया चौरवद् वध्यः' । ततः क्रुद्धनृपभीत्या सचिवादिषु मौनिषु, सर्वपौरेषु च नृपाधमं रह आक्रोशत्सु सर्वतश्च विविधं दैवाद्युपालम्भान् ददत्सु सवधूको भिल्लः पुराद्बहिर्गत्वा देवकुलेऽस्थात् । तत्र सा सती निजोत्सङ्गे तस्य पादौ न्यस्य जितकमलाभ्यां निजकराभ्यां पस्पर्श, भूपतेर्भयात् सर्वे दूरस्था जनास्तथा दृष्ट्वा तस्याः सतीत्वं तुष्टुवुः, नृपाधमं च निनिन्दुः । अथ भिल्लस्तां पप्रच्छ—'भद्रे ! देवाङ्गनोपमां भवतीं सर्वनीचाय मह्यं भूपः किमदात् ?' । सा जजल्प—''स्वामिन् ! अयं महान् सम्बन्धोऽस्ति, शृणु—

''अस्मिन् पद्मपुरेऽयं पद्मरथो राजाऽस्ति, स च नय-प्रतापाद्यैर्गुणैः प्रजाः सुखाकुर्वन्नपि कुलागतं कौलधर्मं तु कथञ्चिदपि न जहाति । तस्य द्वे पत्न्यौ स्तः, एका पद्मा द्वितीया कमला । आद्या पत्युर्धर्मं करोति,

कमला तु श्राद्धकुलजातत्वात् सद्गुरोरुपदेशाच्च रह आर्हतं धर्मं करोति। पद्मायाः पद्मदत्तो विनयादिगुणोत्तरः पुत्रोऽभूत्, तनया च सुरूपा जयसुन्दरी जाता। कमलायास्तु क्रमात्सुतैव विजयसुन्दर्यभूत्। द्वे अपि धात्रीभिः पाल्यमाने पाठार्हं वयः प्रापतुः। अथ पद्मया निजात्मजा पाठार्थं मिथ्यादृश उपाध्यायस्याऽर्पिता, कमलया तु स्वसुताऽध्यापयितुं जैनकलाचार्यस्याऽर्पि। ते चाऽऽदरात् शास्त्रमध्यैपाताम्। मातुः सङ्गात् पाठकस्य चोपदेशाद् आद्या कौलधर्मरताऽभूत्, अन्या चाऽऽर्हती अभूत्। ततो यथेष्टप्रीतिदानतो द्वे अप्यम्बे उपाध्यायौ अप्रीणयताम्। अथ द्वे अप्यम्बे स्वपुत्र्यौ अलङ्कृत्य पाठपरीक्षायै वरस्य च चिन्तायै सपाठके राज्ञः समीपं प्रैपिष्टाम्। नृपोऽपि स्नेहादुत्सङ्गे निधाय पाठकौ संलाप्य पाठस्वरूपमप्राक्षीत्। ताभ्यां सर्वशास्त्रपाठे निगदिते नृपेण परीक्षायै कनीयोग्यं समस्यापदमार्पितम्। तथाहि—

"पिक्खइ सुक्खसयाइं"। इत्याकर्ण्य प्रथमा द्रुतं तां समस्यामपूरिष्ट। तथाहि—

"तुहं संकरु तुह बंभ निव, तुहं पुरिसुत्तम ताय!। तुज्झ पसाइणे सव्वपया, पिक्खइ सुक्खसयाइं" ॥ १ ॥

तच्छ्रुत्वा नृपः सर्वेऽपि च जनास्तां समस्यां तं च पाठकं तुष्टुवुः, परमन्या कन्या जहास। भूपतिस्तथा दृष्ट्वा हास्ये कारणं पप्रच्छ। साऽवक्—'तात! न किञ्चन'। अथ पित्रा निर्बन्धे कृते साऽवदत्—'तात! नीतिशास्त्राद्यभिज्ञोऽपि प्रज्ञया विजितसुरगुरुरपि त्वादृशो विदुरो मद्भगिन्या चाटुमात्रतः समस्या-

१ प्रेक्षते सौख्यशतानि। २ त्वं शङ्करस्त्वं ब्रह्मेव, त्वं पुरुषोत्तमस्तात!। तव प्रसादेन सर्वप्रजा, प्रेक्षते सौख्यशतानि ॥ १ ॥

पूरणात् चेदेवं मोद्यते ततः किमुच्यते?, तत्त्वपराङ्मुखाः सदस्याद्या अपि प्रशंसन्ति! एवमसमञ्जसं दृष्ट्वा मम हास्यमागतम्'। भूपतिरूचे—'तर्हि तत्त्वोक्त्या त्वया समस्या पूर्यताम्'। साऽपि पितुराज्ञां प्राप्य जैनाध्यापकाऽवाप्तशुद्धधर्मैकतत्त्वधीः समस्यामपूरयत्। तथाहि—

"जिंणवर जसु हीयडे वसे, जिणमुणि-जिणतत्ताइं। तं पंडियजण उभयभवि, पिक्खइ सुक्खसयाइं" ॥ १ ॥

इति श्रुत्वा तस्याः पाठकः केचन सदस्याश्च चमत्कृतिं दधतोऽपि नृपभीत्या मौनं स्थिताः। ततो भूपोऽप्राक्षीत्—'भोः सभासदः! तात्त्विकी समस्या कयाऽपूरि?'। नृपचित्तानुरोधेन ते प्रोचुः—'स्वामिन्! प्राच्ययाऽपूरि, यतस्तथैवाऽनुभवामः!'। ततो नृपो लघ्वीमवदत्—'रे रे कुत्सितभाषिणि! सभालोकविरुद्धं किं वदसि?'। साऽवदत्—'मया प्रागेवोक्तं लोकास्तत्त्वपराङ्मुखा ऐहिकार्थाय सर्वेऽपि चाटुमात्रकारिणो भवन्ति'। ततः स्वावज्ञया धर्मपक्षपातेन च क्रुद्धो नृपोऽवादीत्—'रे! त्वमेवं कस्य प्रसादेन सुखिताऽसि?'। साऽप्यवादीत्—'हे तात! अहं सर्वेऽपि च लोकाः स्वस्वकर्मानुभावेन सुख-दुःखान्यवाप्नुमः। चेत्त्वत्प्रसादात् सुखं स्यात् तत्किं केऽपि दुःखिताः स्युः?'। ततोऽधिकं क्रुद्धो नृपोऽवदत्—'यद्येवं तदा कं वरं वरिष्यसि?'। साऽब्रवीत्—'त्वद्दत्तम्'। नृपोऽवोचत्—'सुताधमे! इहाऽहं किं प्रभवामि?'। साऽवदत्—'त्वमपि कर्मवशादेव प्रदास्यसि'। क्रोधतो राजाह—'निजं स्थानं याहि, योग्यवरे प्राप्ते त्वद्वि-

१ जिनवरो यस्य हृदये वसेत्, जिनमुनिर्जिनतत्त्वानि। स पण्डितजन उभयभवे, प्रेक्षते सौख्यशतानि ॥ १ ॥

वाहार्थमाकारयामि तदाऽऽगन्तव्यम्' । सा विनीता जगौ–'त्वदादेशः प्रमाणम्' । ततः स्वपदं प्रासा । अथ भूपो भटानादिशत्–'भो भोः ! पुरादिषु भ्रान्त्वा कश्चित् सर्वापकृष्टो दुःस्थो नरः शीघ्रमानीयताम्' । ततस्ते त्वां यथाऽऽनिन्युः, यथा चाऽहं विजयसुन्दरी तुभ्यं दत्ता तथा समस्तं तव विदितमस्ति'' । इत्याकर्ण्य विस्मयादिरसाकुलो भिल्लोऽवदत्–'अहो ! सदपत्येष्वपि पितुः कथं क्रोधः ?, अथवा क्रूराणां कौलधर्मिणां किमकृत्यं स्यात् ? । विश्वपावनो विवेको जैनधर्मं विना काऽस्ति ?' । ततो भिल्लो दध्यौ–'अस्याः स्नेह-शीलयोर्दृढतां परीक्ष्य ततः प्रीतिं करिष्यामि, यत एषा हि विवेकिनां रीतिः' । अथ तादृग्विषभक्षणात् तस्या अक्ष्णोस्तदा तीव्रव्यथा प्रादुरभूत् । सा भिल्लं जगौ–'स्वामिन् ! अस्य नृपस्य तादृग्विषमस्ति यद् जग्धं सत् त्रिभिर्यामैर्नेत्रे हन्ति, स च गरो विश्वस्तवैरिणां देयः । नृपस्तं गरं ताम्बूलान्तर्मेमाऽऽदात् । स गरो भक्षणेन नृपस्य कोपचेष्टाभिस्तथा च वदनाकृतेर्मया तदैव ज्ञातः, तथापि पितुः प्रसादं मन्वानया मया भक्षितः, यतः शुभाऽशुभं कर्मैव शुभा-ऽशुभे बुद्धी दत्ते । अथ तस्य प्रभावाद् मम लोचने व्यथेते, मन्येऽहं ते यास्यतः, मम पराङ्मुखं दैवं धिक् । हा हा ! त्वत्सेवामनोरथं कथं पूरयिष्ये ?, अहं तव भारभूता जाताऽस्मि, अक्षिणी विना जीवितं किम् ?' । एवमुक्त्वा नेत्रव्यथाग्रस्ता पशूनपि रोदयन्ती सा मन्दं मन्दमरोदीत् । प्राग्भवे मन्त्रिपत्नीत्वे भिक्षागतो मुनिरवदत्–'सदोषत्वाद् अयमाहारो न शुध्यति' । तदा 'दिवालोकेऽपि न शुध्यतीति वदन्नयमन्धो भिल्लेभ्यो दीयताम्' इति यत्तयाऽऽक्रुश्यत, ततो यद्दुष्कर्माऽर्जितं तत्तया तद्भवे तपो-ऽनुतापाद्यैः क्षपितम् । किन्तु तस्य कोऽप्यणुरवशिष्टः, तद्दुष्टाद्

विपाकात् पत्युः पत्नीभावोऽपि दुःखदो भिल्लस्याऽभूत्, पितृदत्तगराच्च नेत्रव्यथाऽभूत्; यतो वाचाऽपि मुनीनामाशातना दुःखदा स्यात् । अथ तत्स्वरूपस्य ज्ञानार्थं राज्ञा रहो नराः प्रेषिताः, ते च तथा ज्ञात्वा राज्ञे व्यजिज्ञपन् । क्रोधान्धो निर्घृणो राजा तच्छ्रुत्वा मुमुदे, यतः पापानां पापनिर्मितौ हि पश्चात्तापो दुरापः स्यात् । अथ राज्ञा स्वेष्टक्रियान्तरायकरणाऽऽशङ्कया कार्यदम्भतः कन्याम्बा कमला प्राक् क्वचित् प्रैपि, सा च स्वधामागता सर्वं पुत्रीवृत्तान्तमादितो दास्याः श्रुत्वा दुःखतो मूर्च्छिताऽपतत् । ततो दासीभिर्विहितैर्योग्योपचारैरुज्जिजीव, विलप्य च दासीद्वययुता पुत्रीं द्रष्टुं रहो निशि तत्र देवकुलेऽगमत् । दूरस्थाऽपि तथाविधं तत्स्वरूपं मत्वा क्रोधान्विता राज्ञोऽन्तिके आगत्याऽवदत्—'दुर्मतिकं सर्वविरुद्धाऽकृत्यकारिणं त्वां धिक् । राजन् ! निजेऽपत्ये चण्डाला अपि ईदृग् नैव कुर्वते, मत्पुत्री किमेवं विडम्बिता ?, तथा चाऽन्धिता किम् ? । यथार्थवादिन्याऽनया को दुर्नयोऽकारि ?, अनेन सर्वनिन्द्येन कर्मणा नरके पतिष्यसि, अहं तु निजोदरे क्षुरिकां क्षिप्त्वा मरिष्यामि' । इत्युक्त्वा यावद् निजोदरे क्षुरिकां क्षिपति तावद् राजा उद्दाल्य तां जगाद—'हे सुन्दरि ! शृणु, तदा क्रोधान्धेन मया कुकर्म कृतम्, परमधुना तु पदे पदे सचिवोक्तैर्जनोक्तैश्च निन्दाक्रोशैस्तव प्रेरितैश्च विशेषेणाऽनुतप्तोऽस्मि, अतः प्रातः संशोध्य स्वां सुतां बहुमानत आनेष्ये । मम द्विधाऽप्यौषधमस्ति, तेन तन्नेत्रे सज्जयिष्यामि । तां च कस्मैचिद् नृपसूनवे वराय दास्यामि, यतः कोप-राभस्यकृतं कार्यं प्रमाणं न स्यात्' । इति राज्ञाऽऽश्वासिता राज्ञी किञ्चित्समाहिता

कथञ्चिन्निद्रया रात्रिमगमयत् । अथ सा श्यामलीभूतलोचना भूपपुत्री दुःखिता स्वोपार्जितं कर्म निन्दन्ती विललाप । तथाहि—

"विराधितः किं मयका जिनाधिपो, जितेन्द्रियो वा किमु गर्हितो गुरुः ? ।
उपाद्रवं सङ्घमवज्ञयाऽथ किं, यदित्यभूवं घनदुःखभाजनम् ॥ १ ॥
हहा पितः ! किं जनिताऽथ पालिता, त्वयाऽम्ब ! किं किञ्च मृता न शैशवे ।
यदित्यवापं सुख-धर्मवर्जिता, दशामिमां पूर्वकृतैः कुकर्मभिः ॥ २ ॥
भटा महान्तो भरतादयोऽप्यहो !, त्वयाऽभिभूत्यादिसुदुःखिताः कृताः ।
न तैर्विधे ! तृप्यसि यत् कृपोचिते, विडम्बनामित्यबलाजने न्यधाः" ॥ ३ ॥

एवं प्रियां विलपन्तीं विभाव्य कृपापरो भिल्लो गिरिमालिनीदत्तौषध्यम्बुना नयने असञ्जयत् । ततः सा संजातनिर्बाधदिव्यनेत्राऽवदत्—'हे प्रिय ! अनेन कर्मणा महाप्रभावोऽसि । ईदृशं कार्यमाराद्धैः सुरैरपि दुःसाध्यं यदियं दासी आभवं सेवासमर्था कृता' । भिल्लो बभाण—"वृद्धशबरवैद्यस्योपदेशेन सलक्षणौषधीः अहं जानामि । गिरिमूर्धसु काष्ठार्थं भ्रमता मया कुत्रचिद् लतागुल्मेषु सप्रभावेयं दृष्ट्वा चिह्नैरुपलक्षिता, ततो यथाविधि गृहीत्वा बहुकालं गोपायिता, अधुना च विश्वाढ्यगुणशालिन्यास्तव लोचनदानतः फलवत्यभूत् । परमहं दरिद्रः कुरूपः कुल-जाति-गुणवर्जितो भद्रे ! महानृपाङ्गजायास्तव भर्तृतां नाऽर्हामि । अहं भिल्लः सुरूपां त्वां कथं विटालयामि ?, तव च जन्म मुधा कृत्वा कथं पापमुपार्जामि ? । हे सुकुमाराङ्गि !

त्वं रवेः करैरपि न स्पृष्टाऽसि, ततो दुर्गाद्रिमूर्धतो दारुभारं कथमुत्तारयिष्यसि ?। तद् भद्रे ! भूपतेः पार्श्वे याहि, तस्य रोषः शान्तः सम्भवी, यतोऽपत्ये पित्रो रोषश्चिरं न तिष्ठति । तव पिता जनापवादसन्तप्तस्त्वदम्बया च प्रेरितस्त्वद्वियोगार्त्तस्तव दर्शनात् प्रमोदं गन्ता, स च त्वां सस्नेहं क्षमयित्वा कस्मैचिद् भूपपुत्राय वराय प्रथितोत्सवं दास्यति । करग्रहणमात्रेण परिणीतं मां पतिं मदाज्ञया त्यजन्त्यास्तव कश्चन दोषो नास्ति । तद् एहि, रहो नृपगृहान्तर्मुञ्चामि । विजने राजमार्गे केनाऽप्यदर्शनाद् लज्जा न । अहं च स्वस्थाने यास्यामि यथा कोऽपि न ज्ञास्यति"। इति श्रुत्वा विखिन्ना सा जागौ—"स्वामिन् ! हृदि वज्राघातसदृशं किमेवं भाषसे ?, कन्याः सकृदेव प्रदीयन्ते । यतः—

"सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति पण्डिताः । सकृत्कन्याः प्रदीयन्ते, त्रीण्येतानि सकृत् सकृत्" ॥ १ ॥

सतीभिरसतीत्वसूचकानि वचनानि श्रूयन्तेऽपि न । अपि च कुलसम्भवाः कन्याः पितृदत्तं पतिं प्राणान्तेऽपि न मुञ्चन्ति । यादृशस्तादृशोऽपि त्वमेव मम पतिः, त्वमेव मम गतिः, त्वद्वियुक्ताया मम यमः संयमो वा शरणम्"। एवं तच्छील-स्नेहयोर्दृढतां निशम्य विस्मयानन्दमेदुरो मायाभिल्लः स्मितन् जगौ—'भद्रे! यद्येवं ततस्तव मातुराशिषः कुलदेव्यश्च तुतुषुः, पुण्यानि च जजागरुः। मया कारणेन कृत्रिमं भिल्लरूपं कृतम्, अधुना तव स्वाभाविकं रूपं दर्शयामि तत्पश्य'। इत्युक्त्वा निजं स्वाभाविकं दिव्यं रूपं व्यधात्, येन देव्योऽपि मोह्यन्ते; किं पुनर्मानुषस्त्रियो भण्यन्ते ?। तद्वीक्ष्य सा हर्षेण सगद्गदमूचे—'प्रिय ! किमेतन्नाटकं यन्नानारूपैः सुपर्ववद् मां मोहयसि ?'। कुमारोऽभाषिष्ट—'अहं क्षत्रियस्य पुत्रोऽस्मि ।

कला-विज्ञान-विद्यादिपाठार्थं कौतुकाच्च विविधदेशेषु भ्राम्यन् क्वाऽपि कलासमूहम् अध्यैषि, विचित्रमहिमान्विताश्चौषधीरपि प्राप्ताः । आराद्धदेवतादत्ताऽऽकाशगामिना पल्यङ्केन गिरि-पुरादीनि पश्यन् अन्यदा रत्नपुरे प्रापं, तत्र राजपुत्रीं रतिसुन्दरीं पर्यणैषम् । भूपार्पितावासे वसन् तादृक्स्वप्नोपलम्भात् तद्विधाताय भाग्यं च परीक्षितुं तादृशं रूपं कृत्वा इहागमम्' । इत्यादिसर्ववृत्तान्तं यथातथमकथयत् । तमाकर्ण्य नवानन्दोल्लसदक्षी सा जगाद—"प्रिय ! ज्ञानवारिधेर्मुनेस्तद्वचः सत्यं जज्ञे । तथाहि—अन्येद्युर्ज्ञाननिधिं गुरुं दासीमुखात् पुरोद्याने प्राप्तं ज्ञात्वा तं नन्तुं मन्माता मया सहाऽगात् । मुनिं नत्वा देशनां च श्रुत्वा मन्माताऽपृच्छत्—'भगवन् ! केनचित्कर्मणा मम नास्तिकः पतिरभूत् । अहं मम पुत्री च जैनं धर्मं कुर्वहे । अस्यां हि पुत्र्यां तत्पितुः स्नेहोऽल्पः, अतोऽस्याः पतिः को भावी ?' । मुनिर्जगाद—'तव पुत्री धर्मशीला सुलक्षणा भरतार्धपतेर्मान्या महाराज्ञी भविष्यति' । पुनर्मम माता पप्रच्छ—'स कथं मिलिष्यति ?' । मुनिराख्यत्—'इहोद्याने श्रीऋषभप्रभोश्चैत्यमस्ति, तत्र चक्रेश्वर्याः प्रतिमाऽस्ति; त्वं तामर्चेत्, ततः सन्तुष्टया देव्या अस्या वरेण योगः करिष्यते' । एतच्छ्रुत्वा हृष्टाऽम्बा तं नत्वा गृहमागमत् । तदारभ्य वरैः पूजोपस्करैर्भक्त्या देवी अर्च्यते । तदहं मन्ये, मद्भाग्यप्रेरितया तुष्टया तयाऽयं स्वप्नोऽदायि" । एवं निशम्य कुमारोऽवक्—"जैनधर्मानुभावत आवयोः साध्वभूत्, सर्वं तथैव भविष्यति । साम्प्रतं केनाप्यनुपलक्षितौ यास्यावः, यतस्त्वत्पितृशिक्षणं विना स्वं न ज्ञापयिष्यामि । अपराधं विना च तं शिक्षयितुं नाऽर्हामि, अधुना तु स्फुटोऽपराधः कश्चिन्न लक्ष्यते । तद् अवसरे मन्तुं लब्ध्वा भृशं शिक्षयिष्यामि, अर्ह-

द्धर्मं बोधयिष्यामि, कौलतां च हरिष्ये । सज्जनानाम् उपकारात्परं परमं कृत्यं नास्ति, धर्मदानात् पुनः परमोपकारो नास्ति । ततः प्रिये ! अनया विघ्ननिवारिण्या महौषध्या रक्ष्यमाणा सर्वभयोज्झिता इह क्षणं तिष्ठेः, यावद् गोपायितं स्वस्य पल्यङ्का-ऽऽभरणादिकं त्वद्योग्याश्च वस्त्रा-ऽलङ्कृतीः पुरादानयामि" । तया 'ओम्' इत्युक्ते तां महौषधीं समर्प्य स गत्वा पल्यङ्कमादाय सालङ्कारः पुरेऽगमत् । तत्र चतुष्के कस्यापि महेभ्यस्याऽट्टाद् द्विगुणमूल्येन रत्नेन दुकूलानि गृहीतानि, स एव च महेभ्यः स्ववधूकृते कारिताः सर्वोत्तमा नव्याः सर्वाङ्गालङ्कृतीरदात्, यतो द्रव्यात् किं न हि सिध्यति ? । ततस्तत्सर्वं गृहीत्वा द्रुतं देवकुले आगत्य मुदितां पत्नीं पर्यधापयत् । पत्या सह सुखनिद्रया पल्यङ्के रात्रिं क्षपयित्वा ब्राह्मे मुहूर्ते व्योम्ना चिचलिपुस्तयोच्यत–'स्वामिन् ! अधुना क यास्यावः ?' । स जगौ–'यत्र त्वमिवाऽभीष्टा मम पत्नी रतिसुन्दर्यस्ति तत्र रत्नपुरे यास्यावः' । इयमभ्यधात्–"प्रिय ! परोपकाररतस्य तव मया किञ्चिद्विज्ञप्यमस्ति तच्छृणु । कमलपुरे कमलप्रभो नृपोऽस्ति, स च मम मातुलः । तस्य प्रथमा प्रीतिमती प्रिया, तस्याः क्रूरो दुर्भगो दुर्नयो जयसूरः सुतोऽस्ति, स च कर्मवशाद् रोगवान् अप्रियंवदश्च । तस्य राज्ञो द्वितीया प्रिया भोगवती, सा चाऽतिभक्ताऽभीष्टा मन्मातुश्च चारुभाषिणी वर्तते । तस्याः सुभगोत्तम ओजस्वी विनयी दाता विजयसूरः पुत्रोऽस्ति, स च तन्मातुरतिवल्लभो वर्तते । तस्य चैका वयो-रूप-कला-धर्मैर्मत्समा गुणैर्निःसीमाऽनुजा कमलसुन्दरी स्वसाऽस्ति । अन्यदा नृपः कञ्चिद् नैमित्तिकोत्तममप्राक्षीत्–'मम राज्यार्हं पुत्रं वद' । स गुणिनं लघुमवदत् । तन्निशम्य राजा मुदा सत्कृत्य तं विससर्ज ।

तत्तु कुतोऽपि प्रीतिमती श्रुत्वा एवमचिन्तयत्–'सर्वगुणान्विते भोगवतीपुत्रे सज्जे सति रोगिणो मम
पुत्रस्य राज्यस्याशाऽप्यसम्भवा । पुराऽप्यविनीतेऽस्मिन् पितुर्मनोऽल्पस्नेहमासीत्, नैमित्तिकवचः पुनर्व्रणे
क्षारक्षेपोपमं जातम् । अयं धर्मिष्ठो भूपोऽवसरे प्रव्रजिष्यति, अहं तु तादृक्सत्त्वाद्यभावतः प्रव्रजितुम-
समर्था । सपत्नीसुतं राज्यसमृद्धियुक्तं, स्वसुतं च दुःस्थं पश्यन्त्या मे चित्ते धृतिः कीदृशी भविता ? । तद्
एनं स्वपुत्रस्य राज्यनिघ्नकारिणं सपत्न्याः सुतं केनाप्युपायेन हन्मि, अथवा व्यङ्गयामि' । ततः काञ्चि-
च्चूर्णयोगादिवेदिनीं पापां कपालिनीं सा मोहान्धा तदिष्टदानाद्यैराराध । अन्येद्युः कपालिनी तुष्टाऽऽ-
चष्ट–'यतो मामेवं प्रीणासि तद् मत्तः किमिच्छसि ?, येन तव प्रयोजनं तद्वद, अहं ददे' । राज्ञी जगाद–
'यद्येवं मम पुत्रस्य सपत्नीपुत्रशल्यमुद्धर' । सा जगाद–'इदमल्पकम्, यज्जग्धं सत् करांह्रीणां स्तम्भं कुरुते
तच्चूर्णं गृहाण, स्वार्थसिद्धये वैरिणो भोजनान्तर्देयाः' । अथ सा राज्ञी हृष्टा प्रसादं मन्वाना तदग्रहीत्,
तया च सत्कृता कपालिन्यगात् । तद्दिनादारभ्य सपत्न्यां तत्सुते च विश्वासाय माययाऽधिकाधिकं स्नेहं
दर्शयति । अन्यदा कापि पर्वणि तया स्नेहकिरा गिरा पुत्रसंयुक्ता भोगवती स्वगृहे भोजनाय न्यमन्त्रि ।
साऽपि विश्वस्ता सरला तद्गृहं पुत्रयुक्ता प्राप्ता । प्रीतिमती भोजनार्हाणि सर्वकृत्यानि कुर्वती महागौरव-
भक्तिभ्यां तौ हैममासनमध्यासयत् । ततः सा भोगवत्या मोदिताशयान् मोदकान् पर्यवेपयत्, तत्सुतस्य
च कपालिनीदत्तचूर्णमिश्रान् पर्यवेपयत् । तान् परां च सुधास्वादां रसवतीं भुक्त्वा विविधैर्वस्त्र-भूषणाद्यैः
१२ सत्कृतौ इमौ गृहमीयतुः । ततो विजयसूरकुमारस्य तच्चूर्णप्रभावतः शनैः शनैः पाणि-पादस्य स्तम्भोऽभूत् ।

पाणिभ्यां न किञ्चित्कर्तुं पादाभ्यां च मनागपि न चलितुं शक्नोति, अहो ! कर्मणां गतिर्विचित्रा । ततः कुमारस्तन्माता नरपतिश्च व्याकुलतां भेजुः, वैद्यादिभिश्च विविधान् प्रतीकारानचीकरन् । एकां प्रीतिमतीं विना सर्वाः प्रजाश्चिखेदिरे, स्वस्वविज्ञोदितोपचाराय च उपाक्रमन्त । एवं मान्त्रिक-वैद्याद्यैरनेकधा उपचारैः कृतैरपि तस्य कोऽपि गुणो न जज्ञे, यतो गुणस्तु कर्मवशो भवति । अथ कुमारस्तत्पितरौ च तद्भोजनादनु जातत्वात् तादृशैश्च चेष्टितैः प्रीतिमत्यां शङ्किताः । तद्विपये नृपः कश्चिन्नैमित्तिकमप्राक्षीत् । स व्याहार्षीत्—'अयं दोषो दुष्टचूर्णजो नार्या कृतोऽस्ति । दिव्यौपध्यनुभावेन निरामयता भाविनी, इतरैस्तु औपधादिभिः प्रायोऽसाध्यताऽस्ति' । ततस्तं सत्कृत्य विसृज्य च, नृपो दासीनिवेदितं प्रीतिमत्याः कपालिन्या सह सङ्गमवधार्य, स्वपुरुपैस्तां कपालिनीमाहाय्य बाढमताडयत् । तदा तया राज्ञै चूर्णार्पणादि सम्यग् निवेदितम् । ततो नृपः क्रोधात् प्रीतिमतीं धिक्कृत्य निरवासयत् । एपाऽपि दुःखिता पितुर्गृहमगात् । तत्राऽपीयं विविधान् लोकधिक्कारान् सहते, घोरं हि पापमत्र परत्र च भृशं कटुफलं जायते । दुर्बुद्धिर्धन-भोगादि स्पृहयन् यद् अघानि सृजेत् तद्धन-भोगादि अश्नुते वा न, परमिहाऽमुत्र च ध्रुवा वेदना भुङ्क्ते । भूपादयः पौराश्च मिथो निजगदुः—'अहो ! स्त्रीणां हृदो दौष्ट्यम्, अहो ! महत्साहसिक्यम् । ऐहिकसुखलवगृध्नवः पापजन्तवस्तत्कर्म कुर्वते येन नरकव्यथा लभन्ते, अतो धिग् धिक्' । ततो नृपः स्वां प्रतिज्ञां पटहेनेति उदघोपयत्, पक्षे पक्षे च त्र्यहं त्र्यहं वादयति—'यः पुरुपोत्तमो वैदेशिकः स्वदेशस्थो वा कश्चिद् मम पुत्रं सज्जयति तस्य देशेन सह कमलसुन्दरीं ददामि' । अन्यदा प्रेम्णा मातुलेनाऽऽहू-

॥ ७३ ॥

तया मया मातृकुलावासे स्थितया समस्तोऽप्ययं वृत्तान्तो बुबुधे। कमलसुन्दरी मया सह ऐकपत्यं वाञ्छति, परं भ्रातृदुःखाद् न किञ्चनाऽवदत्। ततः स्वामिन्! तत्र पुरे गत्वा मम भ्रातृ रोगनिष्काशनात् पौरलोकयुतं मातृपक्ष सुखाकुरु। प्रिय! मल्लोचनदानशक्त्या तव सामर्थ्यं निश्चिनोमि, यतो विश्वे तत् किञ्चिद्वस्तु न विद्यते यत् कल्पवृक्षो ददितुमसमर्थः स्यात्। एकं तु तव परोपकारतत्परस्योपकारो भविष्यति, अन्यच्च नय-धर्मशीलः कुमारः सुखी सन् प्रजाः सुखं प्रापयिता"। इति पत्न्या गदितं श्रुत्वा कुमारस्तस्मिन् पुरे गमनं प्रपेदे।

इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजय-गणिनोद्धृते गद्यबन्धे श्रीजयानन्दकुमारस्य देशान्तरचर्यायां गङ्गदत्तपरिव्राजकोपकार-मलयमालक्षेत्रपालजय-तदर्पित-महौषधीपञ्चकप्राप्ति-तत्पूर्वमन्त्रिभवपतीद्वयजीवरतिसुन्दरीविजयसुन्दरीमहाऽवदातसोत्सवपाणिग्रहण-लक्ष्मीपुञ्जदृष्टान्तवृतीयव्रतपालनफलदर्शन-कमलसुन्दरीकरग्रहणप्रस्तावनादिवर्णनो नाम अष्टमः सर्गः ॥

## अथ नवमः सर्गः ॥

श्रीपार्श्वं तीर्थनाथं प्रशमरसमयं केवलानन्दयुक्तं,
वामेयं पार्श्वयक्षैः सुरवरसहितैः सेवितं भूरिभक्त्या।

यस्य स्नात्राभिषेकपृथुतरकमलैर्निर्जरा यादवाः स्युः,
ख्यातं शङ्खेश्वरं तं त्रिभुवनविहितख्यातकीर्तिं नमामि ॥ १ ॥

अथ श्रीजयानन्दकुमारः प्रियया सह पल्यङ्कमारुह्य व्योम्ना कमलपुरेऽगात् । तत्रोद्याने काऽपि पल्यङ्कं संगोप्य प्रज्ञावान् मनाग् दर्शनीयं शावरं रूपं चक्रे, प्रियां च शबरीरूपां दर्शनीयां चकार । ततः कुतश्चिद् मेलितानेकौषधीग्रन्थिं दधद् दुकूला-ऽऽभरणेद्धया प्रियया सार्द्धं तत्पुरर्द्ध्या सविस्मयोऽस्मिन् पुरे प्राविक्षत् । तत्र कस्यापि महेभ्यस्य विशालं मन्दिरं वीक्ष्य वासार्थं भाटकेन चित्रशालिकां ययाचे । महेभ्यः स्माह–'भोः ! त्वं कः ?, कुत आगाः ?, क्व च वससि ?' । सोऽवादीत्–'अहं सर्वौषधादिवित् शबरो वैद्योऽस्मि, नानादेशान्तरेषु सप्रियः कौतुकी भ्राम्यन् सश्रीकेऽस्मिन् पुरे वस्तुं जातरुचिः स्थानं याचे' । अथ क्रुद्धो गृहेशोऽवादीत्–'रे ! भिल्लपाटकं याहि, भिल्लो ह्यशुचिरज्ञातो मद्गृहे कथं प्राविशः ?' । अथ 'स्वल्पानेव दिवसान् अत्राऽहं स्थास्यामि' इति ब्रुवन् भिल्लस्तस्मै लक्षार्धमूल्यं रत्नं लीलया भाटकेऽदात् । तदा सविस्मयो गृहेशो व्यचिन्तयत्–'किमयं साक्षाद् धनदः ? किमीश्वरो विद्याधरो वा ?, ईदृशी दानलीला हि काऽप्यन्यत्र न दृश्यते' । ततो वणिग्वरो भिल्लराजं सगौरवमवादीत्–'मद्गृहे मनोहरां चित्रशालां स्वैरं गृहाण, यतो गुणा एव शुचयः, जातौ तु शुच्यशुची न' । ततः स सप्रियश्चित्रशालायां यथासुखमस्थाद्, असौ च वणिग्वरः सर्वं गृहोपस्करं रत्नैर्ददौ । स तत्र नव्यया मनोऽनुकूलया स्नेहसारया

रूपातिरम्भया पत्न्या साकं रत्नैः पूर्यमाणमनोरथो वसन् भोगान् भुङ्क्ते, दिव्यौषध्यादिभिश्च लोके विविधरोगान् हरन्नास्ते । स्वस्मिन् शवरवैद्यत्वं ख्यापयन्, प्रौढोपकारेषु कृतेष्वपि किमप्यगृह्णन्, स्वयं पत्न्या च वीणादि वादयन् गाययंश्च, गायनेभ्यः श्रुतिसुधामिव गीतानि शृण्वन्, नटीवृन्दं नर्तयन्, अनर्गलं दानानि ददद्, मुदितैर्जनैः 'शवरवैश्रवण' इति कृताभिधानः, पौराणामितरेषां च निजैश्चरित्रैश्चित्रकृत् सर्वत्र स्वैरं विलसति । अन्यदा तत्पुरोद्याने भरतेश्वरनिर्मितान् आर्यवेदान् बहून् छात्रान् पाठयन्तं कञ्चिद् द्विजोत्तमं दृष्ट्वा तानध्येतुं स इयेष, परं 'विप्ररूपं विना वेदाध्ययनं न कारापयेत्' इति चिन्तयित्वा स किञ्चिद् मिषं कृत्वा गृहाधिपमापृच्छ्य तस्मै चोपस्करं दत्त्वा सप्रियो निशि निर्ययौ । तां रात्रिमुद्याने स्थित्वा प्रातः स्वं विप्ररूपिणं प्रियां च हेतुमुक्त्वा ब्राह्मणीरूपां चकार । ततस्तौ सालङ्कारौ सयौवनौ तत्पुरस्यान्तः प्रविश्य, कस्यापि वणिजो गृहे पूर्ववद् रत्नदानेन प्रीतेन तेन भाटकेनाऽर्पिते सोपस्करमतिष्ठताम् । कुमारो भुजिष्यादीन् सुपरीक्ष्य निजपरिच्छदे कृत्वा, दयितां वृद्धविज्ञस्त्रीरक्षितां गृहे स्थापयन्, विनयी रत्नदानेनोपाध्यायं संपूज्य तस्माद् विधिना नीति-धर्मप्रकाशकान् वेदानधीते । पदानुसारिण्या प्रज्ञया भाग्याद् अल्पैरपि दिवसैः सर्वान् वेदानध्यैष्ट । ततो महादानैर्गुरुमर्चित्वा छात्रांश्च प्रमोद्य गृहे प्राप्तः पूर्ववद् महाभोगान् यथारुचि भुङ्क्ते । स्वस्मिन् ब्रह्मवैद्यत्वं स्थापयन् लोकसमूहमुपकुर्वन् पूर्ववद् गीत-नाट्याद्यैः श्रीपथादिषु रमते, ततोऽस्मिन् पुरे स 'ब्रह्मवैश्रवण' इति ख्यातिं भेजे । पटहं

---

१ सद । २ शवरेषु वैश्रवण इव—कुबेर इव । ३ दासादीन् । ४ राजमार्गादिषु । ५ ब्रह्मसु—ब्राह्मणेषु वैश्रवण इव ।

वाद्यमानं शृण्वानोऽपि स्वस्मिन् राजकनीलोभाशङ्कोत्पत्तिभिया भूपतिसमीपे नैति । सर्वतः सर्वनागरैरयमेवं विकल्प्यते–"अयं किं सुरः ? किमाश्विनेयः ? किं कुबेरः ?, अद्भुतभागधेयः कोऽयम् ? । भैषज्यं दानलीला सर्वे च कलागुणा अस्मिन् सन्ति येऽन्यत्र क्वाऽपि नैव दृष्टा न च श्रुताः । पूर्वमीदृग्गुणः शबरो दृष्टः, सोऽधुना नेक्ष्यते, तत् किं रूपान्तरेण स एवाऽयमन्यो वा ?" । सोऽन्यदा श्रीपथे कश्चित् क्रीडापदं पीठमध्यास्त । तत्र यावत् स कौतुकी वीणां वादयन् मित्रैश्च समं मुदा गायन् पौरश्रुतिसुधावर्षं कुर्वाणस्तिष्ठति तावद् दासीवृन्दगता एका कुब्जा दासी नीरार्थं गच्छन्ती गीतरसाकृष्टा तत्राऽऽगता तस्थौ । विप्रस्तां दृष्ट्वाऽप्राक्षीत्–'त्वं काऽसि ?' । साऽप्याह–'भोगवत्या महाराज्ञ्या दास्यस्मि' । स जगौ–'रे ! किं कुब्जाऽसि ?' । साऽभाणीत्–'वातदोषेण' । विप्र आह–'अत्र पुरे केनापि न चिकित्सिता ?' । कुब्जाऽभाणीत्–'बहुभिर्वैद्यैर्बहुधा चिकित्सिताऽस्मि, परं मन्दभाग्यतो भवादृशः कोऽपि नाऽमिलत्' । ततस्तां स्वसमीपमाकार्य स्नसाजालमर्मसु नैपुण्याद् मुष्टिभिराहत्याऽऽहत्याऽसज्जयत् । तदा सा सरलीभूता मुदिता उवाच–'कोऽप्यलक्ष्यस्वरूपः पौरभाग्यादिहागतोऽसि । तन्नृपतेर्गेहमेहि, तत्सुतं द्रुतं पटय । पौरैस्तु पुराऽप्यर्च्योऽसि, अधुना तु नृपकुलाऽभ्यर्च्यो भव' । सोऽवदत्–'हञ्जे ! त्वं याहि, राजकुलेन मम प्रयोजनं नास्ति' । ततः सा विस्मृतोदका तूर्णं राज्ञीसमीपमगात् । तां वीक्ष्य राज्ञ्युवाच–'त्वं काऽसि ?' । साऽऽह–'स्वामिनि ! किं न जानासि ?, तव कुब्जिका दास्यस्मि' । राज्ञी विस्मिताऽवदत्–'किमरे ! तव ऋजिमा ?' । साऽप्यभाणीत्–'ब्रह्मवैश्रवणभिषजाऽहम् ऋजुः कृता' । राज्ञ्योक्तम्–'स

कुत्राऽस्ति ?'। दास्यवदत्–'श्रीपथेऽस्ति'। राज्युवाच–'पुत्रं पटयितुं शक्नोति न वा ?'। दास्यवादीत्–'विश्वेऽपि तन्नास्ति यस्मिन्नस्य सामर्थ्यं न स्यात्'। ततो राज्ञी द्रुतं गत्वा राज्ञे न्यवेदयत्। राजापि मुदितो धीसखान् प्रेष्य द्राक् तमाजूहवत्। तैर्गत्वा वहुमानेनाऽऽकारित औपधिग्रन्थियुग् यज्ञोपवीतादिद्विजाङ्कभृद् नृपसंसदि समागत्य भैपज्यतत्त्वसूचितामाशिषं नरनाथाय ददौ। आशिषाऽपि तं भिषजां वरं मत्वा नृपो वहुमानेन कनकासनमध्यासयत्। अप्राक्षीच–'हे भद्र ! कोऽसि त्वं ?, धियां निधे ! कुत आगाः?, जनानां भाग्यैश्च किं पुरं सुखाकुरुषे ?'। सोऽवोचत्–'अहं गिरिपल्ल्यां वसामि, तातवैद्योपदेशेन विविधौपधीर्जानामि, तत्कृते नानागिरि-वनादिषु भ्रान्त्वा ताश्च सम्यगुपलक्ष्य मयाऽनेकाः संगृहीताः, परोपकृतिकौतुक्यहं पुर-ग्रामादिषु भ्राम्यन् ताभिश्चौपधीभिरनेकान् रोगिणो लोकानुल्लाघयन् अत्र पुरे आगाम्'। अथ तं नृप ऊचे–"साधो ! 'परोपकृतिकौतुकी' इति यत्त्वयेदानीमुक्तं तद् द्रुतं सत्यापय। मम पुत्रस्य गात्रसङ्कोचात्मा महारोगोऽस्ति, साधो ! तं रोगं निजौपधादिसामर्थ्याद् द्रुतमपनय। हे महाशय! आकृत्या प्रकृत्या गिरा च त्वां विश्वोपकारैकनिष्ठनिःशेषशक्तिकं मन्ये"। अथ द्विजो व्याजहार–'नृप ! स्वाङ्गजं दर्शय, चेत् साध्यमामयं जाने तदा तं प्रतिकरोमि'। तदा तेन सहाऽमात्यादिसंयुतो राजा तत्र गत्वा स्वं पुत्रमदीदृशत्। मायाविप्रोऽवदत्–'राजन् ! विषमो ह्ययं रोगः केवलैरौपधैरसाध्यः, ततो मन्त्रैरौपधैश्च प्रयततो व्यपनेष्ये। तद् मन्त्र-पूजाद्युपस्करं विचित्रमानायय'। राज्ञाऽपि तस्मिन् आनायिते आडम्बरार्थं जवन्यन्तरितो भूत्वा, जनान् दूरे कृत्वा, विपुलं मण्डलं विधाय, चन्दनैर्दीपिताग्नौ,

'ॐ नमोऽर्हते, ॐ ह्रीँ सिद्धेभ्यश्च नमो वषट्' इत्यादिमन्त्रानुच्चारयन् ध्यान-मुद्रा-ऽऽसनादियुक् कर्पूराऽगुरु-पुष्पाद्यैर्होमं कुर्वन्, बलिं क्षिपन्, मण्डलासक्तौ सोपष्टम्भं नृपाङ्गजं संस्थाप्य महौषध्यम्बुधाराभिः सेकं सेकमसज्जयत् । ततो नेपथ्येऽपनीते यावत्पार्थिव आयाति तावत्कुमार उत्थाय पितुः पादौ नमश्चक्रे । सस्नेहं सुतं तं च भिषग्वरं गाढमालिङ्ग्य ताभ्यां सह महीपतिः कनकासनमध्यास्त । सचिवादिपरिवारोऽपि हर्षाकुल आगतः, विचित्राणि वादित्राणि नादिताम्बरं निनेदुः, गायनाः प्रोच्चैरगायन्, मङ्गलपाठका मङ्गलानि पेठुः, स्त्रियः सर्वतः सानन्दा मङ्गलगीतानि जगुः, माता हर्षोत्कर्षात् सुतस्य न्युञ्छनानि व्यधात्, अन्या अपि राज्यो वर्धापनमहोत्सवं व्यधुः । अथ हर्षाद्वयमयो भूपो मायाविप्रमवदत्—'अहो ! अस्माकं भाग्यभरो येनाऽधुना मिलितोऽसि । अहो ! तव मन्त्रवादित्वम् !, अहो समहिमौषधी !, अहो तव परोपकारित्वम् ! अहो त्वद्गिरां सुभगता ! । सर्वराज्यप्रदानेऽपि तवाऽनृणा न भवामः, तथापि वयं प्रीताः शक्त्यर्हं दद्मः, नरोत्तम ! तदेकं देशं यथारुचि गृहाण' । इत्युक्त्वा भूपतिः परे च सचिवाद्यास्तस्मै रत्ना-ऽलङ्कार-वस्त्रादि दातुं ढुढौकिरे, तथापि स मायाविप्रः किमप्यगृह्णन् प्रोचे—'राजेन्द्र ! पुण्यार्थवृत्तयः सन्त उपकारे कृते एकं पुण्यं विहाय किं किञ्चित् क्वापि गृह्णन्ति ? । मम चिकित्साद्यर्जितं निर्वाहकृद् धनं प्रागप्यस्ति, अतोऽनेनाऽधिकेन मे कोऽर्थः ?, यतस्तद्धि धनं लोभादिवृद्धिकृत् । भूयसाऽपि हि लाभेन लोभो नैव निरस्यते, तत् सन्तोषेणैव आत्मानं सुखयामि, सन्तोषोद्भवसुखेन सुरेन्द्रोऽपि जीयते । वैप्रधर्मक्रियाविघ्नकृता देशेन मे किम् ?, तथापि

राजन्! तद्विधावपि समये ज्ञास्ये'। इत्यादितद्गिरा तादृग्दानाऽलङ्करणादिभिस्तम् अनीहं भृशाढ्यं च निबुध्य नृपो व्याहरत्–'देशादेरूरीकारः पश्चादप्यस्तु, सम्प्रति क्व स्थितोऽसीति ब्रूहि'। ततो विप्रोऽवदत्–'भाटकात्ते वणिग्गेहे प्रियया सह तिष्ठामि'। नृपोऽभाणीत्–'तद् ममैव गेहे नित्यं तिष्ठ'। तेन तथाऽङ्गीकृते भूपः सुखासनं दासीवृन्दं तथा वीणां तद्गिरा च तत्प्रियाद्यपि प्रेष्य, तत्स्थानात् सर्वं बहुमानादानाय्य स्वाऽऽवासे चित्रशालादौ तमस्थापयत्। ततः स्वभृत्यैस्तं स्नानं भोजनादि चाऽचीकरत्, तत्र सगौरवं यथासुखमस्थात्। अन्यदा भोगवत्या विज्ञैश्च मन्त्रिभिः समं भूपो व्यचारयत्–'अस्मै विप्राय महानपि देशो दास्यते, परं गुणिनेऽपि विप्राय कन्या कथं देया?, भिक्षाचरकुलोद्भूतः किं राजकन्यामर्हति?'। मन्त्रिणोऽवदन्–'स्वामिन्! लक्षणैर्नृपोचितैश्च शौर्य–वृत्त्यादिगुणैरेष विप्रमात्रं न सम्भवी, तदस्मै कमलसुन्दरी कन्या दीयते। अमोघगिरो हि नृपाः प्रतिज्ञां हातुं नाऽर्हन्ति, ततः परं कन्याया भाग्यं प्रमाणम्'। भूपती राज्ञी च तत् सन्नयानुगं वाक्यं प्रपेदाते।

अथ पद्मपुरे पद्मरथो राजा रभसेन तथा रुपा सुतां तादृशभिल्लाय ददौ। राज्ञी-मन्त्र्यादिवाग्भिर्जातानुशयो नृपः प्रातःकाले भिल्लाद्यास्पदेषु तौ नरैरशोधयत्, परं तौ न प्राप्तौ। ततो नानापुर-ग्रामादिषु सर्वतस्तयोः शोधनाय नृपो नरान् प्रैषीत्, परं दूरेऽपि चिरादपि ते क्वाऽपि न लेभिरे। ततो राजा पुत्रीस्नेहाच्चिरं दुःखभाक् शुशोच, कालक्रमेण शोकोज्झितोऽप्यभूत्। अथ स राजा पुरन्दरपुराधिपतेर्नरसिंहस्य

१ ऊरीकारः स्वीकारः। २ अनिष्फलवाच.। ३ त्यक्तुम्। ४ जातपश्चात्तापः। ५ पुत्रीं भिल्लं च।

पुत्राय सेवार्थमागताय नरकुञ्जराभिधानाय अनुरक्तां स्वां ज्यायसीं पुत्रीं जयसुन्दरीं ददौ, सानन्दश्च तद्विवाहमहोत्सवं व्यधात् । ततो राज्ञा सत्कृतो नरकुञ्जरः सजायः स्वपुरेऽगमत्, तया च नवोढया सह महाभोगान् भुङ्क्ते । अथ सा कमला राज्ञी पुत्री-जामात्रोः शुद्धनवासितश्चिरं रोदं रोदं स्थिता, नृपेऽतिक्रुद्धापि स्वपुत्रीमेलनाऽऽशया कियतो घस्रान् अजीगमत्। यदा च जयसुन्दर्या गीत-नाट्य-वाद्यादिबन्धुरः पाणिग्रहणमहोत्सवो बहुधा प्रारेभे तदा सा तं महोत्सवं वीक्षमाणा सपत्न्याश्च मुदं प्रेक्ष्य, निजां पुत्रीं तस्याश्च तादृशीं विडम्बनां स्मृत्वा, भृशं पुनर्नवीभूतक्रोधे-र्ष्या-शोकदुःखतस्तत्र स्थातुमशक्ता द्रुतं स्वं परिच्छदं गृहीत्वा राजानं चाऽनुज्ञाप्य पितुर्गृहं शीघ्रवाहनैश्चलिता; यतः स्त्रीणां सङ्कटे पितुर्गृहमेव शरणम् । स्वभ्रातुः पुरे उद्याने गत्वा तस्मै दास्या स्वागमनमज्ञापयत् । भूपोऽपि तामागतां ज्ञात्वा सान्तःपुर-परिच्छदः संमुखमागत्य हर्षाकुलः प्रणनाम। तत आशिषं दत्त्वा सा भ्रातुः कण्ठे लग्ना रुरोद । नृपस्तामाश्वास्य रुदितं च निवार्य आसने उपविश्य भगिनीं चाऽऽसने निवेश्य तत्स्वरूपमजानानो विपरीतदर्शनात् सम्भ्रान्तोऽपृच्छत्–'किमकस्माद् अनाहूताऽप्यागता ?, किं च रोदिषि ?' । साऽपि पुत्र्या आमूलतो वृत्तान्तमवदत्। तमाकर्ण्य उदस्राक्षः स कौलधर्माणं स्वसुः पतिं चाटूक्तिकांश्च मन्त्र्यादीन् निनिन्द । अथ स धैर्यमवलम्ब्य स्नेहतः स्वसारमवदत्–'भगिनि ! मा विषीद, अत्र कर्मैवाऽपराध्यति । तथाप्यवसरं प्राप्याऽयं शिक्षयिष्यते यो हि दर्पाद् मम शुद्धभागिनेय्यामेवमपराध्यति स्म । जामिजां सर्वतः शोधयिष्यामि, आनाययिष्यामि, ब्रह्मवैश्रवणेन च तां प्रगुणीकारयिष्यामि' । 'कोऽसौ ?' इति तया

प्रोक्ते नृपः सूनुप्रगुणीकारे विस्मया-ऽऽनन्ददायिनं तद्वृत्तान्तमवदत् । सा भ्रातृजस्य प्रागुण्यं श्रुत्वा सविस्मया स्नेहादानन्दं प्राप, पुत्रीदुःखं च व्यस्मरत् । ततो भोगवत्याद्या राज्यस्तां सगौरवं प्रणेमुः, साऽपि आलिङ्गना-ऽऽशीर्भिस्ताः प्रेम्णाऽपिप्रिणत् । अथ भूपः सपरिच्छदां सुखासनारूढां स्वसारं सगौरव-महोत्सवमावासेऽनैपीत् । ततः प्रणम्रं भ्रातृजं विजयसूरं मस्तके आघ्राय सस्नेहं नानाशीर्भिरमूमुदत्, मणि-मुक्तादिभिश्चाऽस्य वर्धापनादि चक्रे, न्युञ्छनानि च कुर्वाणा कुल-भाग्यादि तुष्टुवे । सा परोपकाराद्यैर्गुणैर्मुहुर्मुहुः स्तुवती ब्रह्मवैश्रवणस्यापि वर्धापनादि चक्रे । कमला सर्वान् पितृकुलानुगान् स्वजनान् आलापाद्यैर्यथार्हं संप्रीण्य भ्रातृगृहे सुखं तस्थौ । अथेयं ब्रह्मवैश्रवणस्य प्रियां विप्रीरूपां दर्शं दर्शं स्फुरत्स्नेहात् स्वपार्श्वे बहु अतिष्ठिपत् । सा स्वाम्बामुपलक्ष्य प्रेमवार्ताभिः प्रीणाति, परं कमला तु रूपान्तरस्थितां पुत्रीं नोपलक्षयति । अथ सूनोः स्वरूपं प्रोक्तपूर्विणं नैमित्तिकं राजा स्वसुः पुत्र्याः शुद्धिमप्राक्षीत् । स निमित्तवशादाख्यत्–'सा सधवा महार्द्धिभृत् सुखितात्मा कियता कालेन अत्रैव मिलिष्यति, अधिकं न जानामि' । भूपस्तं सत्कृत्य विसृज्य च तदुक्तं भगिन्यै आचख्यौ, तदा साऽप्यमोदत । अथ भूपो निजनरान् सर्वासु दिक्षु प्रेष्य नानादेश-पुर-ग्राम-सरः-शैल-वनादिषु सर्वगांश्च दूतान् प्रेष्य भूभुजामवरोधेष्वपि सर्वप्रयतेन स्वां जामेयीमशोधयत्, परं क्वचिदपि अस्याः शुद्धिमपि न लेभे, यतश्छद्मस्थः समीपस्थमपि न पश्यति । ब्रह्मवैश्रवणोऽपि 'कौलशिक्षां विना नाऽऽविर्भविष्यामि' इति प्रतिज्ञया तच्छोधनं न न्यषेधयत् ।

अथाऽन्येद्युः कश्चिद् वैदेशिको नटो भृशं कलामदं बिभ्रत् स्वयोग्यसर्वपरिच्छदस्तत्राययौ । स च 'यो विज्ञो मां नाट्यकलया जयति तस्याऽहं दासो भवामि' इति प्रतिज्ञां ख्यापयन् दर्पाद् भूपावासद्वारे नीरंचारी मुमोच । नृपोऽवादीत्—'सकृद् नृत्यं कुरु येन तव कला ज्ञायते' । ततः स सूच्य-सि-कुन्ताग्रादिषु विज्ञानलीलया नृत्यन् विविधैः करणैः सर्वां सभामरञ्जयत्, वीरचरित्राणामनेकधाऽभिनयं कुर्वन् नवरसान् पुष्णन् सदस्यांस्तन्मयान् चक्रे । नृपाद्याः प्रीणिता विस्मिता नाट्यान्ते महादानं ददुः, सर्वे च विस्मितास्तत्कलां भृशं प्रशशंसुः । ब्रह्मवैश्रवणस्तु यथास्थानं भ्रूभङ्गादिवैतथ्यं दर्शयन् मुखमोटनकं चक्रे । अथ नरनाथः स्वनटादीन् विलोकयन् जगाद—'मम पुरे स कोऽप्यस्ति य एनं नृत्येन जयति ?' । तस्य राज्ञो नाट्यवेदिनो विचित्रा नटाद्याः सन्ति, परमेनं जेतुमशक्तास्ते सर्वेऽप्यधोमुखास्तस्थुः । अथ ब्रह्मवैश्रवणोऽवक्—'राजन् ! अस्मिन्नटे का कला ?, यदि परिच्छदं दत्से तदेनं लीलया जयामि' । नृपतिर्व्याहरत्—'नटादीनां पेटकेभ्यः स्वैरं पुरुष-स्त्रियो गृहाण, मदाज्ञया च शिक्षयेः' । कुमारोऽवदत् 'तर्हि सप्तमेऽहनि तादृशाख्यं करिष्ये यतोऽस्य मदः सद्यो व्यपयास्यति' । इति तत्प्रतिज्ञां श्रुत्वा नटोऽपि 'सप्तमेऽह्नि समागमिष्यामि' इति प्रतिज्ञाय राज्ञा विसृष्टः सन्नगमत् । सद्यः कविः कुमारोऽपि नटादीनां पेटकेभ्यः कतिचिद् यूनो युवतीश्च परीक्षया गृहीत्वा स्वीयचरित्रस्यैव वाचकं नाटकमध्याप्य तत्कलां च शिक्षयित्वा, सामग्रीं मेलयित्वा नृपस्य च ज्ञापयित्वा सप्तमे दिवसे सर्वोत्तमं नाट्यं कर्तुमुपतस्थे । विपुले रङ्गमण्डपे

१ नीरं चारिं च । २ भ्रूभङ्गादेः सदोपत्वम् ।

राजवर्यान् महेभ्यादीन् पौरान् तं च नटमाकारयन्नृप आसनमध्यास्त, तथा सच्छिद्रजवन्यन्तश्छिद्रैर्नाट्यावलोकिनीः स्वसृ-पत्नी-कनीमुख्या ललना अतिष्ठिपत्। इति कौतुकाकुलचेतसि सभायां पूर्णायां कुमारोऽपूर्वरङ्गादिपूर्वकं नाट्यं कर्तुमारेभे। स्वपत्नीं विजयसुन्दरीं नटीस्थानस्थितां विधाय विविधानि च पात्राणि विचित्रासु भूमिकासु यथाविधि प्रयुञ्जानः स मायाबद्धमृदङ्ग-वंश-वीणादिचित्रातोद्यनिनादभृद् मधुरध्वनिगन्धर्वगीताऽऽरावमनोहरं विचित्रकरणाऽऽकीर्णं सम्यक्काललयाऽनुगं नाट्यं कुर्वन् स्ववृत्तं प्रारब्धवान्। तथाहि–'विजयपुरे जय-विजयौ भूपौ। प्रथमस्य सिंहसारस्तनयोऽभूत्, द्वितीयस्य गुणी श्रीजयानन्दो जज्ञे'। ततो निशि गिरौ केवलिधर्मप्रतिपत्तिः, देशान्तरे गमनं, विशालपुरे विद्याध्ययनं, नृपकन्याया उद्वाहः, पल्यां गिरिमालिनीप्रबोधः, कनकपुरे द्यूतं, नृपकन्यापरिणयनं, रेल्लणीदेवीबोधः, शूकरयुद्धं, तापसप्रतिबोधः, तत्सुताकरग्रहणं, युधि मलयमालविजयो, महौषधीदानं, रत्नपुरगमनं, रतिसुन्दर्या नाट्यं, तस्याः करग्रहो, भिल्लरूपकरणादि च स यथास्थितम् अभिनयविधिना समस्तमदीदृशत्। ततः पद्मपुरे भिल्लरूपेण नृपकन्यां परिणिन्ये। यथा सा देवकुलेऽन्धिता, यथा च औषध्या तां पुनर्नवलोचनां चक्रे तथैव सर्वमभिनयं यथास्थमदीदृशत्। परं जवनीच्छिद्रैस्तन्नाट्यं पश्यन्त्या निजप्रियामातुर्भ्रान्तिहेतवेऽयं पद्मपुराद्यभिधानपरावर्तं चक्रे। तथाहि–'भोगपुरे भोगदत्तो नास्तिकनृपोऽस्ति, तस्य सुजया-विजयोद्भवे सुदामा-सुभगाकन्ये स्तः। आद्या नरेन्द्रायाऽदायि, द्वितीया च नृपेण क्रुधा भिल्लाय दत्ता'। एवमाद्यानां परावर्ते कृतेऽपि यथार्थाऽभिनये सति उपभिल्लं विजयसुन्दरी सुतां सम्यग् वीक्ष्य भृशमुज्ञा-

गारस्नेहा कमला जवन्याः सत्वरं निर्गत्य 'अहो सुते ! भाग्याद् दृष्टाऽसि' इत्यादिवादिनी तस्याः कण्ठे विलग्य दुःखतो यावद् उच्चै रोदिति तावद् मायावटुरौषध्या प्रियां ब्राह्मणीं चक्रे। कमलां च जगाद—'मातः ! किं भ्रान्ताऽसि ?, एषा सुभगाभूमिका मम प्रिया युक्ता, न तु तव तनया। नाट्ये कृतं रूपं किञ्चन न हि सम्यग् भवति'। ततः सा खेद-व्रीडा-ऽद्भुतरसाकुला तां मुमोच, दध्यौ च—'रूपान्तरस्थितैषा किं मम पुत्री स्यात् ?, यतो दर्शनादप्यस्यां हि मम स्नेह उल्लसति; किं वाऽस्य द्विजस्य प्रिया ?, अग्रतो वा समस्तं ज्ञास्यते'। इति ध्यात्वा तथैवैषा पुनर्नाट्यं व्यलोकत। सोऽपि वटुस्ततो देवकुले सुभगासज्जनावधि साभिनयं नाट्यं चक्रे, ततो विरराम। ततः स सदस्यानां विशेषाश्चर्यहेतवे भिल्लाग्रन्यस्तसूच्यग्रपुष्पोपरि ननर्त। मायावटुर्नाट्ये यदा यं रसं पुपोष तदा लोकास्तन्मयतां भेजुः। तन्नाट्ये दक्षैरपि सूक्ष्ममपि भ्रूभङ्गादि वितथं क्वापि नाऽलक्षि, यस्मात्तत्कला हि निष्कलङ्का बभूव। तस्मिन् वटौ किञ्चिद् अगृह्णति सति विस्मिता नृप-मन्त्र्यादयो नटादीनां पेटकेभ्यो महादानानि ददुः, सर्वे च सभ्यास्तस्य कलावतः पुरः सर्वानपि कलावतः पयोनिधेरग्रे कूपानिव मेनिरे। ततस्तस्य वटोर्नाट्यकलया चमत्कृतः प्राज्ञटः स्वं जितं मत्वा पादयोः पतितोऽवदत्—'ब्रह्मन् ! तवाऽहं सपरिच्छदो दासोऽस्मि, भानोर्मे हिमवद्भानुभिः कलाऽगलत्'। बटुर्जगाद—'नट ! ब्रह्मणो मम किङ्करैः कोऽर्थः ?। किन्तु विश्वेऽधिकाधिककला न भवन्ति ?, अतो मदो न कार्यः, स्थानं याहि'। ततः क्ष्माभृता विसृष्टो नटो हृष्टः सन् स्वस्थानमगात्। अथ पर्षदं विसृज्य कमलासहितो राजा तमप्राक्षीत्—'ब्रह्मन् ! अयं नृपाङ्गजः को यस्य त्वमभिनयं व्यधाः?,

स च भिल्लो देवकुलात् प्रातः सप्रियः क्वाऽगात् ?'। बटुः प्राह—"अहं सप्रियः कौतुकाद् विचित्रनाट्यानि कुर्वन्नन्यदा भोगपुरे प्राप्तः। तत्र स्थानाऽभावाद् रात्रौ देवकुले वसन् तस्मिन् मिथो बाढं विलक्षणौ दम्पती वीक्ष्य साश्चर्यो भिल्लमप्राक्षम्—'कुरूपस्याऽपि तव ईदृग्देवाङ्गनारूपा प्रिया कथम् ?'। तदा स स्वं चरित्रं यावत्तत्रागमाऽवधि अवक्, तच्च तस्य चित्रकृच्चरित्रं मयाऽवधारितम्। ततोऽहं स च सप्रियौ सुखनिद्रया सुप्तौ, स तु प्रातः सप्रियः क्व गतस्तन्न जाने। अहं श्रान्ततया सुप्तः सन् तस्मिन् गते जागरितः, प्रातः सप्रियश्चलितो भ्राम्यन् क्रमादिहागतः। यावद् वेद्मि तावदुक्तम्, अग्रतस्तु स एव जानाति"। इति श्रुत्वा राजा कमला च सविस्मयौ दध्यतुः—'अहो! अस्य रूपानुसारि दान-लीला-धनादिकं नास्ति। तत् किमयं विप्ररूपेण स एव भिल्लरूपो दृश्यते ?, किं वा कोऽपि सम्यग् द्विजः ?, अस्य चेष्टितं हि गहनमस्ति। तथा विप्रीरूपा सैवेयं किं विजयसुन्दरी स्याद् अन्या वा काऽपि ?, कलावतां हि चरित्रं को वेत्ति ?। एतौ तु यौ वा तौ वा भवताम्, परम् इदं पुनर्ज्ञायते यत् केनापि सत्कला-भाग्यनिधिना नृपपुत्रेणाऽन्यरूपेण ध्रुवं विजयसुन्दरी परिणीता, सुखिता दिव्यनेत्रा चाऽस्ति। अस्मिन् बटौ अत्र तस्थुषि अग्रतोऽपि ज्ञास्यते, ततः कन्यादानेन स्थाप्यः, प्रतिज्ञाऽप्येवं कृते पूर्यते'। इत्यालोच्य राजा बटुं स्माह—'ब्रह्मन्! तव कला काऽप्यपूर्वा या पृथिव्यां क्वचिन्न दृष्टा न च श्रुता। त्वयैकयाऽपि नाट्यकलया अद्यास्माकं राज्यं सर्वराज्येषु विज्ञानिसम्पदा समुन्नतिमारोपि। द्वासप्तत्या कलाभिर्जगदुद्द्योतयतस्तव समः षोडशैव कला दधच्चन्द्रः किं स्यात् ?। ततो मित्र! त्वया मदन्तिकेऽत्रैव स्थातव्यं, यतः सर्वेष्टदर्शनेभ्योऽपि

तव दर्शनमतिशायि वर्तते'। तस्मिन् 'ओम्' इत्यङ्गीकृते प्रहर्षुला नृपादयस्तत्कलास्तवैर्मुखराः स्वं स्वं गृहं ययुः। ततः प्रभृति कमला वर्धमानेन प्रेम्णा तां वटुप्रियां पुत्रीमिव स्वसमीपमस्थापयत्। सा च तया सह प्रीत्यालापादिभिस्तथाऽतुष्यद् यथा राज्यलाभादिभिरपि न। अथ कनी कमलसुन्दरी तन्नाट्यरञ्जिता तमेव वटुं पतित्वेन वाञ्छन्ती अन्यदा धात्रीमूचे—'मातः! नृपोऽद्यापि मामसौ द्विजाय किमिति नो दत्ते, सन्तः प्रतिज्ञातनिर्वाहे न हि चिरयन्ति'। सा तच्छ्रुत्वा नृपायाऽऽख्यत्। सोऽपि स्वाशयसदृशं तनयाया आशयं विज्ञाय हृष्टः। अन्यदा मन्त्रि-सामन्त-श्रेष्ठि-सेनेश्वरादिभिर्भूषितायां सदसि नृपः स्वर्णसिंहासनमध्यास्त, सर्वसभासदां मान्यो ब्रह्मवैश्रवणोऽपि आशिषं दत्त्वा नृपसमीपे आसने उपविष्टः। अथ नृपस्तमूचे—'ब्रह्मन्! रूपेणाऽप्सरोजेत्रीं समग्रगुणशालिनीं मदङ्गजां पाणौ कुरु। त्वया मत्सुतः सज्जितः, तद्दानं प्रतिजानीहि, यतः सतां प्रतिज्ञा मेर्वादिवद् न चलत्येव'। वटुरूचे—'पुराऽपि मम धान्यरन्धनी विप्री वर्तते, सामान्यजनानामधिका प्रिया न युज्यते, यतो मदनस्य कथां श्रुत्वा को वल्लभाद्वयं कुर्यात्?'। नृपः प्रोचे—'कोऽसौ मदनः?'। विप्रस्तत्कथां प्रोचे—

## मदन-धनदेवयोः कथा।

"शुद्धज्ञान-क्रियाभ्यां यः, प्राप्य मोहजयश्रियम्। परां ज्ञानरमां लेभे, तस्मै सर्वविदे नमः" ॥ १ ॥

"स्त्रीणां दुश्चरितं दृष्ट्वा ये भोगेभ्यो विरमन्ति ते श्रेयःश्रियां पात्रं स्युः, अत्र मदन-धनदेवौ दृष्टान्तः।

तथाहि—अत्रैव भरते कुशस्थलसन्निवेशे नाम-रूपाभ्यां मदनो[1] नाम श्रेष्ठ्यभूत्। मदनस्य[2] रति-प्रीती इव तस्य यथार्थाख्ये चण्डा-प्रचण्डाह्वे बाल्यादपि कुतोऽप्यासबहुविद्याबलान्विते द्वे प्रिये अभूताम्। ते च द्वे अपि यैस्तैरपि कारणैः परस्परं कलहायेते, निषिद्धे अपि च भृशं कोपा-ऽभिमानाभ्यां न तिष्ठतः। ततो मदनः प्रचण्डां निकटग्रामेऽस्थापयत्, दिनानां च नियमं कृत्वा एकैकस्या गृहे तिष्ठति। अन्यदा केनापि हेतुना प्रचण्डाया गृहे एकं दिनमधिकं स्थित्वा चण्डाया गृहेऽगमत्, तदा सा कणान् खण्डयन्ती तं समागच्छन्तं दृष्ट्वा 'रे दुष्ट! दुष्टा प्रचण्डा तवेष्टा, किमत्रागच्छसि?' इति वादिनी क्रुधा तस्याऽभिमुखं मुशलं प्राक्षिपत्। तद्वीक्ष्य व्याकुलो मदनो नंष्ट्वा कियतीं भुवं गत्वा यावत् पश्चाद्विलोकते तावत्तत्र सर्प-मैक्षत। स्फटाटोपभयङ्करं च तं धावमानं दृष्ट्वा द्रुतं विशिष्य नंष्ट्वा स प्रचण्डाया गृहेऽगमत्। सापि तं तथा दृष्ट्वा 'प्रिय! भीति-श्वासाकुलः सत्वरं किमत्राऽऽगाः?' इत्यपृच्छत्। मदनश्चण्डावृत्तं यथातथमवक्। साऽजल्पत्—'एतत् किञ्चिद्भयावहं नास्ति, तत् स्वस्थो भव'। तावद् रौद्रो भुजङ्गस्तद्गृहाङ्गणमागमत्। तदा सा क्रुद्धा शरीरोद्वर्तनभवान् पिण्डान् सद्योऽभ्यक्षिपत्, तैश्च बभ्रुभूतैरहिः[3] खण्डशः कृत्वा न्यघाति। बभ्रुषु क्वापि गतेषु नानारससमाकुलो मदनश्चमत्कृतो दध्यौ—'चण्डाकोपात् प्रनष्टस्य मम प्रचण्डा शरण-मभूत्, परं यदैषाऽपि कोपिष्यति तदा पुनः कः शरणम्?। प्रियकारिणेऽपि यः कदापि न कुप्यति ईदृशः पृथिव्यां प्रायो दुर्लभः, तदेतादृशी दुष्टा कथं न क्रोत्स्यति?। तदिमे राक्षस्यौ त्यक्त्वा क्वचिद्देशान्तरे

१ नाम्ना मदनो रूपेण च कामदेवसदृशः। २ कामदेवस्य। ३ नकुलभूतैः।

यामि, यत आत्मकुशलाय राज्यमपि त्याज्यम्'। इति ध्यात्वाऽन्येद्यू रहः स्वं बहुधनं गृहीत्वा मदनो देशान्तरे निर्ययौ, स्वेच्छया च भ्रमति। सोऽन्यदा सङ्काशपुरमागत्य उद्यानेऽशोकतरुतले उपविष्टस्तावत्तत्रागतेन भानुदत्तेन श्रेष्ठिनोच्यत–'हे मदन! तव स्वागतम्, एहि, निजं गृहं यावः'। निजनामग्रहणाऽऽमन्त्रणादिभिरेष चमत्कृतस्तेन सह तस्य मन्दिरमगमत्। श्रेष्ठी तं सगौरवं स्नान-भोजनादि विधाप्य निजाङ्गजां पुरस्कृत्य 'इमां पाणौ कुरु' इति जगौ। मदनोऽपि पक्वबिम्बोष्ठीं चन्द्रास्यां रूपेण रत्यतिरेकां तां दृष्ट्वा विस्मितः श्रेष्ठिनमवदत्–'त्वं मम नाम कथं वेत्सि?, गौरवं किं करोषि?, अज्ञातकुल-शीलस्य च निजां पुत्रीं कथं दत्से?'। श्रेष्ठ्यवोचत्–"मम चतुर्णां पुत्राणामुपरि नानाविधोपयाचितैरीप्सितैषा विद्युल्लता पुत्री जज्ञे। मया प्राणेभ्योऽप्यतिवल्लभेयं सकलाः कलाः पाठिता। यदा यौवनस्थाऽभूत् तदा मयैवं चिन्तितम्–'इयं पुत्री लोकरीतितः कस्मैचिद्दूराय देया, अहं चाऽस्या वियोगं क्षणमपि सोढुं न क्षमे'। एवं चिन्तातुरो विनिद्रो रात्रौ सुप्तस्तदा कुलदेव्यागत्योचे–'वत्स! चिन्तां किं करोषि?, प्रातरेतदुद्याने किङ्केल्लिवृक्षतले प्रथमप्रहरान्ते मदननामानं कन्यार्हं वरं लप्स्यसे। विशुद्धकुलजाताय सर्वगुणाय तस्मै कन्यां देयाः, स चाऽवियोगाय स्वगृहे एव स्थाप्यः'। एवमुक्त्वा देवी गता, तस्या गीर्यथार्था जाता। तदादेशाद् इमां पुत्रीं ददे, तत् त्वं परिणय"। तदा मदनो दध्यौ–'त्यक्तपूर्वकलत्रेण मया वण्ठेनेव एकेन प्रियां विना कियन्तं कालं क्व च स्थेयम्?। ईदृशी च देवतादिष्टा दुष्प्रापाऽपि मम भाग्ययोगेन सुप्रापाऽभवत्, तदेनां मनोविश्रामभुवं कनीं परिणीयाऽत्रैव धन-भोगयुक् तिष्ठामि'। इति ध्यात्वा

श्रेष्ठिनो वचः प्रपेदे। ततः श्रेष्ठी तां विवाह्य हर्षोद्रेकात् तस्मै प्रमाणातिरेकं धनं गेहोपस्करं च ददे। मदनोऽपि श्रेष्ठिना दत्ते आवासे तया सस्नेहया नवोढया साकं यथारुचि भोगान् भुङ्क्ते। यत्र तत्रापि नृणामाकस्मिका भोगा भवन्ति, अयं पुण्यस्यैव प्रभावः, ततो हे जनाः! पुण्यं कुरुत। अथ मदनस्य सुखमये कियत्यपि काले गते सति क्रमाद् वियोगिनीकालो वर्षाकालः समायातः। तस्मिन् वर्षाकालेऽन्यदा काञ्चित्स्मरवशां रमणीं प्रोषितभर्तृकां रुदतीं स गवाक्षस्थितोऽशृणोत्, दध्यौ च—'यथैषा पत्युर्वियोगात् स्मरपीडिता रोरुदीति तथा मन्ये नारीभिर्वियोगोऽतिदुःसहो वर्तते। ततो मया ये द्वे मुक्ते ते स्मरार्ते स्नेहवशाद् मां स्मृत्वा कथमद्य भविष्यतः?। तत्कथञ्चित् सकृद्गत्वा ते आश्वासयामि, विशिष्य चाऽनपराधामुपकारिणीं प्रचण्डामाश्वासयामि'। इति प्रियायुग्मवियोगभयदुःखतः सोऽश्रुधारामसुञ्चत्, वाससा च लोचने स्पृशन्तं विद्युल्लताऽद्राक्षीत्। तदा साऽपृच्छत्—'हहा प्रिय! अधुनाऽऽकस्मिकं तव रुदितं कथम्?'। तत्कारणमकथयन्नपि निर्बन्धे कृते पूर्वपत्न्योः सर्वं व्यतिकरं तत्स्मरणादि चाऽवदत्। सा प्राह—'यद्येवं तर्हि तत्र गत्वाऽमू किं नाऽऽश्वासयसि?'। सोऽप्यवदत्—'यदि त्वमनुमन्यसे तदा यामि'। इति सा श्रुत्वा स्त्रीस्वभावत्वाद् भृशेर्ष्यिता दध्यौ—'अहो! दासीव सर्वदा सर्वां शुश्रूषां कुर्वे, कदापि हास्येन गिराऽपि वा विनयातिक्रमात् स्नेहप्रातिकूल्यम् अण्वपि क्वापि नाऽदीदृशम्; तथाप्येष तादृश्योरपि प्राक्पत्न्योरद्य स्मरति!। विपुलां स्मरव्यथां क्षणमपि सोढुं न क्षमे, जलदाविलश्च स्मरसखोऽयं कालः, ततः कालक्षेपं विधायैनं ते विस्मारयामि'। इति विचिन्त्य साऽवदत्—'प्रिय! सम्प्रति गिरिवाहिन्यो

विषमाः, पन्थानश्च पङ्कदुर्गमाः, ततः शरत्काले प्रवासं कर्तुमर्हसि'। तदा तदुक्त्वा स तस्थौ, यतः कामी हि स्त्रीवचोवशो भवति। अथ स यथाभोगसुखं प्रावृषं गमयामास, ततः प्रिये द्रष्टुमुत्कण्ठुल एनां गन्तुमापृच्छत। सापि तं गन्तुमन्वमन्यत, अग्रिमं च करम्बं कृत्वा प्रचुरं शम्बलं ददौ। तदादाय मदनोऽचालीद्, एकं ग्राममवासवान्, मध्याह्ने च तत्सरस्तीरे तरोस्तले विशश्राम। स्नात्वा देव-गुरूंश्च स्मृत्वा भोक्तुमिच्छन्नचिन्तयत्—'यद्यतिथये प्रदाय भुञ्जे तदा विवेकिता स्यात्'। तावत् कञ्चिज्जटाधरं भैक्षहेतवे देवकुलाद् ग्रामान्तर्यान्तं दृष्ट्वा मुदा निमन्त्रितवान्। दानशौण्डः स तस्मै यथाश्रद्धं करम्बकं ददौ। सोऽपि क्षुधितो द्राक् तत्रैव भोक्तुमुपचक्रमे। अथ मदनो यावद्भुङ्क्ते तावत्कश्चित् क्षुतं व्यधात्। तच्चाऽपशकुनं मत्वा स सुधीः क्षणं प्रत्यैक्षिष्ट, तावत् स तपस्वी तं करम्बकं भुक्त्वा उरणकोऽभूत्[1], सङ्काशनगराभिमुखं च सत्वरं प्रचचाल। तं तथा दृष्ट्वा मदनोऽप्यचिन्तयत्—'चेत् करम्बको मया भक्षितः स्यात् तदाऽहमप्येवम् उरणोऽभविष्यम्'। इति विचिन्त्य स 'एष क्व याति ?' इत्याश्चर्यात् तमन्वगात्। द्वावपि तौ यान्तौ सङ्काशपुरमीयतुः। उरणो द्रुतं विद्युल्लताया गृहे प्राविशत्। 'अस्य को वृत्तान्तो भवेत् ?' इति द्रष्टुं मदनः काऽपि गृहतो बही रहः स्थितः। अथ विद्युल्लता स्वौकसि प्राप्तमुरणं दृष्ट्वा क्रुधा सत्वरं द्वारं पिधाय दण्डेन दृढमताडयत्। 'रे रे ! निरपराधां मां त्यक्त्वा सापराधे अपि प्रिये रमयितुं यासि !, चिरादपि न व्यरंसीः। किन्तु मम मुशलं नास्ति ?, परमहं भर्तुः प्राणापहारं किं करोमि ? इति लज्जावशतस्तेन न

१ मेषः।

॥ ८२ ॥

हन्मि'। इति पुनः पुनर्वदन्ती सा मुहुर्मुहुरारसन्तं तमताडयत्। तं शृण्वन् लोकोऽमिलत्, जजल्प च—'मूढे! निर्लज्जे! पशु कथं ताडयसि?, वणिक्कुलभराऽपि हत्यापापात् किं न बिभेषि?'। ततश्च साऽभिमन्त्रितवारिणाऽसिञ्चत्, तदा उरणो भस्मलिप्ताङ्गो यथारूपो जटाधरोऽभूत्। तं दृष्ट्वा जनोऽप्राक्षीत्—'भदन्त! तव किमिदम्?'। तदा तपस्वी स्ववृत्तान्तं यथागद्गदमूचिवान्, ततः स तरललोचनो भीत्या सद्योऽनशत्। लोको विस्मितः स्वपदमगात्। विद्युल्लता दध्यौ—"धिग् धिग्, अयं निरपराधस्तपस्वी मया पीडितः, न जाने भर्ता क्व गतः, पुनर्मिलिष्यति नवा?। 'शिक्षया तं वशीकृत्य यथारुचि भोगान् भोक्ष्ये' एवं मम मनोरथोऽधुना व्यर्थोऽभूत्। जने ममोद्घाटोऽभूत्, पत्या च वियोगो जातः"। अथ मदनस्तन्निरीक्ष्य नानारसाकुलो दध्यौ—"अनयाऽनेन चरित्रेण मम प्राक्प्रिये निर्जिते। अहो! योषितां चरितानि योगिनामप्यगम्यानि, धिग् धिग् रागान्धितान् जीवान् ये तास्वपि रज्यन्ते। यतः—

"राक्षसीः सर्पिणीर्व्याघ्रीः, क्रौर्यान्नार्योऽतिचक्रमुः। विश्वसन्ति य एतासु, नृरूपाः पशवो हि ते" ॥ १ ॥

अहं तु कष्टाच्छुटितोऽस्मि, ततश्चण्डां प्रचण्डां विद्युल्लतां चाऽपि त्यक्त्वा स्वहितं करिष्ये"। इति ध्यात्वा मदनो भ्राम्यन् हसन्तीपुरीमगात्। तत्रोद्यानेऽभ्रंलिहं हिरण्मयं चैत्यं ददर्श। भक्ति-हर्षोल्लसत्तनुर्विधिना तत्र प्रविश्य आदिमार्हतो रत्नप्रतिमां प्रणम्य तुष्टुवे, स्वविमानजितश्च चैत्यस्य श्रियमालुलोके। ततो धन्यंमन्यो मुदितो रङ्गमण्डपमध्यास्त, तावत्तत्र कश्चित् चारुवेषा-ऽङ्ग-यौवन आययौ। सोऽपि तीर्थेशं नत्वा स्तुत्वा च तत्रैव मण्डपे दुःखेन दीर्घं निःश्वस्य मदनान्तिके उपाविशत्। तं च निःश्वसन्तं

प्रेक्ष्य मदनः स्माह—'हे सखे ! कस्त्वम् ?, किमेवं निःश्वसिषि ?, अहमिव किं दुःखितोऽसि ?' । स जगौ—'अहं धनदेवो वणिग् अत्रैव वसामि, दुःखं तु मम कथयिष्यामि, परं त्वं कः किं च दुःखितः ?' । ततो मदनोऽवदत्—'मित्र ! मम दुःखं कथ्यमानं लज्जाकरं भवेत्, तथाप्येपोऽहं तव वदामि; यतः प्रथमेऽपि दर्शने स्नेहवान् साधर्मिकोऽसि, सतां च तत्कथितं प्रायशः प्रतिबोधाय भवेत्' । ततः कुशस्थलग्रामवासादारभ्य तत्रागमनावधि स्ववृत्तं यथास्थितं सोऽखिलमाख्यत् । अथ धनदेवोऽभणत्—'सखे ! इदं कियन्मात्रम् ?, यदि मम वृत्तान्तमाश्चर्यकारणं शृणोषि तदा जानासि' । मदनः स्माह—'श्रोतुमुत्कण्ठुलोऽस्मि, तद् ब्रूहि' । ततो धनदेवः स्ववृत्तान्तमब्रवीत् । तद्यथा—"अत्रैव महापुर्यां गुणी श्राद्धधर्मे रतो धनपतिः श्रेष्ठ्यासीत्, तस्य च लक्ष्मीर्द्वेधा प्रियाऽऽसीत् । तयोर्विविधोपायैर्द्वौ तनयौ नाम्ना धनसार-धनदेवौ अजायेताम् । तौ सर्वकलाः पाठितौ कन्ये च परिणायितौ । सद्धर्म-सुखलीनानां तेषां कियान् कालस्त्वगात् । अथ पितरौ विशुद्धधर्मेण स्वर्गमीयतुः, तदा तौ सशोकौ पुत्रौ मुनिचन्द्रमहर्षिणा बोधितौ; परं सस्नेहयोस्तयोः प्रिये परस्परं कलहायेते । ततस्तौ विभक्तसारौ पृथग्गृहयोरस्थाताम् । अथ स्वजायां स्वैरिणीं वीक्ष्य लघुबान्धव उद्विग्नः, ज्येष्ठेनोद्वेगकारणं पृष्टः, सोऽपि तस्मै स्त्रीकृताऽसमाधिमाह । धनसारस्तदभिप्रायं प्रयत्नतो विज्ञाय भ्रातृस्नेहाद् अन्यां रूप-कला-गुणैराढ्याम् इभ्यजां कन्यकां धनदेवेन पर्यणीनयत् । तदा स धृतिमान् तया नवोढया सह भोगानभुङ्क्त, परं भाविवशात् प्राक्पत्नीव साऽपि क्रमात् स्वैरिण्यभूत् । अन्यदा धनदेवस्तयोश्चरितं जिज्ञासुः सायं जगौ—'प्रिये ! अद्य मम भृशं शीतज्वरोऽचटत्' । ततस्ताभ्यां

शय्यायामास्तृतायां स द्रुतम् अस्वपत्, वासोभिश्च पिहितेक्षणाद् मायया निद्रामदीदृशत् । रात्रौ यामान्ते घोरशब्दतस्तं निद्राणं मत्वा ज्येष्ठा कनिष्ठामवदत्–'हे स्वसः ! सामग्रीं कुरु' । ततो द्रुतं गृहकृत्यानि कृत्वा ते उभे निर्याय गृहोद्यानसहकारद्रुमोपरि आरूढे । अथ धनदेवस्ते निर्गते निरीक्ष्य रहोऽन्वगात्, चूतस्य कोटरे तस्थौ, स्वं च वस्त्रेण बबन्ध । ततस्ताभ्यां मन्त्रे जप्ते तरुर्द्राग् नभसा उदपतत्, अम्बुधौ च द्राग् गत्वा रत्नद्वीपे रत्नपुरे स्थितः । ते स्त्रियौ तस्मादुत्तीर्य पुरस्यान्तः प्राविक्षतां, यथारुचि च विचित्राणि चित्राणि निरीक्षेते । धनदेवोऽपि इमे अनुसरन् पुरे प्राविशत्, तयोश्च तादृक्चरित्रेण विस्मयापन्नो गच्छति । अथाऽत्र पुरे श्रीणां निधिः श्रीपुञ्जः श्रेष्ठ्यस्ति। अस्य पुत्रचतुष्कोपरि श्रीमती सुता जाता, यां सर्वा विद्याः कलाश्च सस्पर्धमिव शिश्रियुः । तदुद्वाहे जायमाने वसुदत्तसार्थेशस्य सुतो हयारूढश्चलच्चारुचामरैरुपवीजित उत्तमाङ्गधृतस्फारमायूरातपवारणो देवदूष्यसदृशक्षौम-सर्वाभरणभूषित उत्सवैस्तां परिणेतुं यावत्तोरणे आयाति, तावद् उत्सववीक्षणार्थं बहुभिर्जनैर्मिलितैः पर्यस्ततोरणस्तम्भः सहसा तिरः पपात । तदग्राच्छीर्षघलिका निपत्य वरस्य शिरोऽस्फोटयत्, ततश्च मर्मघातात् स यमाऽतिथिरभूत् । आकस्मिकमहाशोकविह्वलः सपरिच्छदः सार्थप आक्रन्दन् सद्यः स्वगृहेऽगमत् । अथ श्रीपुञ्जः श्रेष्ठी विधिनिर्मितमिदं स्वरूपं विज्ञाय स्वपरिवारेण साकमिति विचारं निर्ममे—"अन्यथा प्रारब्धं कार्यं दैवेनाऽन्यथा विदधे, प्राणिनां प्राच्यकर्मणां विषमां गतिं को वेत्ति ?। इयं कन्या यदि अद्याऽस्मिन्नेव लग्ने न परिणाय्यते तदा तदभाग्यस्य सर्वतो जने प्रसिद्धौ जातायां सकलङ्कामिमां पुत्रीं कोऽपि न परिणेष्यति, यतः सर्वोऽपि

प्रायश्चिरं जीवितमिच्छेद् न तु प्रियाम् । तद् यथाभाग्यं येन केनापि उद्यौवनेन वरेणेयुषा इयं पुत्री अद्यैव परिणाय्यते" । एवं विचार्य श्रेष्ठी कश्चिद्वरं विलोकितुं सर्वतः स्वान् जनान् प्रैषीत्, तेऽपि पुरे सर्वतो भ्रमन्तस्तमुत्सवं द्रष्टुं तत्र प्राप्तं युवानं वराकारं धनदेवं वीक्ष्य सम्मानात् श्रेष्ठिनोऽन्तिके आनयन् । श्रेष्ठ्यपि स्वपुत्र्या अनुरूपं दृष्ट्वा भृशमभ्यर्थ्य तेन यूना सोत्सवं विधिना कन्यां पर्यणीनयत् । 'मया पूर्वपत्न्योरीदृशं स्वरूपं ददृशे, तदात्मनः क्षेमं वाञ्छता यथा तथा ते त्याज्ये । पत्नीं विनाऽतिथिपूजाद्यभावतो निर्वाहो न भवति, तत एतां गुणशालिनीं सुरूपां स्वयंवरां पित्रा चाऽभ्यर्थनापूर्वं न्दीयमानां कथं त्यजामि ?' इति विचिन्त्य धनदेवस्तां मुदैव उपयेमे । इतश्च तत्प्रिये स्वैरं क्रीडित्वा तं नव्यप्रकारं विवाहं श्रुत्वा द्रष्टुमुत्सुके अत्र समागते, सुरमिथुनोपमं च वधू-वरयुग्मं वीक्ष्य तद्रूपविस्मिते दैवात्तं योगं तुष्टुवतुः । लघ्वयवक्-'अयं वर आर्यपुत्र इवाऽऽभाति' । तदा ज्येष्ठा जजल्प-'रूपाद्यैः समानाः पुरुषाः किं न भवन्ति ? । आवयोः पतिस्तु शीतज्वरार्तो निद्राणो गृहेऽस्ति, तस्याऽत्र कथमागतिः ?, ततोऽत्र तं मा शङ्किष्ठाः' । ततस्ते क्रीडायै स्वेच्छया पुनः क्वापि प्रापतुः । अथ वधूयुतो धनदेवो वासधाम जगाम, तत्राऽप्यूर्ध्वगृहस्याऽग्रगवाक्षगतस्तत्स्थानाद्यभिज्ञानमीक्षते । अथ च पत्न्योर्गमनशङ्कया श्रीमत्या वसनाञ्चले धनदेवः कुङ्कुमेनैतं श्लोकं लिलेख—

"क हसन्ती क वा रत्न-पुरं चूतोऽभ्रगः क च । सूनुर्धनपतेर्भाग्याद्, धनदेवोऽभ्यगात् श्रियम्" ॥ १ ॥

ततः किञ्चित्कार्यमुद्दिश्य निर्ययौ, प्रिये च वीक्ष्य तयोरनुगतः । ते द्रुममारूढे; सोऽपि प्राग्वत्

कोटरे तस्थौ, स्वं च वाससा बबन्ध । ततश्चूतः स्त्रीजसमन्त्रेण व्योम्नोत्पत्य तत्पुरोद्याने पूर्ववत् तस्थौ। ततो धनदेवो रहो निजगृहे ययौ, शय्यायां प्राग्वदस्वाप्सीत्, पटावृतश्च निदद्रौ । तत्प्रिये अपि गृहं प्राप्ते पतिं तथा दृष्ट्वा निःशङ्के जाते शय्ययोः शयिते, क्षणं च निद्रासुखमापतुः । प्रातरुत्थाय गृहकर्माणि चक्रतुः । धनदेवो रात्रिजागराद् अद्यापि निद्राणोऽस्ति । अथ निद्रावशात्तस्य आबद्धकङ्कणो दक्षिणः पाणिर्भाग्यवशात् प्रावरणाद्बहिर्निरगात्, तं दृष्ट्वा चकिता लघ्वी प्रिया ज्येष्ठामदीदृशत् । साऽपि स्माह— "अयं वर आर्यपुत्र इवाभाति' इति यत्त्वयाऽवादि तत्सत्यमभूत् । आवाभ्यां सह कथमपि रहोऽयमागत्य कन्यकामुपायंस्त, तदावयोर्वृत्तान्तोऽखिलोऽप्यनेन बुबुधे । परं मनागपि मा भैषीः, अत्र प्रतिक्रियां करिष्ये" । इत्युक्त्वा दवरकमभिमन्त्र्य सप्त ग्रन्थीन् प्रदाय धनदेवस्य वामे पादे बबन्ध । अथ धनदेवो यावत् पाणिसंस्पर्शात् प्रबुद्धस्तावत् सविस्मय आत्मानं शुकीभूतं ददर्श, अग्रे च प्रियां वीक्ष्य दध्यौ—'मया कङ्कणच्छोटनं विस्मृतं, तत् पाणौ वीक्ष्य ध्रुवं प्रिया शङ्किता । कथञ्चिच्च नैशं वृत्तान्तं विज्ञाय मां शुकं चकार, यत ईदृक्चरित्रायामस्यां न हि किञ्चनाऽसम्भाव्यम् । धिग् मया मनुष्यत्वं हारितं, अहं पशूभूतः, किं करोमि ?' । इति ध्यात्वा भीत्या यावदुड्डयते तावत् सा दुष्टा कोपात् करेण तमाक्रम्य जगाद— 'रे रे ! च्छलं कृत्वाऽऽवयोश्चरित्रं विलोकसे ?, भवादृशां तत्र गम्यम्, अतः स्वच्छलजं फलं सहस्व' इत्युक्त्वा तं पञ्जरे क्षिप्त्वा गृहकार्येष्वलगत् । अन्याऽपि तस्याः कलां प्रशंसन्ती गृहकार्यमकरोत् । धनदेवस्तु स्वगृहं परिजनादि च पश्यन् शोचति । अथ ते भर्जिकां सच्चमत्कारं पचन्त्यौ शुकं नीत्वाऽस्त्रधारायां च

न्यस्य भापयतः—'रे ! छमत्कारान् शृणोषि ?, त्वमप्येवं कदापि निहत्य सच्छमत्कारं पक्ष्यसे'। इत्यादिभाषितैस्ताभ्यां जीवितसंशयं नीयमानः कीरो दुःखितः कथञ्चिद्वासरान् व्यतिक्रामति। अथ रत्नपुरे श्रीपुञ्जः श्रेष्ठी वरं निर्गतम् अनायातं च विज्ञाय सर्वत्राऽप्यगवेषयत्, अलब्ध्वा च प्रगे तेन लिखितं श्लोकमैक्षत। ततो धियां धाम्ना श्रेष्ठिना तस्य वासस्थानादिकं ज्ञातम्। तथाहि—'हसन्त्यां पुर्यां धनपतेः सूनुर्धनदेवाह्वो व्योम्ना कथञ्चिदत्राऽऽगात्, जगाम च'। तदुदन्तमुक्त्वा 'वरमाकारयिष्यामि' इत्याश्वासिता सुता रुदती स्थापिता। अन्येद्युरर्थोपार्जनहेतवे सागरदत्ताभिधानं सार्थवाहं हसन्त्यां गच्छन्तं ज्ञात्वा श्रीपुञ्जस्तस्य धनदेवाय रात्र्या अलङ्कृतिमार्पिपत्। संदिष्टं च—'द्रागिहागत्य निजपत्नीं संभालय'। सागरदत्तोऽपि पोतेन समुद्रमुलङ्घ्य सद्यो हसन्त्यां प्राप्तवान्, ततो धनदेवगृहेऽगमत्। तत्र तमदृष्ट्वा तस्य प्रिये अप्राक्षीत्—'युवयोः पतिः क्वाऽऽस्ते ?'। ताभ्यामूचे—'द्रव्योपार्जनाय स देशान्तरे गतः'। अथ सोऽवादीत्—'इममलङ्कारं जामात्रे धनदेवाय श्रीपुञ्जः प्राहिणोत्, शीघ्रं च तमाजूहवत्'। ते ऊचतुः—"इदं साधु, धनदेवोऽपि तां प्रियां शीघ्रं द्रष्टुमुत्सुकः, परं गाढकार्यतो देशान्तरेऽगात्। तेन च गच्छता इत्युक्तम्—'यदि कोऽपि रत्नपुरादेति तदाऽयं शुकस्तद्धस्तेन प्रियायै प्रेष्यः, तदर्पितं च ग्राह्यम्"। इत्युक्त्वा ताभ्यां स शुकः सपञ्जरस्तस्याऽऽर्पि, अलङ्कृतिश्च गृहीता। सार्थवाहोऽपि कीरयुग् निजोत्तारके ययौ। क्रमात् क्रयाणकानां क्रय-विक्रयौ विधाय नावा वारिधिमुलङ्घ्य शीघ्रं रत्नपुरे आगात्। तत्र धनदेवप्रियोदितं सर्वं श्रेष्ठिने निवेद्य तं शुकमार्पिपत्, सोऽपि स्वपुत्र्यै ददौ। सा च तं दृष्ट्वा मुमुदे, भर्तुः प्रसादं मन्य-

माना नित्यं रमयति । अन्यदा पादे दवरकं दृष्ट्वा विस्मिताऽत्रुटत्, तदा स्वभावस्थो धनदेवोऽभूत् । ततः सा तं निरीक्ष्य विस्मिता मुदिता चाऽऽचख्यौ–'स्वामिन् ! किमिदमद्भुतम् ?' । तेनोक्तम्–'यत् पश्यसि तदेव, अधुनाऽधिकं तु न पृच्छथम्' । इत्येतेनोक्ते सा गत्वा एतत् पितुर्न्यवेदयत् । स प्रमुदितो धनदेवाय सम्मानपूर्वकं स्वर्विमानसदृशं सधनो-पस्करमावासं ददौ । धनदेवस्तत्र तया सस्नेहया नवोढया सह भोगान् भुञ्जानोऽस्थात्, व्यवसायाद्यैश्च कर्मभिः पुण्यानुभावादद्भुतां लक्ष्मीमर्जयति । अथ कियति कालेऽतिक्रान्ते श्रीपुञ्जे स्वर्गं गते पितृवेश्मनि भ्रातृणां स्नेहदौर्बल्यं ज्ञात्वा श्वशुरगृहे पत्या सह यियासुः श्रीमती दध्युषी–'अस्य कीदृशो गृहवासः ?, कीदृशौ च पुराप्रिये ?' । इत्युत्कण्ठिता श्रीमती तं जगौ–स्वामिन् ! सकृत् स्वपितुरावासं किं न दर्शयसे ?, पुरुषस्य पितृगृहे वासः श्लाघ्यः, स्त्रियाश्च श्वशुरगृहे वासः श्लाघ्यः' । धनदेवो जगौ–'समये ज्ञास्यते' । तच्छ्रुत्वा सा धृतिमती भोगैकदत्तदृक् तस्थौ । पुनः कालान्तरे सा पतिं व्याहार्षीत्–'स्वामिन् ! त्रेधा मनुष्याः स्युः–ये श्वशुरगुणेभ्यः ख्यातिमन्तस्ते जघन्याः, ये पितृगुणेभ्यः ख्यातास्ते मध्यमाः, ये च स्वगुणेभ्यः प्रसिद्धास्ते उत्तमाः । हे नाथ ! तवाऽत्रस्थस्य श्वशुरोद्भवा समृद्धिः, एषा नोत्तमत्वाय, तेन त्वत्पितुर्गृहं यावः' । इति धनदेवः श्रुत्वा तां जगाद–'भद्रे ! अद्यापि तान् भर्जिकायाश्चमत्कारान् स्मरामि !' । एवं पत्युरुक्तमाकर्ण्य श्रीमती जगाद–'प्रिय ! के नु ते ?' । ततः सोऽपि आदितः स्ववृत्तान्तं सम्यगवदत् । तं श्रुत्वा श्रीमती हास्या-ऽवज्ञे विदधती जगौ–'स्वामिन् ! कियन्मात्रमिदम् ?, तत ईदृशाद् मा भैषीः । अत्र नूनमहं भलिष्ये, ततो निःशङ्कं मया सह स्वगृहं

व्रज, तव बाधा कर्हिचित् क्वाऽपि न भवित्री'। इति पत्नीगिरा साहसं भजन् स्वजनानापृच्छय स सप्रियः क्रमाद् हसन्तीमगात्। स्वगृहे विशन् 'तदवस्थोऽप्ययं कथं स्वं रूपं प्रापत्?' इति ध्यायन्तीभ्यां पूर्वपत्नीभ्यां सोऽदर्शि। ततस्ते वहिर्मुदं दर्शयन्त्यौ तमभ्युत्तस्थतुः, सगौरवं च आचमनदानादिप्रतिपत्तिं कृत्वा, सप्रियं तं चित्रशालायां नीत्वा आसने निवेश्य स्वागतप्रश्नाद्यैः पतिम् अमूमुदताम्। ततो ज्येष्ठागिरा लघ्व्या पाद्यं वरोदकमानीय ताम्रभाजने भक्त्या तस्य चरणौ क्षालितौ। ज्येष्ठा तज्जलं गृहीत्वाऽभिमन्त्र्य च तेन जलेन भुवमाच्छोटयत्, तदा तज्जलं गृहेऽभितो ववृधे। जले वर्धमाने भीतो धनदेवः श्रीमत्या मुखमीक्षते, सा तु मुहुर्मुहुः 'मा भैषीः' इत्यभिधत्ते। ततस्तज्जलं वर्धमानं क्रमाद् गुल्फौ जानू ऊरू नाभिम् उरो गलं नासां यावच्चाऽऽयातं, ततो भीतः श्रीमतीमभ्यधात्—'अतः परं नासायां मग्नायां कस्मै कार्याय त्वत्प्रतिक्रिया भविष्यति?'। तदा सा सद्यस्तत्पयो धेनुवद् मुखेन तथाऽपाद् यथा विन्दुरपि क्वापि नेक्ष्यते। तद् दृष्ट्वा पूर्वपत्न्यौ द्राक् तस्याः पादयोरपतताम्, ऊचतुश्च—'त्वया निजविद्या-कला-गुणैरावां जिग्यिवहे, ततस्त्वां स्वामिनीमिवाऽऽराधयिष्यावः'। ततस्ता मिथः प्रीतिजुषः स्वस्वकार्येषु लग्नाः। तिस्रोऽप्यमूः क्षुद्रविद्याभिः समतां ययुः, मिथश्च प्रीत्या मिलिताः, शीलसाम्ये हि सौहृदं भवति। तत आद्ययोरिवाऽस्या अपि स्वैरित्वं जातं, यतः संसर्गात् खलु असन्ताऽपि दोषा आयान्ति। तद् दृष्ट्वा धनदेवो दध्यौ—'प्राच्ययोर्यादृशी भक्तिर्मया ददृशे! तथाऽस्यास्तृतीयस्या अपि भविता तदा मम शरणं को भविष्यति?'। तत्तिस्रोऽमू राक्षसीरिव शीघ्रं त्यक्त्वा किञ्चित् स्वहितं करोमि, येन पुनर्भयं न स्यात्'।

इति विचिन्त्य धनदेवः किञ्चित्कार्यमुद्दिश्य गृहान्निर्ययौ, अस्मिंश्चोद्याने चैत्ये समाययौ। सोऽहं धनदेवो निजं दुःखं न्यगदम्, त्वद्दुःखतश्चाऽधिकं शुकत्वादिकं दुःखमन्वभूवम्। तव उपागताऽपि पशुता दैवाट्टलिता, तद्दुःखं तु वपुषा नाऽन्वभूः, तेन त्वं भाग्यवानसि"।

अथ मदन एवं निशम्य विस्मितस्तं व्याजहार–'सखे ! दुःखमयं भवं मत्वा आत्महितं कुर्वः'। एवं तुल्यवृत्तयोस्तयोः प्रीतितो वार्तयतोर्विमलवाहाह्वो गुरुः सपरिच्छदस्तत्रागात्। सोऽपि युगादीशं नत्वा स्तुत्वा च तत्र मण्डपे शिष्यैर्ढौकिते प्रासुके कम्बले समुपाविशत्। ताभ्यां भक्त्या वन्दितः स धर्माशिषं दत्त्वा पुर आसीनयोस्तयोर्धर्मदेशनां विदधे। तथाहि–

"शरदभ्रसमाः श्रियोऽखिला–स्तटिनीपूरसमं च जीवितम्।
नटपेटकवत् कुडुम्बकं, ननु को मुह्यति धर्मकर्मसु ? ॥ १ ॥
शरणं न विपत्सु कश्चन, स्वजनाः स्वार्थपरा वपुः क्षयि।
ललनाः कुटिलाः कुतः परा–भवभीविघ्नभृते भवे सुखम् ? ॥ २ ॥
अणु वैषयिकं सुखं भवे, तदपि स्याद् ललनाद्यसाधनम्।
ललना त्वखिलापदां सखी, न बुधोऽस्मिन्ननुरज्यते ततः ॥ ३ ॥
परमे तदगत्वरे सदा–ऽप्यपवर्गस्य सुखेऽनुरज्यताम्।

१ विनाशि। २ पराभवभयविघ्नपूर्णे। ३ अत्यल्पम्। ४ ललनाद्यानि साधनानि यस्य तत्। ५ अविनाशिनि। ६ मोक्षस्य।

सं[1] च संयमसाधनो मतः, प्रतिपद्यध्वमतः सुसंयमम्" ॥ ४ ॥

एवं गुरुविधोः[2] संवेगसुधावर्षुकैर्गोभिः[3] संसारतृष्णातापे गते सति इमौ प्राव्रजताम्, गुरुणा च सह व्यहरताम्। तौ मुनी संविग्नौ नानातपांसि कुर्वाणौ, द्वादशाङ्गधरौ, सिद्धयोगौ, मिथः प्रीत्या प्रायः सह विहारिणौ, विधिना पूरितायुष्कौ नृभवं त्यक्त्वा सौधर्मे पञ्चपल्यायुषौ सुरौ उदभूताम्। तत्र सुरसुखानि भुक्त्वा मदनजीवो विजयपुराह्वे नगरे समरसेनभूपस्य विजयावल्यां राज्ञ्यां मणिप्रभाह्वः पुत्रोऽभूत्। स पित्राऽर्पितराज्यभरो बहुकालं राज्यश्रियं भुक्त्वा, कमलवनं म्लानं दृष्ट्वा प्रतिबुद्धः सन् राज्यं पुत्रे न्यस्य जिनेश्वरसूरेः पार्श्वे दीक्षामुपाददे। स च तपसाऽवधिज्ञाना-ऽऽकाशगमनशक्तिरभूत्। अथ धनदेवस्य जीवः स्वर्गतश्च्युत्वा वैताढ्यगिरौ रथनूपुरचक्रवालनगरे महेन्द्रसिंहाभिधो विद्याधरचक्रवर्त्यभूत्। अस्य पत्नी रत्नमाला, पुत्रौ च रत्नचूड-मणिचूडौ। अन्येद्युस्तस्य पत्नी महारोगाद् मृता, तन्मोहवशाद् एष विद्याधरचक्रवर्ती शोकार्तो व्यलपत्। अथ मणिप्रभो मुनिपतिर्ज्ञानेन तमवबुध्य पूर्वभवस्नेहवशाद् विहायसा[4] तत्रागात्, स च चक्रवर्तिना वन्दितः। मुनिना पूर्वभवस्त्रीचरित्रमुक्त्वा प्रतिबोधितोऽयं राज्यभारं रत्नचूडसुते न्यस्य अस्य मुनेः समीपे प्राव्रजत्। समस्तागममधीत्य अत्युग्रं बहुविधं तपस्तप्त्वा क्रमादयं खेटराजर्षिर्[5]लब्धिनिधानमभवत्। तौ द्वावपि राजर्षी अष्टाङ्गयोगसाधनया समस्तकर्ममलं क्षिप्त्वा क्रमतः शिवपदमापतुः। एवं ये बुधा मदनेन सह धनदेववद् विषयसुखं दुःखहेतुं परिभाव्य ततो विरक्ताश्चरणं[6]

१ मोक्षः। २ गुरुचन्द्रस्य। ३ वाग्भिः, चन्द्रपक्षे किरणैः। ४ आकाशेन। ५ विद्याधरराजर्षिः। ६ चारित्रम्।

विदधति ते भव्याः क्रमात् शिवपदं प्राप्नुवन्ति । एतद् मदनचरितं धनदेवचरित्रं च निशम्य विचिन्त्य च इह-परभवे चाऽत्यन्तदुःखप्रदाभी रमणीभिः सौख्याभिलाषं कः कलयति ?"।

एवं श्रुत्वा सर्वे सभ्या विस्मितास्तस्य ब्रह्मवैश्रवणस्य चातुर्यं तुष्टुवुः । अथ मन्त्रिभिः सह विचार्य राजा स्वेष्टसिद्धये ऊचे—"स्त्रीणामिदं वृत्तं सम्यगुक्तं, परं तास्तु गृहस्थैर्दुस्त्यजाः । तथा एकान्तात् समस्ताः स्त्रियो न निन्द्याः, यतस्ता अपि मुक्तिं यान्ति । जीवेषु गुणा दोषाश्च कर्मणां वशाद्भवन्ति, कर्मणां हेतवश्च मिथ्यात्वाद्या आश्रवाः, परं पुरुषस्य स्त्रिया वा आकारस्तु हेतुतां न प्राप्नोति; अत आश्रवा एव निन्द्याः, आकारस्य निन्दया किम् ?। तथा ब्रह्मन् ! यत्त्वयाऽग्रे प्रोक्तम्–'सामान्यजनस्य अधिकाः प्रिया न युज्यन्ते' तदधुना स्मर, परं यः स्त्रीभिरर्दितुं शक्यते स सामान्यजनस्त्वं तु नाऽसि । तद् मम सुतां पाणौ कुरु, सन्तो हि प्रार्थनां न भञ्जन्ति" । ततो विप्रोऽवदत्–'राजेन्द्र ! यदि तव इति ममादेशस्तदधुना प्रतीक्षस्व, अवसरे तु योग्यं ज्ञास्यते । मम काऽपि प्रतिज्ञाऽस्ति, सा यावन्न पूर्यते तावदत्रार्थेऽहं नैव वाच्यः । तां प्रतिज्ञामवसरे ज्ञास्यसि'। इति विप्रगिरा भूप-मन्त्र्याद्या भृशं जहृषुः । अथाऽधिकारिणा अवसरे विज्ञप्ते सर्वे उत्तस्थुः, दिवस-निशोश्च कृत्यानि यथोचितं चक्रुः। कन्याऽपि द्विजेन स्वमूरीकृतं श्रुत्वाऽमोदत । अथ भूपः कृतप्रातःकृत्यो राजवर्गीयैः पूर्णायां संसदि वरे सिंहासने उपाविशत्, तदा प्रतीहारो भूपालं नत्वा व्यजिज्ञपत्–'स्वामिन् ! पद्मरथस्य राज्ञो दूतः समागतोऽस्ति, तं च गोपुरे स्थापितं मध्यसभं मुञ्चे नवा ?'। भूभुजा प्रोक्तम्–'मुञ्च' । सोऽपि गत्वा तं मुमोच । अथ दूतः पर्षदि प्राप्तो राजानं

रूपाऽतिमन्मथं, रत्नाभरणकिरणैः सर्वां सभां द्योतयन्तं, धृतस्वर्णमणिच्छत्रं, चामरैर्वीज्यमानं; सर्वतो मन्त्रि-सामन्त-श्रेष्ठि-सेनेश्वरादिभिः, ब्रह्मवैश्रवणाद्यैः सुहृद्भिः, पीठमर्दकैः, अन्यैरपि श्रिया वैश्रवणैरमितैर्मान्यैः[1] पौरैः, कविभिः, कथकाद्यैः, विविधैः पण्डितैः, कङ्कटैः[2] सङ्कटाङ्गैर्विविधायुधधुर्धरैर्वीरैः[3], अङ्गरक्षैश्च समन्ततः सेव्यमानम्, ऐश्वर्यलीलाभिश्च पितृजित्वरं जयन्तं ददर्श। ततः स दूतो भूपं नत्वा तत्समृद्धिभिर्विस्मितो राज्ञा भ्रुवः संज्ञया दापिते आसने आसामास। राज्ञा पृष्टम्—'कुशलवानसि ?, अस्माकं भगिन्याः पत्युर्भद्रं वर्तते ?, तवागमने च किं प्रयोजनम् ?'। सोऽपि शिरो नमयित्वा रचिताञ्जलिर्जगाद—"राजन् ! त्वत्प्रसादेन मम क्षेमं, तव च भगिनीपतेर्भद्रमस्ति । अथागमने प्रयोजनं वच्मि—पद्मपुरेन्द्रेण पद्मरथनृपतिनाऽहं तव सन्निधौ प्रहितः, तेनैव च सन्दिष्टम्—'क्रुधा विजयसुन्दरी पुत्री सहसा कस्मैचिद्भिल्लाय दैवतो दत्ता । तौ तु प्रातर्विलोकितौ, परं न लब्धौ, ततो निरन्तरं खिद्ये; त्वमपि यथाशक्ति सर्वतो विलोकयेः । अन्यच्च, तव कमलसुन्दरी कन्याऽस्ति यया सौन्दर्येण लक्ष्मीरपि जिता, सा मम पुत्राय पद्मदत्ताय दीयताम्, कन्दर्प-रत्योरिव ह्यनयोरयं योगोऽनुरूपोऽस्ति" । इति दूतोदितं श्रुत्वा नृपस्तदुचितमुत्तरं दातुं किञ्चिच्चित्ते व्यचिन्तयत्—'पुरा स्वसा चेत् कौलाय दत्ता तत्फलमीदृग् दृष्टम्, पुनस्तस्य कुलेऽभीष्टां पुत्रीं कथं ददे ?। एष भूपस्तु काप-सैन्यबलोत्तरो भृशं शूरः, तस्मादत्र साम्नोपायेन नयानुगो निषेधः कार्यः'। एवं विमृश्य नृपः स्माह—'भद्र ! प्रागपि विजयसुन्दर्या युतं

१ कुबेरैः । २ कवचैः । ३ सङ्कटं—सङ्कुचितम् अङ्गं येषां तैः ।

भिल्लमशूशुधं, परं क्वचिदपि न प्रापम् । पुत्रीं कमलसुन्दरीं तु कुमारप्रगुणीकारमहोपकारिणेऽस्मै ब्रह्म-वैश्रवणाय प्रतिज्ञावशात् प्रागेवाऽदाम्, कन्याऽप्यस्मिन् अन्वरज्यत' । एतदाकर्ण्य दूतोऽवादीत्–'प्रभो ! राजराजाऽङ्गजं[1] मुक्त्वा सुतां भिक्षाचराय किं दत्से?' । राजोचे–'त्वत्प्रभुर्भिल्लाय पुत्रीं दत्त्वा नाऽदुपत्!, अहं तु वर्णोत्तमाय ददद् दुष्यामीति को नयः ?' । दूतोऽभापत–'पद्मरथेन राज्ञा एतत् क्रोधवशात्कृतम्' । राजाऽरोचत–'भद्र ! मयाऽपि प्रतिज्ञातवशात् कृतम्' । दूतोऽब्रवीत्–'आन्तरेण विधिना किं बाह्यो विधिर्न बाध्यते ?, तद् राजसुतदानेन विप्रदानं बाध्यताम् । प्रौढि-स्वाजन्य-विक्रमैरयं नृपस्ते आन्तरः, तद् राजन् ! प्राध्वरे मार्गे कोऽयं तव मोहः ? । न्यकृतकन्दर्परूपः[2] स भूपसुतः क ?, नटविद्याद्यैश्च उदर-म्भरिरयं द्विजजातिः क ? । अपि च, बहूपकारिणेऽपि विप्राय गो-धनादिप्रदानतो दक्षिणैव योग्या, न तु क्वचिद् राजसुता । बहुभारवहस्याऽपि चक्रीवतो[3] विशेषतश्चारिरेव युक्ता, न तु कण्ठे मणिघण्टिका' । भूपः स्माह–"अकृते हि कार्ये योग्यतादिचिन्ता कार्या, परं कृते तु कार्ये का चिन्ता ?, सतां हि प्रतिपन्नस्य तस्मिन् कृते सति निर्वाहो भवति । यतः—

"दिग्गज-कूर्म-कुलाचल-फणिपतिविधृताऽपि चलति वसुधेयम् ।
प्रतिपन्नममलमनसां[4], न चलति पुंसां युगान्तेऽपि" ॥ १ ॥

ततो विदुषां सम्मतेऽस्मिन् कार्ये प्रपन्ने विचारान्तरं मा कार्षीः, दूत! कृत्यान्तरं कुरु" । दूतो व्याज-

---

१ राजाधिराजपुत्रम् । २ तिरस्कृतकामदेवसौन्दर्यः । ३ गर्दभस्य । ४ पवित्रचित्तानाम् ।

हार—'राजन् ! आर्यतौ स्वहितं विचारय, यतः प्रौढेन सह स्वाजन्यं सर्वकार्यकृद् भवति । यदि राजराजस्य सूनवे कनीं नो दास्यसि तदा बलात् तां गृह्णतस्तस्य को वारयिताऽस्ति ?। स पद्मरथो राजा स्वयं वीरोऽस्ति, यस्य सङ्ग्रामे प्रतिवीरास्तृणायन्ते । तस्य सैन्यसमुद्रे ससैन्यस्त्वं सक्थुमुष्टिवद् भविष्यसि, तदाक्रान्तस्य च तव न हि कश्चन शरणं भविता। तद् राजन् ! चेद् राज्यं जीवितं च स्पृहयालुरसि तदा तत्सूनवे कन्यां दत्त्वा शर्मणा तिष्ठ' । इति श्रुत्वा उज्जागरक्रोध-मानो भूपतिरभाषिष्ट—"दूत ! साधु त्वमेव सर्ववाग्मिनां धुरीणोऽसि यो ममापि पुर एवं वक्तुं धृष्टः प्रगल्भसे !। परं स्वस्वामिनः सूपदेशं किं न ददासि यो नास्तिकत्वेन क्षत्रकुलं मलिनयति ?। स ममाऽऽन्तरः कथं यः क्षत्रपङ्क्तेर्बहिष्कृतः ?। तेन समं हि कुलीनानां स्वाजन्यं ह्रिया आस्पदम् । अस्मिन् पापे सुखसम्पदां प्रौढिश्चिरं न स्थास्नुः । यतः—

"तरुवत् तटिनीतटोद्गतः, प्रमदाहृद्गतगुप्तमन्त्रवत् । जलवच्च मृदामभाजने, न चिरं तिष्ठति पापिषु रमा" ॥ १ ॥

अस्य शौर्यं तु स्वधाम्न्येव, न तु सङ्ग्रामे; तत्र त्वेष गलच्छक्तिः स्वयं तृणायिष्यते । तस्य सैन्याब्धौ ये ससैन्याः सक्थुवन्ति तेऽन्ये, अहं तु तस्य सैन्याम्बुधिं पातुं वडवानलः । ततः कः क्षत्रकुलोद्भवोऽस्मात् कौलाद् बिभेति ?, स चेद् राज्य-जीवितोद्विग्नस्तद् युधि सन्नह्यतु । अयं हि जामि-जामेययोरपमाननात् पुराऽपि मम निग्राह्य आसीत्, परं तत्र स्वाजन्यं विघ्नकृदभूत् । स हि ऐश्वर्यमदमत्तश्चेत् स्वयं तत्स्वाजन्यं विलुम्पति तत् क्षुधितोऽहं क्षैरेयी-घृत-शर्कराभोज्यं प्रापम् । तद् दूत ! द्रुतं याहि,

१ उत्तरकाले । २ मृदः—मृत्स्नाया आमे—अपक्वे भाजने । ३ लक्ष्मीः । ४ सक्थुवद् आचरन्ति । ५ भगिनी—भागिनेय्योः ।

मद्गिरा च स्वप्रभुमिति ब्रूयाः—कौलकुले कन्यां नैव दास्ये, अतो यथारुचि कुरु"। इति नृपे वादिनि ब्रह्मवैश्रवणः क्रुधाऽवक्—'अहो! राज्ञ उक्तौ रसो भटानां च क्षमाऽद्भुता यद् इत्युक्तेरपि अद्याऽपि दूतो न गलहस्त्यते!'। इति श्रुत्वा कोऽपि वीरो दूतं द्रुतं गले गृहीत्वा निष्काशयामास। दूतोऽपि हत्यपमानोत्थभृशक्रोधदुर्धरो द्रुतं गत्वा सर्वं पद्मरथस्य राज्ञोऽवदत्। अथ तस्याऽभिमानिनो राज्ञो दूतगिरा मध्वा-हुत्या हुतभुगिव क्रोधो भृशं दिदीपे, द्राक् च सैन्यं मेलयितुं रणभेरीमवीवदत्; यतः शूराः प्राणान् त्यजन्ति परमभिभवं न सहन्ते। पद्मरथो नृपः सुमुहूर्ते सर्वमङ्गलपूर्वकं गजारूढोऽत्युत्साहोच्छ्वसद्देहश्छत्र-चामरभासुरो वाद्यनादैः सैन्यजैश्च घोषैरम्बरं गर्जयन् शकुनैर्वार्यमाणोऽपि अधिकं प्रेर्यमाण इव प्रचुरचमूवृतः कमलप्रभं भूपालं जेतुकामः पद्मपुरान्निर्ययौ। तस्य चलतः कटके क्रमाद् दन्तिनां त्रिंशत्सहस्रा, रथा अपि तावन्तः, तुरङ्गाणां त्रिंशल्लक्षाः, पत्तीनां च त्रिंशत्कोटयः सर्वतोऽमिलन्। अस्मिन् नृपेन्द्रे चलति द्वैधा अपि भूभृतोऽकम्पन्त। अथ सर्वाभिसारेण तं समायान्तं निशम्य कमलप्रभनृपो मन्त्र्यादिभिः सह मन्त्रं चक्रे—'अहो! सहसा कोप-मानाभ्यां बलीयसा सार्धमस्माभिर्वैरं विदधे, तत् कथं निर्वाह्यम्?'। राज्ञा इत्युक्ते मन्त्र्यवदत्—'कृतम् अकृतं न हि स्यात्, क्षत्रकुलोद्भवैः पराभवो न हि सोढुं शक्यः। अपि च, दृष्टदोषेऽपि कौलकुले कन्या कथं दीयते? ततोऽत्र व्यतिकरे किमप्यविचारितं नास्ति। तद् वप्रः सज्जीक्रियते, कणादिभिश्च भ्रियते। सैन्यानि मेलयित्वा दुर्गस्थैरेव युध्यते'। नृपः स्माह—'एवं

१ अग्निरिव। २ सैन्ये। ३ पर्वताः पृथ्वीपतयश्च। ४ विचारम्।

भवतु, परं निर्गत्य योत्स्यते, शत्रुबलं च भङ्क्ष्यते, यतः साहसात् किं न सिध्यति ? । दुर्गेण तु युध्यमानं मां त्रपा भृशं बाधते, वीरमानी को द्विपा स्वदेशाक्रमणं सहेत ?' । अथ ब्रह्मवैश्रवण आख्यत्–'नराधिप ! सत्यमेतत् । शत्रुभयं दूरात्त्यज, दुर्गसज्जतां मा कार्षीः, शत्रुं जेतुं पुरात् सत्वरं निर्याहि । एकोऽहमेवाऽमुं जेष्यामि, सर्वैः समाहितैः स्थेयम् । यथा विस्मयानन्दमेदुरैर्भवदादिभिर्मम नाटकं दृष्टं तथैव निःशङ्कम् आयोधनं दृश्यम्' । एवं श्रुत्वा मुदितः सन् राजा निजं बलं मेलयित्वा, मङ्गलाचारान् विधाय, क्रमाद् देवगुरू स्तुत्वा, सर्वविघ्नहरं परमेष्ठिनमस्कारं स्मरन्, प्रौढदन्तीन्द्रमारूढश्छत्रवित्रासितातपश्चामरैर्वीज्यमानो वाद्यनादैश्चाऽभ्रं पूरयन् शकुनैर्वर्द्धितोत्साहः ससैन्यः पुरान्निर्ययौ । ब्रह्मवैश्रवणोऽपि विविधायुधदुर्धरः सङ्ग्रामोचितसामग्र्या रथारूढो राजानमन्वगात् । तं यान्तं कृतमङ्गला कमला प्रागेवोचे–'त्वं हि कोऽप्यलक्ष्योऽसि, अतो मम पतिं युद्धे मा वधीः' । तत्प्रियाऽप्यवदत्–'मम पिता संमुखीनोऽपि सापराधोऽपि न वध्यः' । सोऽपि तद्वचोऽमन्यत । अथ पद्मरथसैन्याद् अर्धसैन्योऽपि शूराग्रणीः कमलप्रभोऽभिद्रपि चचाल । स स्वच्छमानसः स्वदेशसीम्नि द्राग् गत्वा तस्थौ, यतः ससत्त्वोत्साहशक्तयो हि युद्धे न विलम्बन्ते । पद्मरथोऽपि राजा मार्गगाः सरः-कूप-सरिद्-वापीः शोषयन्नागात्, तदासन्ने च तस्थिवान् । सुभटाः प्राप्तं रणम् उत्सवाभं मन्यमाना उभयरोपि सैन्ययोर्निशि शस्त्रजागरिकां चक्रुः । अथ रणेक्षाकौतुकी सूर्यः पूर्वाचलमारोहद्, रवेर्भटानां च प्रतापो मिथः स्पर्धादवर्धत । लुब्धनृपस्य पुराद् लोका इव

चण्डरुचेश्चण्डकरैर्विलुप्तवसवस्तारा: काऽप्यगमन् । स्वकरैः पद्मिनीस्पर्शदोषाद् दोषाकरः पद्मिनीपतिना विलुप्तवसुम्लानतमोऽभवत् । कूजन्तश्चक्रा 'बान्धवं विना सुखं न' इति नैशस्वविप्रयोगोक्त्या भास्वते वदन्तीव भासन्ते । भास्वति प्राप्तोदये उत्तमनृपेन्द्रे सति प्रजासु अनीतिसमूहवद् अशेषमपि तमो द्राग् व्यलीयत, नयौघश्च प्रकाशः प्रसृतः । अथ द्वयोः सैन्ययोर्ढक्का हुडुक्का आनकाः शङ्खा भेरयः पटहाः खरमुख्यः काहलादीनि च रणतूर्याणि समन्ततो युगपत् प्रणेदुः, तन्नादप्रसरैस्त्रस्ताः फणिनो विलेष्वविशन्, वने सिंहा गुहासु दन्तिनश्च गह्वरेषु विविशुः, आकाशे प्रेत-भूत-राक्षसाद्याः कौतुकेक्षणलुब्धा मांसासिधिया च हर्षप्रनर्तिनोऽमिलन् । अथ तूर्योत्थनादैर्वर्द्धितोत्साह-साहसा भटाः सैन्यद्वयेऽपि रणकर्मणि आशु ससज्जुः । अश्व-रथ-पत्ती-भपङ्क्तयः स्वं स्वं स्थानममुञ्चन्त्यः परस्परमभिमुखं चलन्ति । द्वयोर्बलयोरग्रसैनिका मिथः शीघ्रममिलन् । सैन्यद्वयस्य हस्तिनो जङ्गमाः पर्वता इव, रथा भूस्पृग्विमानाभा, हयाश्च गरुडा इव मिथो मिलिताः, तेषु वीरौघाः पत्तयश्च परस्परं योद्धुं सिंहा इव उत्पतन्तः पतन्तश्च डुढौकिरे । तदा गजानां गर्जिभिः, तुरङ्गाणां हेषाभी, रथानां चीत्कृतैः, सुभटानां भुजास्फोटैः, वाद्यानां स्वनैः, अन्योन्यम् आस्फलदस्त्रौघनिर्घोषैः, भूतादिकाऽट्टहासैश्च नभः पुस्फोटेवाऽभवत् । शरीरगताऽस्राधैर्वीरबाणैर्विद्धा गजा असृग्निर्झरा जातपक्षाः शैला इव बभुः । वीरमुद्गरैराहताः केचिद् हस्तिनः पतन्तः सन्तः पुराजातपक्षच्छेदान् नगान् क्षणमन्वकार्षुः । दूरगतैर्महाभटबाणैर्विद्धा जातच्छिद्रा गजा मदस्य कृतनिर्या-

१ सूर्यस्य । २ तीव्रकिरणैः । ३ चन्द्रः । ४ सूर्येण । ५ सूर्य वन्धु च । ६ रात्रिनिर्वृत्तस्य स्ववियोगस्य वचनेन ।

णमार्गा इव बभुः । वक्षःस्थले पतता गजेन पत्या नवकामिनीव रुधिरस्वेदं दधती पृथ्वी अकम्पत । प्रतिवीरेषु जितेषु परे वीरा मुमुदिरे, अनिमिषाश्चैषां शीर्षेषु हर्षात् पुष्पाण्यवर्षिषुः । वीरैर्गदाभिः पर्पटा इव रथा अभज्यन्त, साश्वाश्च भटा बालक्रीडाकृता इव अपात्यन्त, पत्तयश्चश्वानरा इव भुवि अलोठ्यन्त, उत्तिष्ठन्तस्तु रथचक्र-गजांह्रिभिरपात्यन्त । वीरबाणैः सर्वतः प्रसृतैराकाशे मण्डपोऽभवत्, येन द्विषां रविकरेष्वपि प्रसरो वार्यते । सर्वतो ध्वान्ते जाते सति शस्त्रसङ्घर्षजाऽनलैरेव सर्वत उद्द्योत आसीत्, विशिष्य च वीरवक्त्रेषु उद्द्योतो बभूव । एवं योधैरतिभैरवे आयोधने क्रियमाणे कमलप्रभस्याऽग्रसैन्यमभज्यत । तदा स्वसैन्यमपसर्पदालोक्य क्रोधदुर्धरो धनुर्धरः कमलप्रभो युद्धे द्राग् यावदुत्तिष्ठति तावद् ब्रह्मवैश्रवणोऽवक्–'राजन् ! मयि सत्यपि तवाऽयं समरसंरम्भः कः ?' । एवं निषिध्य रणे उदस्थात् । स च रथमारूढश्चण्डदोर्दण्डविक्रमो विविधायुधबन्धुरः कुण्डलीकृतकोदण्डः सर्वतः शिरस्त्राणादिभेदिनो बाणान् धाराधरो धारा इव वर्षन् रिपून् निराधारान् अकार्षीत्, सायँस्त्राणान्[3] गजान् सप्रक्षरान् हयान् सकवचांश्चाऽपि पत्तीन् युगपत् सर्वतः शरैर्विव्याध । सोऽलक्षितागमैर्बाणैः कल्पान्ताऽनिलो द्रुमानिव युगपत्सहस्रशो गजानपीपतत् । सरथान् भटान् विरथान्, सगजान् अगजान्, सहयान् अहयान्, सजीवांश्च निर्जीवान् क्षणाच्चक्रे । स विविधायुधैर्गजान् अश्वान् योधांश्च कांस्कान् अशीर्षा-ऽंह्रि-करान् नाऽसृजत् ? । यथा स वैद्यकविद्याविद् पथ्यैर्जनान् अपूपुषत् तथा सङ्ग्रामे वैरिगणप्राणैः कृतान्तमपि अपूपुषत् । तस्मिन् युद्धे वीरैर्मुक्ताश्शस्त्र-

१ देवाः । २ मेघः । ३ अयस्त्राणैः सहितान् । ४ ब्रह्मवैश्रवणः । ५ यममपि ।

गदा-खड्ग-बाणालि-मुद्गरादयः शस्त्रगणाः सर्वतस्तूलायन्ते स्म । एवमौषधैरसाध्यं व्याधिमिव द्विपत्सैन्यं घ्नन्तं तं वीक्ष्य भटा युद्धं मुक्त्वाऽत्रसन् । केऽपि गह्वरेषु न्यलीयन्त, केचिज्जलाशये, केऽपि नारीरूपेणाऽस्थु, केचिद् भट्टादिरूपिणोऽभवन्, केऽपि मुखे तृणं दत्त्वा तस्थुः, केचिद् मुक्तायुधाः स्थिताः, केऽपि तमेव शरणं चक्रुः, केऽपि जिनक्रमौ शरणमकार्षुः, केचित्तु अस्त्राणि त्यक्त्वा श्राद्धदम्भत 'ॐ नमो अरिहंताणं' इत्युच्चैर्घोषघोषिणोऽक्षमालां जगृहुः। इति समस्तं स्वं बलं त्रस्तं विसंस्थुलं च वीक्ष्य क्रोधदुर्धरः दशरथो राजा युद्धे दधावे । स च ब्रह्मवैश्रवणं प्रोचे—'रे द्विजब्रुव ! द्विजत्वेनोपेक्षितोऽनाथामिव सेनां किं हंसि ? । अहमस्या नाथोऽस्मि, तत्त्वां सागसं सम्प्रति हन्मि, परं भिक्षाटाङ्गे पतन्तो मम शरा लजन्ते । साम्प्रतं सुभिक्षं वर्तते, प्रतिगृहं भूयः कणाः प्राप्यन्ते, तद् वटो ! इदं ताम्रपात्रं गृहाण, सुखं भिक्षामट । रे वटो ! परकार्येण मुधा किं म्रियसे ?, अहं च राजसु निन्दितां ब्रह्महत्यां कथं गृह्णामि ?' । इति तत्तिरस्कारेण क्रुद्धः कपटद्विजो जगाद—"पराक्रमे हि क्षत्रत्वं ब्राह्मणत्वं वा हेतुर्नास्ति । अथवा राजन् ! अहं यः स्मां स स्माम्, तव कुलेन किम् ? । भूप ! त्वदायत्ता निन्दा, मदायत्तश्च पराक्रमः । 'अनाथाम्' इत्यादि यत्त्वयोक्तं तत्त्वामपि लोप्स्यामि, तयाऽसुभिक्ष्य यमौकसि सुभिक्षं करिष्यामि । तव राज्यं ग्रहीष्यतो मम ताम्रपात्रेण कोऽर्थः ?, विधिस्त्वत्प्राणावधि सर्वभिक्षां मम दास्यति । पुत्रीवधाऽभीरौ कौले त्वयि ब्रह्महत्या भिये कुतः ?, अतो द्विजत्वेनोपेक्षा तु कातर्यस्यैव सूचिकाऽस्ति । सतां सर्वोऽप्युप-

१ तूलमिवाचरन्ति । २ सैन्यम् । ३ नीचब्राह्मण ! । ४ भिक्षाटस्य ब्राह्मणस्य शरीरे ।

क्रमः परकार्यार्थमेव स्यात्, अत्र रवि-चन्द्र-वृक्ष-मेघाद्या दृष्टान्ताः सुलभा वर्तन्ते। यत्त्वया पुत्र्या आन्ध्यं ददे तत्तव निश्चितं चित्तेप्सितम्, एवं च त्वं तुसविवेकदृक् कौलोऽपि अहो श्राद्धपुत्रीमीहसे !। चेत् क्षत्रियोऽसि तदात्मीयं पौरुषं युधा दर्शय, उत्तमा हि स्वान् गुणान् फलेनैव ब्रुवते, न तु गिरा"। इति तद्वीवृताहुत्या उद्दीप्तक्रोधानलः कुण्डलीकृतकार्मुको नृपो युद्धे बाढमढौकत, ब्रह्मवैश्रवणोपरि च मर्म-वर्मभिदः शतशो बाणानमुचत्। सोऽपि द्विजस्तत्काण्डान् अकाण्ड एव स्वकाण्डैरखण्डयत्। अथ स्वस्वामिना दत्तावष्टम्भा नृपसैनिकाः सन्नह्य युगपत् कोटिशः पुनर्युद्धेऽढौकन्त, परमेकोऽपि ब्राह्मणस्तावद्रूप इव युगपत्कोटिशो बाणैर्मृगान् व्याध इव विव्याध। असौ बाणान् गृह्णन् मुञ्चंश्च कैरपि न लक्ष्यते, परं तैस्तु आत्मानं द्राग् विद्धमेव भटा लक्ष्यन्ति। इत्यद्भुतां तस्य शक्तिं वीक्ष्य सर्वैर्विसिस्मिये, 'अहो ! अस्य भाग्यम्, अहो बलम् !' इति च तुष्टुवे। ब्रह्मवैश्रवणेन निषिद्धा अपि कमलप्रभभूपसैन्यास्तद्युद्धोत्साहवर्धनाद् युद्धेऽलगन्। एवं कुमार-नृपयोरुभयोश्च बलयोः शूरपराक्रमहेमकषोपलो रणः प्रवृत्ते। भटैर्भटानां छिन्नानि शीर्षाणि आकाशे तथाऽभ्रमन् यथा तदाकाशमुत्पातभयङ्करं राहुमयं जज्ञे। दलद्वयाद् भग्नभल्ल-चक्र-गदा-शूला-ऽसि-क्षुद्गराः खे नु वातोद्भूतवनात् खगा इव भ्रेमुः। 'अरे ! शस्त्रं विमुच्य याहि, भीरुकेऽहं न प्रहरामि, चेत् क्षत्रत्वमस्ति तत्तिष्ठ' 'वाचाट ! धिक्त्वाम्, नंष्टुमिच्छसि' 'रे ! नश्य नश्य, कृपालुरहं बालं किं हन्मि ?' 'हे वीर ! किं सुप्तोऽसि ?, तवाऽयं रिपुः प्रगल्भते' 'साधु वीर ! त्वमेवैको वीरोऽसि यत् शरैर्विद्धोऽप्येवं युध्यसे' 'उत्तिष्ठ उत्तिष्ठ, किं मग्नः ?' 'नष्टो नष्टः' 'हतो हतः' इति रणार्थिनां मिथो नामग्रा-

हृणाय्यमानानां गर्जतां भटानां वाचोऽभवन्। अथ कुमारश्चिरं युद्ध्वा शरै राज्ञो धनुश्छत्रं चामरश्रेणिं शिरस्त्राणं वर्म चाऽच्छिदत्, पद्मरथोऽपि राजाऽऽशु अभिनवं धनुर्गृहीत्वा शरैरस्य वटोश्चापं चिच्छेद। तदा स कोपोत्कटो गदया नृपस्य रथमभाङ्क्षीत्, राजाऽपि मुद्गरेणाऽस्य रथं खण्डशो व्यधात्, गदां चाऽचूर्णयत्। विप्र उत्प्लुत्योत्प्लुत्य असिना राज्ञश्चापं द्विधाऽकरोत्, राज्ञाऽपि तस्मै खड्गघातो ददे, विप्रेण तु सोऽरक्षि। ततः कोपोत्कटो द्विजो घातं दातुं यावदुद्यतस्तावन्नृपः खड्गेन तत्खड्गं तथाऽऽजघान यथा द्वावप्यन्योन्यमास्फाल्य कणशोऽजायेताम्। ततोऽमर्षाधिकक्रोधात् कुमारोऽधरं दशन् मल्लयुद्धाय वीरमानिनं भूपमाह्वास्त, सोऽपि परिकरं बद्ध्वा तद्युद्धार्थमुपस्थितः, यतो युद्धे आहूतः सिंहः किम् अलसस्थितिः स्यात्?। तौ द्वावपि भटौ भुजास्फोटैर्नभः स्फोटयन्तौ, पादाघातैर्भुवं कम्पयन्तौ, कुक्कुटाविव उत्पतन्तौ पतन्तौ च, गर्जन्तौ, मिथश्च तर्जयन्तौ कस्याऽऽश्चर्याय न बभूवतुः?। मिथोऽलातभ्रमम् अनुभ्रामयन्तौ तौ महाभटौ पृथ्व्यां लुठन्तौ उत्थितौ चाऽनन्तरौ अदृश्येताम्। पृथ्व्यां संयुक्त-वियुक्तैः परस्परमुपर्यधश्च पतितौ आकाशे च क्षिप्तौ तौ कर्तृ-कर्मणी न ज्ञातौ। महौजस्कौ महावीरौ अन्योन्यं जयकाङ्क्षिणौ तौ एवं चिरमयुध्येताम्। ततो भूपो भृशं श्रान्तिमाप, परं मायाविप्रस्तु अविश्रमरणेऽपि श्रमं नाऽऽप, यतो गजेन सह युद्ध्वाऽपि सिंहो जातु न श्राम्यति। अथाऽवसरं प्राप्य विप्ररूपभृद् वीरः कुमारः पद्मरथभूपम् उरसि तथा मुष्टिनाऽताडयद् यथा भ्रान्तनेत्रोऽसौ मुखेन रुधिरं वमन् मूर्च्छितो वातोद्धूतजरद्वृक्षवत् पृथ्व्यामपतत्। तं तथा पतितं वीक्ष्य सज्जीकर्तुं जिघृक्षवस्तस्य लक्षशो भक्ता भटा अधावन्त। तदा व्रजवै-

श्रवणो धनुर्गृहीत्वाऽऽस्फाल्य च तेषु शरान् सर्वतोऽवर्षत्, सिंहवच्चाऽगर्जत् । तेषां चक्र-शक्ति-त्रिशूल-गदा-भल्लादिकान्यायुधानि भित्त्वा मृगानिव तान् विव्याध । सर्वे तद्बाणैर्व्याकुलिता जीविताकर्षणोद्यताश्च किञ्चिदायुधं ग्रहीतुं मोक्तुं च न शेकुः । एवं तेन अरिक्षयकाले इवाऽऽहवे क्रियमाणे स्वस्वामिनं नेतुमन्प्रभविष्णुषु वीरेषु रुद्धेषु सत्सु, कमलप्रभनृपतिर्भ्रूसंज्ञाप्रेरितैर्भटैः पद्मरथभूपं बद्ध्वाऽऽनाय्य च स्वरथेऽक्षेप्सीत् । अथ तस्य भटास्तं गृहीतं वीक्ष्य स्वाम्याशोज्झिताः 'कस्य कार्याय मुधा म्रियामहे ?' इति व्यचिन्तयन् । ततो रणं मुक्त्वा जीवितार्थिनस्तेऽनन्यगतिकास्तमेव द्विजेन्द्रं शरणं भेजुः । कुमारोऽपि तांस्तथा दृष्ट्वा 'मा भैष्ट, युष्माकमहं त्रायकोऽस्मि' इति हस्तोत्क्षेपपूर्वकं प्रसन्नदृग् आश्वासयामास । ततो जयजयारावमुखराः सुरास्तच्छीर्षे कौसुमीं वृष्टिं व्यधुः, आकाशे च दुन्दुभयो नेदुः । कमलप्रभशिबिरे जयतूर्याण्यवाद्यन्त, महाभटैश्च सर्वतो जयसंराविणं चक्रे । यतः—

"यस्याऽस्ति देवो हृदि मोहजेता, गुरुश्च पञ्चेन्द्रियवैरिजैत्रः ।
धर्मश्च दुष्कर्मजयैकतानः, स एव युद्धेऽपि जयं लभेत ॥ १ ॥
भक्तिर्न यस्याऽर्हति सद्गुरौ च, जिनोक्तधर्मे च रुचिर्न काचित् ।
भवे भवे सर्वपराभवाणां, सुदुःसहानां भवनं भवेत् सः" ॥ २ ॥

अथ कुमारः श्वश्र्वा वध्वाश्च गिरः संस्मरन् औषध्या पद्मरथनृपं जवात् सज्जयाञ्चक्रे, 'नास्तिकतात्यागं

१ युद्धे । २ असमर्थेषु । ३ कुसुमनिर्वृत्ताम् । ४ विजयोद्घोषणाम् । ५ मन्दिरम्—गृहम् ।

विना न मोक्ष्यामि' इति प्रतिज्ञया च तं भूपतिं निगडितं कृत्वा पञ्जरेऽक्षिपत्। रिपोः सैन्ये स्वसैन्ये च शस्त्रघातव्यथार्दितान् सर्वान् सैन्यान् औषधीजलसेकतोऽसज्जयत्। ततस्ते सर्वे मुदितास्तं द्विजोत्तमं तुष्टुवुः—'अहो! सन्तः स्व-पराऽविशेषेण उपकारकाः स्युः'। अथ कमलप्रभो भूपतिरानन्दमयीभूय कुमारं द्विजमालिङ्ग्य वन्दित्वा तोष्टवीति स्म—'अहो! शौर्यम्, अहो! धैर्यम्, अहो! परोपकारिता, अहो! ईदृग् गभीरिमा त्वत्तोऽन्यत्र क्वचिद् नेक्ष्यते। मन्येऽहं त्रैलोक्येऽप्रतिमत्वतो विधेर्जगन्ति सृजतो घुणाक्षरन्यायाद् एकैवैषा सृष्टिरभवत्। हे वत्स! पूर्वपुण्यानुभावतस्त्वत्सङ्गमेन कृतार्थाः स्मः'। इति स्तुत्वा तं गजमारोहयत्, भूपोऽपि गजमारूढः सन् वाद्यनादैर्दिशो नादयन् ससैन्यस्तेन सह पुरं प्रति प्राचलत्। पञ्चरथभूपतेस्तत्सैन्यं सहाऽऽकार्य द्विजः क्वचित् सुस्थाने पुरासत्तौ अस्थापयत्, तस्माच्च कांश्चिद् मन्त्रि-सेनेश्वरादिकान् सारान् नरान् विपुलाशयः कुमारस्तैः स्वसेवां कारयन् सहाऽऽकार्षीत्। कमलप्रभपृथ्वीपतिर्द्विजराजसङ्गतः सच्छत्र-चामरविराजितः पदे पदे तोरणधोरणीधरं, सुमौक्तिकस्वस्तिकपङ्क्तिभासुरं, ध्वजश्रेणिभ्राजितगृहा-ऽऽपणं, नटीपेटकनाट्यसङ्कुटं, वृद्धाङ्गनाकृतनैकमङ्गल स्वपुरमादरान्वितोऽविशत्, आत्मधाम चाऽविशत्। नृपेण विसृष्टा मन्त्रि-सामन्ताद्या निजं निजं धाम जग्मुः। द्विजेन्द्रोऽपि सपरिच्छदो गृहेऽगात्। सर्वेऽपि स्नान-भोजनादीनि कर्माणि चक्रिरे, रणकथादिभिश्च तं वासरं गमयामासुः। राजवर्ग्याः पौराश्च विचित्रालापमनोज्ञा ब्रह्मवैश्रवणस्य विविधान् गुणान् स्तुवन्तस्तिष्ठन्ति। अथ ब्रह्मवैश्रवणादेशात् पञ्जरगः पञ्चरथो राजा रथे न्यस्य रक्षकैः सहैवाऽऽनायि। तैर्यथादेशं स्थापितो भोजितश्च स विप्रपराक्रम-

चमत्कृतः स्वं कर्म शोचन् तिष्ठति । अथ प्रातः सदस्याऽऽकीर्णसंसदि द्विजेन्द्रमर्धासनेऽध्यास्य भूपतिर्हैमं सिंहासनमध्यास्त । ततः पुरुषैः पञ्जरथमानाय्य पञ्जराच्च निष्काश्य ब्रह्मकुमारस्तं प्रति व्याहरत्–'अरे ! सुताविडम्बनापापस्य फलमैक्षिष्ठाः ?, रे अधम ! पुनरपि पश्य; यत इयताऽपि तस्याऽन्तो न स्यात्' । इत्युक्त्वा विप्रो नैपुण्यात् तस्य शीर्षे औषधीं दत्त्वा तं मर्कटं चक्रे, सभां चाऽऽश्चर्यमयीं चकार । ततो लौहीं शृङ्खलामानाय्य तस्य गलेऽचिक्षिपत्, नरांश्च जगाद–'रे रे ! एनं दुष्टं नगरान्तः प्रत्यट्टं प्रतिगेहादि प्रतित्रिकं प्रतिचतुष्कं च कशाघातैर्दृढं ताडं ताडं भ्रमयत' । इति विप्रकुमारस्य प्रोक्तं श्रुत्वा नरास्तथा कर्तुं प्रपद्य यावता तं धृत्वा यान्ति तावत् कमला पत्युर्विडम्बनां दृष्ट्वा दुःखिता रुदती भूभुजं स्माह–'हे अग्रज ! इदं कर्म वारय । एवं कृते तु तव मम च जने लज्जाऽपवादश्च स्यात्, यतः कृतापराधोऽपि पतिः पतिव्रताभिराराध्यः' । ततः सा ब्रह्मवैश्रवणं प्रोचे–'वत्स ! मयि कृपां कृत्वा मम पतिं मुञ्च, मातुर्वचनं वृथा मा कृथाः' । राजाऽपि जगौ–'ब्रह्मन् ! अस्मिन् दीने कृपणे प्रणते च क्रोधं नाऽर्हसि, यतः सतां क्रुधः प्रणामान्ताः स्युः । तस्मादिमं मुञ्च, स्वभावस्थं च कुरु । तव कोपशक्तिमद्राक्षम, अधुना तु प्रसादं दर्शय' । विप्रकुमारः प्रोचे–'एनं ततो मुञ्चामि यदि नास्तिकतावादं त्यक्त्वा जैनधर्मं प्रपद्यते' । ततो भूपेन पृष्टः–'भो ! एतदुक्तं करिष्यसि ?' । मर्कटश्चेष्टाभिः स्माह–'सर्वमप्यदः करिष्ये' । ततः कृपालुतां प्राप्तो ब्रह्मवैश्रवण औषध्या तं स्वभावस्थमकरोत्, निगडाद्यपि चाऽभञ्जयत् । ततश्चाऽऽश्वासनापूर्वं तमासने उपावीविशत् । तथा दृष्ट्वा कमलप्रभभूपादयश्चित्रानन्दमया बभूवुः, गतक्रुधश्च ते स्वाजन्यात्

श्रीडिमराज पद्मरथं प्रणेमुः, यतः स्वाधीने हि वैरित्वं न भवति । ततो द्विजेनाकारिता मन्त्रि-सेनाधिपाद्याः स्वामिनं मुक्तं मत्वा भृशं मुदिताः प्रणेमुः । अथ पद्मरथो राजा लज्जानम्राननो दुःखाश्रुविप्लुताक्षस्तान् नृपादीन् गद्गदाक्षरमब्रवीत्—"अहं महापापकलङ्कितः प्रणामयोग्यो नाऽस्मि । यद् अदृष्टाश्रुतपूर्वं गर्हितं कर्म व्यदधां तत्प्रभावेण तादृशं दुःखमत्रैवाऽलभे, उग्रपुण्य-पापयोः फलमत्रैव भवति एतत्सत्यमभूत् । हा ! या पुत्री भिल्लाय दत्ता दुश्चूर्णेन चाऽन्धिता सा मृता वा जीवन्ती कुत्र कयाऽवस्थयाऽस्ति ?। पुत्रीहत्याभवं पापं मां दुःखाकरोति, वियोगार्ता रुष्टा तदम्बाऽप्यगाद् इत्यपि मे महाविपद् अभवत् । सौजन्या समस्तानपि वीरान् तृणायाऽपि न मन्यमानोऽहं यद् भटकोटिसमक्षं द्राग् वटुनाऽपि जितः !, मम काचिद् मर्कटत्वादिदुर्दशां प्रापितः !, तत्पराभवदुःखान्तं गन्तुं कः पुमान् क्षमते ?। तद् यस्मात्तस्मादुपायाद् मम मरणमेव श्रेयः, ततो वह्नौ प्रवेक्ष्यामि, रे भटाः ! तं सज्जीकुरुत" । इति सभगिनीपतेः पद्मरथस्य गिरः श्रुत्वा कमलप्रभो भूपतिस्तस्य खेदभिदेऽवादीत्—"हे नरोत्तम ! 'वटुनाऽपि जितोऽस्मि' इति मा म्लानो भूः, यतः पराभवादिदुःखानि किं भरतादयोऽपि नाऽऽपुः ?। अपि च, एनं वटुमात्रं न चिन्त्यः, ईदृशैश्चेष्टितैर्ध्रुवं कोऽपि दिव्यः पुमान् ज्ञेयः, अवसरे त्विदमपि ज्ञास्यते" । अथ मायाद्विजोऽवादीत्–'एतत्पापफलं कियद् यत्पापं मनो-वाग्गोचरातीतं नारकं दुःखं दत्ते?। ततो राजन् ! पापमूलं नास्तिकतामहं त्यक्त्वा लोकद्वयसुखावहं जैनधर्मं प्रपद्यस्व । नरोत्तम ! एवं पापस्य फलं दृष्टवानसि, अथ यतः सर्वदुःखक्षयो भवति तानि पुण्यान्याद्रियस्व । सर्वं निजं राज्यं मुञ्च, रुष्टां प्रियामनुनय,

आर्हताच्च धर्माद् मानुजं जनुः कृतार्थं कुरुष्व'। नृपः स्माह–'किञ्चित्तव वाण्या समाहितोऽहं तनयाशुद्धिं विज्ञाय सर्वमप्यदः करिष्ये'। अथ तस्य मायावटोः प्रिया भर्तुरादेशं याचित्वा तत्रागत्य व्रीडामन्मनया गिरा भूपमवदत्––"नृप! किं तव स्तवेन 'तुह संकरु' इत्यादिसमस्यापूरिका जयसुन्दरी सत्या भवेत्?, किं वा 'जिणवर जसु हीयडे' इत्यादिधर्ममाहात्म्यवादतः समस्यापूरिका विजयसुन्दरी सत्यगीः स्यात्?"। तद्गिरा भूपतिर्भल्लया मर्मण्याविद्ध इव संजातः, स्वस्य चाऽकृत्यसंस्मृत्या लज्जा-दुःखनतवदनो दध्यौ–'एतदियं कथं वेत्ति?, किं ज्ञानिनो मुखात् श्रुतं भविष्यति?, किं वा सैवैषा रूपान्तरस्था विजयसुन्दरी?। अथवा कमलामुखाद् अनया श्रुतं भविष्यति!, यत एषा तस्याः प्रीतिपात्रमासन्नवर्तिनी वर्तते'। इति चिन्तयन् राजाऽवादीत्–'यदि मया सर्वाः प्रजाः सुखिताः स्युस्तदा अस्मात्सङ्कटाद् अहमात्मानमेव किं नाऽरक्षम्?। ततः स्वपुण्यैरेव सर्वेऽपि ब्रह्मवैश्रवणादिवत् सुखात्मका भवन्ति, मदादिवच्च निजैः पापैर्दुःखिताः स्युः'। साऽवोचत्–'भूप! यद्येवं तत् पुण्यं किं न करोषि?। यदि च सुताऽऽर्त्तिर्विज्ञाय भवति तद् एनं मम पतिं पृच्छ, अयं हि सर्वशास्त्रकलाविज्ञो निमित्तादिबलैरतीता-ऽनागतं वेत्ति, समस्तं च यथार्थं वक्ति'। ततः पद्मरथो राजा तं पप्रच्छ–'हे ब्रह्मन्! स्फुटं वद, मम सुता कदा कया चाऽवस्थया मिलिष्यति?'। सोऽपि लग्नादिन्यासविस्तरैराडम्बरं कृत्वा जगौ–'सा त्वां द्राक् सुखाद् मेलित्री, मा क्लेशिष्ठाः। परं राजन्! इमां मां च किञ्चनोपलक्षयसि?'। भूपः स्माह–'त्वया स्वगुणैरात्मा सूपलक्ष्यो व्यधायि, परं युवयोरन्वया-ऽऽह्वादिकमधिकं तु न जाने'। ततः स कुमारो विजयसुन्दर्या विवाहे यादृशं

निजं भैलं रूपमासीत् तादृगेवौषध्या न्यधात्, विजयसुन्दर्याः पुनः स्वाभाविकं रूपं चकार। तदा लोका जगदुः—'अहो ! भूपेन ईदृक्कुरूपायाऽस्मै ईदृग्गुणा सुता कथं ददे ?, विश्वविडम्बनौ क्रोध-मानौ धिक्। यथेयं विजयसुन्दरी रूपवतीषु सीमा तथाऽयं भिल्लः कुरूपेषु सीमा'। अथ विजयसुन्दरी जगाद—'भूप ! सम्प्रति मामुपलक्षयसि ?'। सोऽपि लज्जानम्राननो व्याहार्षीत्—'उपलक्षयामि, दुर्बुद्धिसीम्नो मम विजयसुन्दरी सुताऽसि। तादृक् कुकर्म कृत्वाऽऽस्यं दर्शयितुं न क्षमे'। ततः सा विस्मया-ऽऽनन्द-खेद-चिन्तादिभिर्नानारसैर्व्याकुलस्य पितुः पदोर्निपत्य जगौ—"हे नृपोत्तंस ! 'मयेयं तनया क्रुधा विडम्बिता' इति त्वं मा खेदिष्ठाः, यतस्तव क्रोधोऽपि मम अद्भुतर्द्धयेऽभूत्। यदि तदा त्वं क्रोधं नाऽकरिष्यस्ततो मम ईदृक्पतिः कथमभविष्यत् ?, यस्य शौर्यानुभवस्तवाऽभवत्। यथा स्वर्णभूमिप्रभवं रजोऽपि अग्नियोगात् स्वर्णात्मतां याति एवं पितुस्तव रोषोऽपि तादृक्पतियोगतो मम हितायैव बभूव"। ततो नृपस्तद्वचसा हृष्टः स्नेहात्तामालिङ्ग्य अङ्के न्यवीविशत्, नूनं यस्तातः स तात एव। तथा दृष्ट्वा भिल्लोऽभ्यधात्—'राजन् ! त्वया स्वपुत्र्युपलक्षिता, परं किञ्चिद् मामप्युपलक्षयसे ?'। नृपोऽवदत्—'जिनेन्द्रोदितवस्तुवत् त्वं लक्ष्याऽलक्ष्यस्वरूपोऽसि, नानारूप-कलादिभिश्च विश्वं मोहयसे, तदेवं सर्वथा त्वामुपलक्षयितुं कः क्षमः स्यात् ?। यत्र धियां प्रवेशो न भवति तत्र सुधीरप्यसुधीः स्यात्। तुभ्यं यादृशा रूपेण कन्याऽदायि तद् अज्ञासिषम्, परं तव स्वाभाविकं रूपं स्थान-वंशा-ऽऽह्वयादि च को वेत्ति ?'। ततः कमलप्रभभूपाद्याः परस्परमुपकर्णं जगुः—'यथाऽस्य एतद् भैलं कृत्रिमं रूपमवेक्ष्यते तथैव वैप्रमपि रूपं कृत्रिमं मन्यामहे, प्रणयिन्या

अपि एवमेव सम्भवति; यत एभिश्चरित्रैर्लक्षणैश्च विप्रः कथं भवेत् ?'। ततः पद्मरथः स्माह–'भद्र ! यथा भैलं रूपमकृथास्तद्वत् स्वाभाविकं रूपं कुरु, कियत्कालमस्मान् मोहयिष्यसि ?' । मायाभिल्लोऽवदत्–"यदा त्वया नृपेणेयं निजपुत्री दुश्चूर्णेनाऽन्धिता मया च सज्जनेत्रा कृता तदा त्वदनौचित्यजेन कोपेन मया प्रतिज्ञा कृताऽऽसीत्–'यावदस्य कौलस्य भृशं शिक्षां बोधं च नो कुर्वे तावत् स्वस्वरूपेण कुत्रचिदपि नाऽऽविर्भविष्यामि' । अहो ! यद् विमोहेन पूज्या दुःखितास्तत् क्षन्तव्यम् । अथाऽहं पूर्णप्रतिज्ञोऽस्मि, ततः प्रादुर्भवामि"। इत्युक्त्वा औषध्या स स्वं स्वाभाविकं रूपं व्यधात्, परं स्वस्य परस्य च नानारूपाणि कुर्वतोऽस्य हस्तलाघवनैपुण्याद् औषधी कैश्चिद् नाऽलक्षि । अथ भूपादयस्तस्य जितेन्द्र-स्मरं दिव्यं रूपं वीक्ष्य चित्रानन्दाऽद्वयात्मका अन्योन्यं व्याहार्षुः–'अहो ! गुण-लक्षण-विक्रमैरदो रूपं संवादि, चिरतो हि विधिरनुरूपविधौ न विश्राम्यति । नाटके यो नृपनन्दनः प्रागनेनाऽभिनिन्ये स एवाऽयं दिव्यरूपो नानाप्रौढाऽवदातभूः' । एवं सर्वे भूपद्वयादयस्तं यावत् स्तुवन्ति तावत् कमलसुन्दरी तथा तद्वृत्तान्तं श्रुत्वा हर्षोच्छ्रसद्देहा तत्र प्राप्ता, तद्रूपमोहिता च विस्मृतलज्जा तत्कण्ठे वरमालामक्षिपत् । तदा सर्वे सभासदः 'अहो ! साधु वृतम्' इति स्माहुः, मङ्गलतूर्याणि नेदुः, वन्दिनश्च भद्राणि पेठुः । हर्षकोलाहलं श्रुत्वा तत्स्वरूपं च बुद्ध्वा प्रमोदोच्छ्रसत्तनुः कमला राज्ञी त्वरितं तत्राऽऽगात् । अम्बां वीक्ष्य विजयसुन्दरी तस्याः पादयोरपतत् । साऽपि तामालिङ्ग्य कण्ठे लग्ना रोदिति स–'हे सुते ! हार्देन स्नेहोल्लासेन किञ्चिद् ज्ञाताऽसि, परं रूपान्तराऽभ्रेण च्छन्ना चन्द्रकान्तिवद् नोपालक्षि। अद्याऽस्माकं जन्म सफलं, सर्वे मनोरथाः

पूर्णाः, त्वत्सङ्गमसुखाद्भयाच्च विपदो दूरं प्रणेशुः' । कुमारोऽपि श्वश्रूं प्राणमत्, साऽप्याशीःशतं ददौ, मङ्गलानि च कुर्वाणा स्वसंवेद्यां मुदं दधौ । अथ सा कमला कुमारानुज्ञया पुत्र्या सह गृहेऽगमत्, स्वजनानां च तां प्रदर्श्य मुदद्वयं ससर्ज । भवद्वर्धापनोत्सवः कमलप्रभभूपोऽपि सर्वतो नानामहोत्सवमयं पुरमचीकरत् । कुमारः श्वशुरं नत्वा तं च भूपतिं क्षमयित्वा विशेषेण तस्य प्रबोधार्थमेवमुपादिशत्—"त्वं राजा अन्ये च सेवकाः, त्वं दाता अपरे च याचकाः, त्वं भर्ता अन्ये च भर्तव्याः, अदः सर्वं पुण्यफलम् । यतः—

"स्फुरन्ति वेश्मन्यभितः श्रियोऽर्थिता, मुखे गिरः श्लाघ्यतमा धियो हृदि ।
तनौ च सौभाग्यरमाऽंसयोर्बलं, यशांसि दिक्ष्वार्हतधर्मतः सताम् ॥ १ ॥
वसूनि पृथ्व्यः खनयो मणीन् द्रुमाः, फलानि मुक्ताः किल ताम्रपर्णिका ।
लताः प्रसूनानि गजांश्च विन्ध्यभूः, पुण्यात्मनां बिभ्रति भुक्तयेऽङ्गिनाम्" ॥ २ ॥

तथा शिल्पिनां शिल्पानि, कर्मकारिणां विशिष्टकर्माणि, कलावतां च सुशिक्षिताः कला, एतानि श्रेयस्विनामेव सुखोपभुक्तये भवन्ति । तथा नीचकुले जन्म, अपारदरिद्रभावो, दौर्भाग्यं, रोगसन्ततिः, कुकुटुम्बयोगो, निष्ठुरा वाग्, वध-पराभव-दुर्यशांसि, स्वेष्टैश्च वियोगः, एतानि पापतरोः फलानि ज्ञेयानि । अपि च, हे राजन् ! त्वमधीतशास्त्रोऽसि, सुकुलोद्भवोऽसि, विवेकधुर्योऽसि, विपुलाशयोऽसि, तत इहाऽमुत्र च हिताद् धर्मतो मानुषं जन्म कृतार्थं कुरु । तवेदं साक्षात्पुण्यफलं पुत्र्या दर्शितं, यत आपदि

क्षिप्यमाणाऽपि "सा सम्पदि आरुह्यते स्म । ततो दृष्टफले धर्मे कः सुधीर्मन्दायते ?" । इति तदुक्तं श्रुत्वा पद्मरथो राजाऽब्रवीत्–'कुमार ! प्रतिबुद्धोऽसि, शाश्वतश्च धर्मं जाने, गुरुपार्श्वे धर्मं ग्रहीष्ये, अत्र संशयं मा कृथाः' । कुमारः स्माह–'यत् स्वल्पादपि अबुध्यथास्तद् धन्योऽसि, दुर्धियो हि आपद्यपि चिरेणाऽपि न बुध्यन्ते' । ततः कमलप्रभो भूपो भगिनीपतिं नृपतिं हर्ष-स्नेहाभ्यां महता गौरवेण स्नान-भोजनादि व्यदीधपत्, कुमारानुमतश्चैप पद्मरथं भूपं वस्त्रा-ऽलङ्कारादिप्रदानतो बहुधा सत्कृत्य च्छत्राद्यलङ्कृतं तं सगौरवं तत्सैन्यान्तः प्रैपीत् । ततोऽभ्यर्थ्य मानयित्वा च सुमुहूर्ते कमलप्रभो भूपेन्द्रो हर्षोत्सवाढ्यं कुर्वन् कुमारेण तदेकान्तानुरागिणीं कमलसुन्दरीं भोगवतीराज्या कृतमङ्गलैः पर्यणीनयत् । नृपः कुमाराय बलात्काराद् देशं ददौ, सोऽपि तं देशं नव्यप्रियासाच्चक्रे, गजादि च नैच्छत् । अयं प्राग्वद् नित्यागमै रत्नैर्दानादिसुकृतं सृजन् नृपदत्ते आवासे प्रियाभ्यां सह विलसति । पद्मरथोऽपि नृपो जामातुः सुतायाश्च विवाहसमयोचितां प्रतिपत्तिं व्यधात्, जामात्रे चैकं देशं ददौ । कुमारोऽपि नृपखेदभिया तमग्रहीत्, पूर्वप्रेयसीसाच्च चकार । अथ भ्रात्रा सस्नेहं सत्कृताऽनुमता च कमला वधू-वरं सम्मान्य शिक्षयित्वा आपृच्छ्य च, प्रपन्नाऽऽस्तिक्येन स्निग्धचेतसा भर्त्रा भृशमनुनीता मुदिता सती स्वपतिं पद्मरथमनुससार । कमलप्रभभूपाल-कुमाराभ्यामर्चितः पद्मरथो नृपः ससैन्यः सप्रियश्च निजं पुरं प्राप । अवसरे प्राप्तस्य सद्गुरोरुपदेशेन श्राद्धधर्मं शुद्धभावतः प्रपेदे, तं च प्राप्तं धर्मं चिन्तामणिमिव दुर्लभं मन्यमानः शुद्धधीः मनो-वाक्-कायैः सम्यगनुतिष्ठति । नरकप्रदनास्तिक्यत्यागात् सद्धर्मलाभाच्च नृपस्तां वन्ध्याद्यापदं तत्त्वतः

सम्पदं लेभे । रति-प्रीतिभ्यां काम इव स्नेह-यौवनरम्याभ्यां प्रियाभ्यां सह कुमारराड् क्रीडति । अथ 'अस्य मौलाभिधानं कोऽपि न वेत्ति, स्वयं च न वक्ति, ततोऽस्य गौणाख्या ख्याप्यते' इति विचारयन्तः कमलप्रभराजादयोऽस्य अत्युत्कृष्टतमान् दानलीला-धनैश्वर्य-बल-रूप-कलागुणान् क्षात्रं च तेजः प्रेक्ष्य विस्मिताः 'क्षत्रवैश्रवण' इत्याह्वामवदन् । कुमारप्रभावतः समन्ततो राज्यं ववृधे । तस्य अतुल्यैः परोपकारादिगुणैर्बहुः परिच्छदः सुभक्तो बभूव, अनेके स्निग्धाः सुहृदो बभूवुः, तत्र च सर्वे जना अन्वरज्यन्त । तस्य कुमारस्य सुकृतानुभावाद् गृहे लक्ष्मीः, सर्वजनाऽऽननेषु गुणस्तुतिः, दिक्षु यशः, समरे च जयश्रीः स्फातिं लेभे ।

॥ इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे गगनगतिपल्यङ्कनलसकलत्रकमलपुरप्राप्ति-कमलप्रभभूपपुत्राद्युपकार-स्वपत्नीविजयसुन्दरीपितृपभरथजयपूर्वकप्रतिबोध-कमलसुदरीपरिणयनवर्णनो नाम नवमः सर्गः ॥

## अथ दशमः सर्गः ।

पूर्वे येन प्रबोधिताः कनीवरा अष्टौ सुरूपा भवे,
वैराग्याञ्चितचेतसा वरतरैर्दृष्टान्तदानादिभिः ।

सूनुः पञ्चमतीर्थपश्च सुमतिर्मेघस्य राज्ञः प्रभुः,
सोऽस्तु भव्यजनप्रबोधकुशलो भव्यात्मनः श्रेयसे ॥ १ ॥

अथाऽन्यदा कुमारश्चैत्रमासे सप्रिय उद्याने मित्रैः सहाऽगात्, यथारुचि च चिक्रीड। तत्र स मानातीतविमानर्द्ध्या देवानिव गगने गच्छतो बहून् विद्याधरान् दृष्टवान्। 'दिव्यर्द्धय एते क यान्ति?' इति यावदयं चिन्तयति तावदेको विद्याधरः प्रियान्वितो वाप्यामुत्तीर्णवान्। कुमारस्तत्र गत्वा प्रियां जलं पाययन्तं तमप्राक्षीत्—'एते क्व किमर्थं च व्रजन्ति?'। खेटो जगौ—'नन्दीश्वरे शाश्वतार्हतसद्मसु चैत्राष्टाहिकायांमहोत्सवं कर्तुं यान्ति'। तदा कुमारो दध्यिवान्—'धन्या ह्यमी ये शाश्वतिकाऽष्टाहिकापर्वाऽऽराधयन्ति, अहमपि किमिति क्रीडया कालं गमयामि?'। ततो गृहे गत्वा पत्न्योर्जगौ—'अहं नन्दीश्वरे देवान् वन्दित्वा यावत्सद्य उपैमि तावद् युवाभ्यां वृद्धनारीभिः सह चित्तं समाधयन्तीभ्यां यथासुखं स्थेयम्'। ताभ्यां सभक्ति-विनयं पत्यादेशेऽङ्गीकृते कुमारः खेटैः सार्धं नन्दीश्वरं प्रति पल्यङ्केनाऽचलत्। परम् जम्बूद्वीपजगत्याम् उच्चैर्गतौ शक्त्यभावाद् अस्य पल्यङ्कोऽस्खलत्, खेचरास्तु प्रोच्चैर्जग्मुः। ततः कुमारो धर्मान्तरायेण खिन्नो ववले, स्वेष्टसिद्ध्यै च कुतश्चन गगनगामिनीं विद्यां काङ्क्षन् क्वापि पुरोद्याने अभ्रंलिहशिरोदीप्रमणिकलशमण्डितं हैमं चैत्यं ददर्श। तदा तीर्थलङ्घनोद्भूताशातनाभयात् कुमार इहोर्व्यामुत्ततार, चैत्ये च विधिनाऽविशत्। तत्र रत्ननिर्मितां नाभेयप्रतिमां हर्षरोमाञ्चिताङ्गः कुमारो नत्वा

स्तुत्वा च चैत्यतो बहिर्निर्ययौ । तत्र रूप-यौवनशालिनः कृतहस्तान्[1] स्वहस्ताऽऽत्तवीणा-वंशाद्युपस्करान् राजपुत्रानपश्यत् । गीत-नृत्यकलाभ्यासरसिकान् प्रत्यक्षान् गन्धर्वानिव रसकोविदान्[2] तान् दृष्ट्वा पुरो नगरं च वीक्ष्य अच्छधीः[3] कुमारः कञ्चन पौरं नरं तत्स्वरूपं पुरादेश्चाह्वादि अपृच्छत् । सोऽप्याह—"एतद् लक्ष्मीपुरं पुरमस्ति, यदुपमानतां स्वर्गादीनां श्रियोऽपि नैव दधते । अत्र राजत्पराक्रमः श्रीपतिनामा राजाऽस्ति, यदैश्वर्यं वीक्ष्य बुधा[4] महेन्द्रे घृणां बिभ्रते । तस्य पृथग्राज्ञीत्रयोद्भवास्तिस्रः कन्या अभवन्, तास्तु धात्रा त्रिलोकीस्त्रैणरूपेभ्यः सारान् परमाणून् गृहीत्वा कृताः । देव्यस्तासां सुभगतां प्राप्तुं प्राक्तपोन्यूनताविदस्तपस्तप्तुं पुनर्मानुषं जन्म काङ्क्षन्ति । ताश्च जैनादुपाध्यायात् कलावेदिष्वनुत्तराद् गाम्भीर्यादिगुणोत्तराद् नृपदत्तमहाधनात् कलाविलासाह्वात् स्वल्पैरपि दिनैर्भाग्यसम्भवात्प्रज्ञाऽतिरेकात् सर्वाः कला अध्यैषत । पित्रोः पाठकस्य चाऽऽर्हतत्वेन ता धर्मानुष्ठानतत्पराः परमार्हत्योऽभवन् । तासु आद्यां नाट्ये भृशं वैशारद्यं रुचिं च बिभ्राणां भूपतिः 'नाट्यसुन्दरी' इत्याह्वया आह्वयत् । सा च 'यो जैनधर्मक्रियारुचिर्मां नाट्येन जेष्यति तमेवाऽहं पतिं करिष्यामि' इति प्रतिज्ञामकरोत् । द्वितीया गीतकलायामधिकं रुचि-नैपुण्ये दधती महीभुजा 'गीतसुन्दरी' इत्यभिदधे । साऽपि 'यो जैनो मां गीतकलायां जेष्यति स एव हि भर्ता मया वरिष्यते' इति प्रतिज्ञामकरोत् । तृतीया वीणादिनादेषु भृशं रति-कौशले दधती नृपोदितां 'नादसुन्दरी' इत्याह्वामधात् । 'यो जैनो मां नादकलया जेता स मम वरो भविता,

१ बाणनिक्षेपनिपुणान् । २ रसपण्डितान् । ३ स्वच्छमतिः । ४ देवाः पण्डिताश्च ।

नाऽन्य' इति साऽपि प्रतिज्ञामकरोत् । नृप एतत्कन्यास्वरूपं पटहेन निजे राज्ये न्यवेदयत्, तथा राज्यान्तरेष्वपि दूतैर्न्यवेदयत् । जगति सर्वोत्तमानि कन्यानां रूपाणि श्रुत्वा बहवो गुणशालिनः क्षत्रकुमारा आजग्मुः । ते च स्वाः स्वा नाट्य-गीत-वाद्यकला अदर्शयन्, परं कोऽपि कनीनां समतामात्रमपि नाऽधात् । ततो नृपस्तान् कला अध्यापयितुं कलाविलासाह्वमुपाध्यायं भूरि धनं ददत् समादिशत् । उपाध्यायस्तान् क्षत्रकुमारान् भृशादराद् अत्र निर्जने नाट्यादिकला नित्यमध्यापयति । भूपालो मासे मासे तान् कुमारान् कनीश्च परीक्षते, परमद्य यावत् कश्चन कलाभिस्ता नाऽजैषीत् । ततः केऽपि हतोत्साहा यान्ति, केचन प्रेरिता आयान्त्यपि । इति यत्त्वमप्राक्षीस्तत्सर्वं मद्गिरा विद्धि" । तस्माद् नराद् एवमाकर्ण्य सविस्मयः कुमारः पल्यङ्कं क्वापि संगोप्य वज्रादि चायुधं मुक्त्वा, औषध्या वामनीभूय हास्यास्पदं रूपं दधद् दिव्यालङ्कार-नेपथ्यो गत्वा पाठकमनमत् । पाठकेन पृष्टम्—'कस्त्वम् ? कुतः किमर्थं चाऽऽगाः ?' । वामन आह—"नेपालदेशे विजयपत्तने राजमान्यस्य क्षत्रियस्य कुङ्कणकनामाऽहं पुत्रः कर्मवशाद् ईदृग्रूपभाग् अस्मि । मदेकपुत्रेण धनाढ्येन पित्रा प्राप्तयौवनोऽहं दत्तैः प्रधानालङ्कार-नेपथ्यैरलङ्कृतोऽस्मि, परमेवं कुरूपत्वाद् निष्कलत्वाच्च मह्यं कोऽपि तनयां न दत्ते, तेन निर्विण्णो गृहाद् निरगाम् । ततः कलाः पिपठिषुर्नानादेश-पुरादिषु भ्राम्यन् त्वां कलाचार्यं कन्याश्च श्रुत्वाऽत्रागमम् । अतो गुरो ! मां नाट्यादिकला आदरात् पाठय, यतस्ताभी राजकनीर्जित्वा अहं ताः परिणयामि" । ततो राजकुमारा जहसुः—'अहो! कलागुरोर्भाग्यं यदयं छात्र उपस्थितः । पाठक एनं पाठयित्वा कन्याभर्तृप्रदानतश्च

धराधीशं तोषयित्वाऽप्रमितं धनं लब्धा !। कन्यानामपि भाग्येनाऽयं वरः समुपस्थितः, ईदृग् रूपवान् क्वापि विश्वे यथा तथा न हि लभ्यः!'। इति च्छात्राणां हास्यगिरः श्रुत्वा लज्जितो गुरुस्तमुवाच—'कुमार ! त्वं कलाः कन्याश्च नाऽर्हसि'। तदा वामनो गुरोः पूजाकृते सपादलक्षमूल्यं कङ्कणं पाणेरुत्तार्य धनदवद् लीलया ददौ। ततः सानन्दः सचमत्कारश्च गुरुर्यत्नाद् नाट्यं शिक्षयते; परमयं पदन्यासमपि न वेत्ति, कुम्भकारवद् उच्चैर्मृत्तिकां मर्दयन्निव कठोरवक्रांहिघातैर्दृढं पृथ्वीं कम्पयति, भूमौ गोलकवद् उच्छलन् गिरिप्रस्तरवच्च पतन् वाद्यधक्कनिर्घोषैरभितो जनान् हासयति। एवं द्वि-त्रीणि दिनानि कृत्वा तस्य प्रयततः पदन्यासेऽप्यनायाते गुरुर्निर्विविदे। अन्यदा गुरुरुवाच—'वत्स! तव नाट्यं नाऽऽयाति, ततो गीतं पठ'। सोऽवक्—'तद् मम पुराऽप्यायाति'। गुरुणोदितम्—'पठ, कीदृग् आयाति?'। ततो वैदूपिकीश्चेष्टाः सृजन् स विकृतध्वनिरपाठीत्, तथाहि—

> "पंच नियट्ठा हु वणे पविट्ठा, कविट्ठस्स हेट्ठा तउ संनिविट्ठा।
> पडिअं कविट्ठं भग्गं एगस्स सीसं, अव्वो! हसन्ती किल तेह सेसा" ॥ १ ॥

इदं श्रुत्वाऽखिलाश्छात्रा जहसुः, जगदुश्च—'अहो गीतस्याऽद्भुतत्वम्! अहो गानस्य सौष्ठवम्!। अनेनैव गीतेन नृपपुत्रीं परिणेष्यति, तदयमधिकेन गीतेन किं करोति?'। तथाप्यद्भुतदानेन सन्तुष्टः

---

१ पञ्च निकृष्टाः खलु वने प्रविष्टाः, कपित्थस्याऽधस्ततः सनिविष्टाः। पतित कपित्थ भग्नमेकस्य शीर्षम्, अहो! हसन्ति किल ते शेषाः ॥ १ ॥ २ निकृष्टा—अधमाः।

पाठको रहो ग्राम-रागादि बोधयन् यत्नाद् गीतं शिक्षयते, परं भूयसाऽपि प्रयत्नेन किञ्चनाऽध्ययं न वेत्ति। ततः पञ्च-षैर्घस्त्रैर्विषण्णो गुरुस्तमुवाच—'त्वं गीतकलां न वेत्सि, अतो वीणाकलां पठ'। ततो गुरुर्वीणामानाय्य तस्याऽऽर्पयत्। गुरुर्यावत् तां वीणां वादयितुं किञ्चित् शिक्षयते तावत् स करलाघवाद् वीणायास्तन्त्रीमतुत्रुटत्। ततः कलागुरुरन्यां वीणामानाय्य तस्मै आर्पयत्, तां मुदा प्राग्वद् गृहीत्वा तत्तुम्वं वभञ्ज। पुनश्चाऽर्पिताया वीणाया अप्ययं दण्डं वभञ्ज। ततो गुरुः खिन्नः सन् स्माह—'वत्स! त्वं पाठं नाऽर्हसि'। ततः कौतुकी वामनः कलागुरोर्गेहे गत्वा तस्य पत्न्या द्वितीयं कङ्कणमार्पयत्। तदा सा मुदिता तद्दानविस्मिता चाऽप्राक्षीत्—'किमियं मम भक्तिः?'। स स्माह—'तव पतिं तथा ब्रूया यथा स मां पाठयेत्'। साऽपि अदृष्टा-ऽश्रुतदानेन विस्मिता वशीकृता च स्माह—'एवं करिष्यामि'। ततो वामनः स्वोत्तारके भाटकोपात्तगृहेऽगमत्, तत्र च कृतपरिच्छदो जिनाद्यर्चापरस्तिष्ठन् पाठकाले पाठकसमीपमभ्येति। अथ साऽपि गृहागतं पतिमाख्यत्—'प्रिय! यस्यैतदद्भुतं दानं तमेकं वामनमेव किं न पाठयसि?। अत्राऽनेके छात्राः सन्ति, परं कोऽपीदृशो दाता नास्ति। सर्वेऽप्येते संभूय यदि मम द्वितीयं कङ्कणं निर्मापयेयुस्तदाऽलम्। तत् किं वहुभिः पाठितैः?, अयमेव हि पाठ्यताम्'। उपाध्यायोऽवादीत्—'ईदृक् कङ्कणं पृथ्व्यां नास्ति, परमनेनैव समाऽर्पितमस्ति; प्रिये! तदिदं गृहाण'। इत्युक्त्वा तदार्पितम्। ततः सा तत् कङ्कणद्वितयं करद्वयेऽपि क्षिप्त्वा आत्मानमप्सरोऽधिकं मेने। उपाध्यायः पुनः स्माह—'प्रिये! अमुमहं पाठयामि, परं वहौ प्रयत्ने कृतेऽपि असौ किञ्चिन्न वेत्ति'। साऽप्युवाच—'प्रिय! नाट्यम् अङ्ग-

लालित्यात् साध्यं भवेत्, गीतं च ध्वनेः सौष्ठवात् स्यात्; दैवाद् अस्य द्वयमपि नास्ति, परं सुखसाध्यां वीणां किमु नाऽध्यापयसि ?'। ततस्तेन वीणात्रयभङ्गस्वरूपे भाषिते साऽऽख्यत्—'तासु तन्त्रीर्दुर्बला, तुम्बकं जीर्णं, दण्डश्च शटितोऽभूत्, ततस्त्वया सबलैव वीणाऽस्याऽर्प्या'। पाठकोऽब्रवीत्—'एवं करिष्ये'। तत उपाध्यायश्छात्राणामुपहासभीत्या रहस्तं पाठयति। एवं मासे पूर्णे क्रमात् परीक्षासमय आगात्। अथ परीक्षामण्डपे सपरिच्छदो भूपाल आगच्छत्, अनेके पौरा विविधाश्च कलाविदो मिलिताः। भूपादेशाद् उपाध्यायश्छात्रगणैः सह यावच्चलति तावद् वामनस्तमुज्जगार—'अहमपि महाकार्यैः स्वसन्निधौ अध्यासनीयः, समये च नाट्यादिकलां दर्शयितुमादेष्टव्यः'। गुरुराख्यत्—'कुरूपत्वात् त्वयि समीपस्थेऽपि अहं लज्जे, तव कला उपहासपदं, तत्र किमादिशामि ?'। अथ वामनः पाठकाय कोटिमूल्यं हारमदात्, ततोऽयं स्तननासुखरस्तत्सर्वं प्रत्यपद्यत। 'बहून् छात्रान् पाठयता मया जन्मनाऽपि यद्धनं नाऽर्जितं तदनेन मम लीलयाऽप्यदायि, तत् कोऽयम् ?' इति चिन्ता-ऽऽश्चर्य-मुदाकुलः पाठको वामनान्वितः परीक्षामण्डपे गत्वा उचितमासनमध्यास्त। नृपादीनां कुमाराः परेऽपि राजवर्ग्याद्याः सपरिच्छदा यथास्थानमुपाविशन्। ततो राजादेशाद् वदतां वरः प्रतीहारस्तुमुलं निवार्य उच्चैर्भुजमुत्क्षिप्य जगाद—'भो भोः क्षत्रियकुमाराः! आत्मनो नाट्यकलां दर्शयत, तया च कश्चिदाद्यां नृपाङ्गजां जित्वा पाणौ कुर्यात्'। ततो गीत-वाद्यादिसामग्र्या बहवः कुमाराश्चटत्प्रकर्षविज्ञानाः क्रमाद् बहुधा ननृतुः। तथाहि—कोऽपि चापगुणे, कोऽपि बाणाग्रे, कश्चिदसेर्धारायां, कोऽपि भल्लाग्रे विविधैः करणादिभिरनृत्यत्। कश्चिद् रदैस्त्रीन् खड्गान्

पाठको रहो ग्राम-रागादि वोधयन् यत्नाद् गीतं शिक्षयते, परं भूयसाऽपि प्रयत्नेन किञ्चनाऽध्ययं न वेत्ति। ततः पञ्च-पैर्घस्त्रैर्विपिण्णो गुरुस्तमुवाच–'त्वं गीतकलां न वेत्सि, अतो वीणाकलां पठ'। ततो गुरुर्वीणामानाय्य तस्याऽऽर्पयत्। गुरुर्यावत् तां वीणां वादयितुं किञ्चित् शिक्षयते तावत् स करलाघवाद् वीणायास्तन्त्रीमतुत्रुटत्। ततः कलागुरुरन्यां वीणामानाय्य तस्मै आर्पयत्, तां मुदा प्राग्वद् गृहीत्वा तत्तुम्बं वभञ्ज। पुनश्चाऽर्पिताया वीणाया अप्ययं दण्डं वभञ्ज। ततो गुरुः खिन्नः सन् स्माह–'वत्स! त्वं पाठं नाऽर्हसि'। ततः कौतुकी वामनः कलागुरोर्गेहे गत्वा तस्य पत्न्या द्वितीयं कङ्कणमार्पयत्। तदा सा मुदिता तद्दानविस्मिता चाऽप्राक्षीत्–'किमियं मम भक्तिः?'। स स्माह–'तव पतिं तथा ब्रूया यथा स मां पाठयेत्'। साऽपि अदृष्टा-ऽश्रुतदानेन विस्मिता वशीकृता च स्माह–'एवं करिष्यामि'। ततो वामनः स्वोत्तारके भाटकोपात्तगृहेऽगमत्, तत्र च कृतपरिच्छदो जिनाद्यर्चापरस्तिष्ठन् पाठकाले पाठकसमीपमभ्येति। अथ साऽपि गृहागतं पतिमाख्यत्–'प्रिय! यस्यैतदद्भुतं दानं तमेकं वामनमेव किं न पाठयसि?। अत्राऽनेके छात्राः सन्ति, परं कोऽपीदृशो दाता नास्ति। सर्वेऽप्येते संभूय यदि मम द्वितीयं कङ्कणं निर्मापयेयुस्तदाऽलम्। तत् किं वहुभिः पाठितैः?, अयमेव हि पाठ्यताम्'। उपाध्यायोऽवादीत्–'ईदृक् कङ्कणं पृथ्व्यां नास्ति, परमनेनैव ममाऽर्पितमस्ति; प्रिये! तदिदं गृहाण'। इत्युक्त्वा तदर्पितम्। ततः सा तत् कङ्कणद्वितयं करद्वयेऽपि क्षिप्त्वा आत्मानमप्सरोऽधिकं मेने। उपाध्यायः पुनः स्माह–'प्रिये! अमुमहं पाठयामि, परं वहौ प्रयत्ने कृतेऽपि असौ किञ्चिन्न वेत्ति'। साऽप्युवाच–'प्रिय! नाट्यम् अङ्ग-

लालित्यात् साध्यं भवेत्, गीतं च ध्वनेः सौष्ठवात् स्यात्; दैवाद् अस्य द्वयमपि नास्ति, परं सुखसाध्यां वीणां किमु नाऽध्यापयसि ?' । ततस्तेन वीणात्रयभङ्गस्वरूपे भाषिते साऽऽख्यत्—'तासु तन्त्रीर्दुर्बला, तुम्बकं जीर्णं, दण्डश्च शटितोऽभूत्, ततस्त्वया सबलैव वीणाऽस्याऽर्प्या' । पाठकोऽब्रवीत्—'एवं करिष्ये' । तत उपाध्यायश्छात्राणामुपहासभीत्या रहस्तं पाठयति । एवं मासे पूर्णे क्रमात् परीक्षासमय आगात् । अथ परीक्षामण्डपे सपरिच्छदो भूपाल आगच्छत्, अनेके पौरा विविधाश्च कलाविदो मिलिताः । भूपादेशाद् उपाध्यायश्छात्रगणैः सह यावच्चलति तावद् वामनस्तमुज्जगार—'अहमपि महाकार्यैः स्वसन्निधौ अध्यासनीयः, समये च नाट्यादिकलां दर्शयितुमादेष्टव्यः' । गुरुराख्यत्—'कुरूपत्वात् त्वयि समीपस्थेऽपि अहं लज्जे, तव कला उपहासपदं, तत्र किमादिशामि ?' । अथ वामनः पाठकाय कोटिमूल्यं हारमदात्, ततोऽयं स्तवनामुखरस्तत्सर्वं प्रत्यपद्यत । 'बहून् छात्रान् पाठयता मया जन्मनाऽपि यद्धनं नाऽर्जितं तदनेन मम लीलयाऽप्यदायि, तत् कोऽयम् ?' इति चिन्ता-ऽऽश्चर्य-मुदाकुलः पाठको वामनान्वितः परीक्षामण्डपे गत्वा उचितमासनमध्यास्त । नृपादीनां कुमाराः परेऽपि राजवर्ग्याद्याः सपरिच्छदा यथास्थानमुपाविशन् । ततो राजादेशाद् वदतां वरः प्रतीहारस्तुमुलं निवार्य उच्चैर्भुजमुत्क्षिप्य जगाद—'भो भोः क्षत्रियकुमाराः! आत्मनो नाट्यकलां दर्शयत, तया च कश्चिदाद्यां नृपाङ्गजां जित्वा पाणौ कुर्यात्' । ततो गीत-वाद्यादिसामग्र्या बहवः कुमाराश्चटत्प्रकर्षविज्ञानाः क्रमाद् बहुधा ननृतुः । तथाहि—कोऽपि चापगुणे, कोऽपि बाणाग्रे, कश्चिदसेर्धारायां, कोऽपि भल्लाग्रे विविधैः करणादिभिरनृत्यत् । कश्चिद् रदैस्त्रीन् खड्गान्

कराभ्यां च चतुरः खड्गान् गृहीत्वा स्वयं भ्रमन् तांश्च खड्गान् अलातवद् भ्रमयन् करणैर्ननर्त । अन्यः कश्चित् शीर्षस्थितजलपात्रः करगोलकांश्चालयन् पादाभ्यां च चक्राणि भ्रमयन् हस्तकादिभिरनर्तीत् । कोऽप्यधोमुखः पादाभ्यां मुसलौ दधत् पाणिभ्यां च गोलकान् रमयन् भुवि शिरसा ननर्त । कश्चित्तु स्थितः सन् पाणिभ्यामसीन् भ्रमयन्, पादाङ्गुलीभिश्चक्राणि भ्रमयन्, शीर्षे जलभाजनं दधद्, नाभौ मुङ्गलां वादयन्, स्कन्ध-बाहुस्थदीपको, जिह्वाप्रोतमणिव्रातोऽनुत्तरं नृत्यति स्म । एवं कुमाराणां नाट्यानि वीक्ष्य समस्ता भूपादयश्चित्रैः पृथक्पृथक् प्रशंसन्तः शीर्षाण्यधूनयन्, परं नाट्यसुन्दरी एषु हस्तकादिषु विपर्यासान् दर्शयन्ती सर्वेषां तान्यदूषयत् । वामनोऽप्यास्यं मोटयन् दोषेषु च स्मेरयन् कैश्चित् कन्याद्यैर्विदांवरः समभावि, कैश्चित्तु तस्मिन् नैष्फल्यदक्षभिस्तस्य रूपे ज्ञत्वमसम्भाव्यं कल्पितम् । अथ नाट्यसुन्दरी भूपाज्ञया तादृग्वेषसर्वाङ्गसंवृता शुद्धसामग्र्या नर्तितुं प्रारेभे । सा विश्वचेतांसि हरन्ती, कलाविदां मदान् दमयन्ती, रम्भादेश्चाऽनुकुर्वती विविधं चिरमनर्तीत् । कुमारकृतनाट्येषु या विषमा भिदोऽभवन् ताः सर्वा अपि नर्तित्वाऽथ सा हस्तकैर्नृत्यति स्म । सा चलत्कपोल-नासा-ऽक्षितारा-ऽधर-पयोधरान् चतुःषष्टिं हस्तकान् शास्त्ररीत्या विधाय, ततः कपोला-ऽक्षितारभङ्गौ विपर्यस्तौ व्यधात् । वामनस्तथा दृष्ट्वा तुमुलं निषिध्याऽवदत्—'भद्रे ! त्वया पूर्वं हस्तकाः समस्ताश्च भ्रू-कपोलादिभङ्गा यथास्थानं शास्त्ररीत्या कृताः, परं सुभ्रु ! सम्प्रत्येतौ कपोला-ऽक्षितारभङ्गौ शास्त्राऽनुक्तौ वितथौ कथमकृथाः ? एषोऽपि भावः किं क्वापि शास्त्रे प्ररूपितोऽस्ति ?' । अथ सा चमत्कृता स्माह—'वामन ! एष भरतेऽस्ति' । वामनः स्माह—

'एवं मा वादीः, भरतं हि मम कण्ठस्थमस्ति, तत्र भरतमुनिरेनं भावं काऽपि न जगाद' । ततो वामनो भरतस्याऽस्मिन्नधिकारे श्लोकानवदत् । तदा नाट्यसुन्दर्यवोचत्—'तर्हि भ्रान्ता भविष्यामि' । वामनः स्माह—'ईदृक्षविज्ञाने भ्रान्तिसम्भवो नास्ति, परं मन्ये त्वयैतत् सभापरीक्षार्थं विदधे । किन्तु अत्र सभायां केवलं मृगा एव सन्ति । ईदृशस्य सूक्ष्मस्य विज्ञाता कोऽप्यत्र न हि सम्भवी' । एतन्निशम्य सभ्या दध्युः—'ज्ञानं त्वस्मिन् असम्भवि, परं गुरुः शिष्याद्यनुग्रहाद् एतदवीवदत्' । कन्याऽपि स्वस्खलितस्यैवं समर्थनयाऽतुपत् । ततः सा सहास्यमुखमोटनं कृत्वाऽग्रतो ननर्त । भल्लाऽग्रन्यस्तपुष्पस्योपरि द्वादशभिर्वामेतरैः करणैरियं ननर्त, तया च कलया साऽखिलान् राजकुमारानजैषीत् । ततो वाद्यनादोत्क्षो जयजयारावोऽभूत् । अथ वरचिन्तातुरो भूप उपाध्यायमभाषत—'त्वच्छात्रेषु कोऽप्यपरीक्षितोऽद्यापि अवशिष्यते?' । अथ उपाध्यायो वामनं तद्दानप्रीणितोऽदीदृशत्, यतो दानमुत्तमं वशीकरणं विद्यते । भूपोऽचिन्तयत्—'अस्मिन् कुरूपेऽतिशायिनी कला न सम्भवित्री, सम्भवेऽपि च तया कलया मम तनयां मा जैषीत्, यतोऽनेन वामनेन पत्या कन्या विडम्बिता मा भूत् । अथवेह सन्देहः शल्यति, शल्यं तु सोढुं शक्यते न तु सन्देहः' । इति ध्यात्वा नृपोऽवदत्—'रे वामन ! नाट्यकलां यदि वेत्सि ततो दर्शय, सर्वेऽप्येते सभासदस्तव कलां द्रष्टुं सोत्कण्ठाः सन्ति' । वामनस्तु सक्षुधः परमान्ननिमन्त्रणतुल्याद् नृपादेशात् शीघ्रं नर्तितुमुत्तस्थौ । ततश्छात्रा इत्युपहासं चक्रुः—'तव कला प्रागप्यैक्षि, यन्मर्दने कुलालवद् दक्षोऽसि सा मृत्स्नाऽत्र नास्ति । कां नवां कलां दर्शयिष्यसे ?' । केऽप्यूचुः—'किं निषिध्यते ? अयं विगुप्यतां, लोके चोप-

हासो वर्धताम्'। इति च्छात्राणां विचित्रोक्तीरवज्ञाय वामनः पञ्च परमेष्ठिनो नत्वा नर्तितुं ससज्ज। स्वाभिमतान् गायनवादकान् परीक्ष्याऽसज्जयत्, ततः सर्वसामग्र्या विश्वैकमोहनं ननर्त। अहो! तन्नाट्ये सेर्ष्यदोषदृशोऽपि केऽपि हस्तकादिषु कुत्रापि किञ्चिद्दूषणं प्राप्तुं नाऽशकन्। सुधियोऽनन्यचेतसः सभासदस्तन्नाट्यं पश्यन्तो देवानामपि नाट्येषु घृणां दधिरे। कुमारनाट्यानां नृत्तैर्नर्तित्वा, अथ स भल्लाऽग्रन्यस्तपुष्पस्थसूच्यग्रकुसुमोपरि ननर्त, तत्र द्वादश वामे-तरान् करणान् ददौ, तच्च कुसुमम् अक्ष्णाऽऽददे। तदा सभ्या 'जितं जितम्' इति जगुः। ततो नाट्ये विसृष्टे प्रहृष्टैर्जनैर्जयजयध्वनिर्वाद्यनादकोलाहलश्च विदधे, वन्दिनस्तद्गुणान् पेठुः, गायनाश्च मुदा तद्गुणान् अगायन्। वामनस्तेभ्यो विश्वाद्भुतं वाञ्छितं दानं ददौ। तया जगदद्भुतया नाट्यकलया रञ्जिता नाट्यसुन्दरी हर्षा-ऽऽश्चर्यवशा तं वामनमवृणोत्। तदा 'साधु वृतं साधु वृतम्' इति नृपगोत्रदेवता जुघोष, पृथिवी-नभोव्यापकश्च वाद्यादितुमुलोऽभूत्। अथ नृपो 'धिग् दैवम्, एकस्याः पुत्र्या वामनो वरोऽभवत्, शेषयोस्तु उभयोः कोऽपि नृपाङ्गजो वरो भूयात्' इति खेदेन ध्यात्वा प्रतीहारमादिशत्। सोऽपि प्राग्वत् तुमुलं निषिध्य उच्चैर्जुघोष—'भो भो राजाङ्गजाः! युष्मास्वेकः कश्चित् तपोनिधिर्गीतकलया गीतसुन्दरीं जित्वा पाणौ क्रियात्'। ततो गीतकलाविज्ञाः कुमाराः स्वस्वसामग्र्या जिनधर्मानुसारतः क्रमादगासिषुः। ते गीतैर्यदा यदा यं यं रसं पुपुषुस्तदा तदा तद्भावज्ञाः सर्वे तन्मयतां प्रापुः। तद्गीतरसलीना विज्ञाः क्षुत्-तृट्-शीता-ऽऽतपादिजां बाधां नो वेदयन्ते स्म। कुमाराश्चटत्प्रकर्षै रसैर्गीत्वा क्रमाद् व्यरमन्। अथ नृपादिष्टा गीतसुन्दरी स्वसामग्र्याऽगायत्,

तस्यां हि गायन्त्यां रसैः सभा निद्राणेवाऽभवत्। ततः पिहितकर्णाः पूर्वसङ्केतिता दास्यो भूपादीनां करादिभ्यः खड्गादीन्यायुधानि गृहीत्वा क्वापि व्यमुञ्चन्, परं कोऽपि किञ्चिद् नाऽज्ञासीत्। अथ गीत्वा गीतसुन्दर्यां विरतायाम् आयुधानि मार्गयतां लज्जितानां भूपादीनां सस्मिता दास्यो धनानि मानयित्वा अदुः। ततो 'अनया सर्वे राजकुमारा जिताः' इति सभ्यानां गीः प्रासरत्, वाद्यनिर्घोषयुक् च जयघोषः प्रससार। भूपो वराऽप्राप्त्या खिन्नः प्राग्वत् पाठकमप्राक्षीत्। सोऽपि वरमालाढ्यं वामनमदीदृशत्। नृपः प्राग्वद् ध्यात्वाऽवादीत्—'वामन! चेद् गीतं वेत्सि तर्हि तत्स्वरूपमस्मान् निवेद्य सर्वोत्तमं गाय'। वामनः स्माह—"तद् गुरोः प्रसादात् किञ्चिद् वेद्मि, राजन्! तत्स्वरूपं संक्षेपाद् वच्मि, निशम्यताम्। तथाहि—

"गान्धर्वं त्रिसमुत्थानं, तन्त्री-वेणु-नरोद्भवम्। वीणा त्रिसरिका सारङ्ग्याद्या तन्त्रीस्त्वनेकधा ॥ १ ॥
रागो विजृम्भमाणो +हृदि मन्द्रादिभेदतः। †तस्याश्छिद्रकसंस्पर्शवशेनोत्पद्यते किल ॥ २ ॥
एवं वंशेऽपि वीणाया, नालशुद्धिस्तु वर्जनात्। शल्यादीनां तथा तुम्बशुद्धिर्वृत्तादिकैर्गुणैः ॥ ३ ॥
तन्त्रीशुद्धिर्वलिस्नायु-वालाद्युज्झिततत्कृतेः। इत्यादि वेणु-सारङ्गी-त्रिसर्यादिष्वपीष्यते" ॥ ४ ॥

इत्यादिर्लक्षमितैः शास्त्रैर्विस्तरः प्ररूपितः, परं राजन्! अधुना तु औत्सुक्यतः कियान् कथयितुं शक्यः ?। अथ किञ्चिद् मानुषसम्भवं गान्धर्वमुच्यते—अस्य गाता नाऽतिकृशो, नाऽतिस्थूलो, गले रोगो-

* अतः पर प्रायेण (पद्यबन्धश्रीजयानन्दकेवलि) चरित्रस्थमेव लिख्यते। (इति ग्रन्थकारः) + नरस्य। † वीणायाः।

ज्झितो, अथवा सर्वथा नीरोगः, प्रमुदितो, यौवनान्वितः, तिल-तैल-कुलमाष-गुडाद्याहारवर्जकः, शर्करा-मधुयुग्दुग्धपानीयभोक्ता, नाऽत्युष्ण-शीतभुक्, ताम्बूलेन विशुद्धवदनः, एतादृशो नरो नारी वेदृशी भवति । तस्य प्रयत्नप्रेरितो नाभित उत्थितः प्राणाह्वो वायुः कुक्षौ विस्तृतः कण्ठे च संवर्तितो मूर्ध्न्याहतो मुखे भ्राम्यन् ततो जिह्वा-दन्तौ-ष्ठ-तालुनि परावर्तवशाद् वर्णाद् नादं जनयेत् । यथा—

"स मन्द्रमध्यताराह्वः, स्थानादिवशतः पुनः । सप्तधा स्वरभेदेन, भिद्यन्ते ते स्वराः पुनः ॥ १ ॥
सामान्यतो विशेषाच्च, त्रयो ग्रामा भवन्ति च । स्वरग्रामेष्वथो संमू–र्च्छनाश्चैष्वेकविंशतिः ॥ २ ॥
उत्पद्यन्ते स्वरेष्वेषु, रागास्ते सप्त षड्गुणाः । तेषु गीतं द्विधा चाऽऽग–मिकं स्यादेशजं तथा ॥ ३ ॥

यदुक्तम्—

"तेसु य सरेसु बायालिसं+ रागा उप्पज्जन्ति । तेसु य रागेसु दुहा गीयं उप्पज्जइ, तं जहा–आगमियं देसिजं च । तत्थाऽऽगमियं सत्तसीगडा सत्त भाणियाओ भाणय भाणय दुविलियाओ य, तत्थ देसिजं च एलामड्डिय दुवइभेयमणेगविहं" ।

इत्यादि । रागाश्च पञ्चाशद् द्विचत्वारिंशद्वा लोकप्रसिद्धा । तथाहि—

"श्रीरागो वसन्तश्च, पञ्चमो भैरवस्तथा । मेघरागस्तु विज्ञेयः, षष्ठो नट्टनरायणः ॥ १ ॥
गौरी कोलाहलाऽन्धारी, द्रविडी मालकैशिकी । षष्ठी स्याद् देवगन्धारी, श्रीरागस्य विनिर्गताः ॥ २ ॥
हिण्डोला कौशिकी चैव, रामग्री प्रथममञ्जरी । गुण्डकृतिर्हि देशाखी, संवदन्ति वसन्तके ॥ ३ ॥

+ द्विचत्वारिंशत् ।

भैरवी गुर्जरी" चैव, भाँपा वेलाकुला तथा । कर्णाटी रक्तहंसी च, पडेताः पञ्चमे स्मृताः ॥ ४ ॥
त्रिगुणा स्तम्भतीर्था च, आभीरी कैकुभा तथा । विपरीडी वैसंबेरी, पडेता भैरवे मताः ॥ ५ ॥
वङ्गोला मधुरी चैव, कामोदा दोपेशाटिका । देवग्री चैव देवाला, पडेता मेघरागतः ॥ ६ ॥
तोडी मोटकरी चैव, श्रीभूपालश्रिया तथा । नट्टा धनाश्री मल्ली प-डेता नट्टनरायणे" ॥ ७ ॥

इति पड्रागाः पट्त्रिंशच भाषाः । श्रीरागे मालवो गुरुः, वसन्ते वाणगुरुः, पञ्चमे पूर्विओगुरुः, भैरवे केदारओगुरुः, मेघरागे माल्लिगुरुः, नट्टनरायणे कल्याणगुरुः, इति गुरुपङ्क्तम् ।

एतत्कालेन चाऽधीतं, वक्तुं कालेन शक्यते । राजन् ! स्तुतिश्च निन्दा च, प्रायो गीते प्रवर्तते ॥ १ ॥
न सज्जनमुखाद् निन्दा, निर्यातीति न वच्मि ताम् । स्तुतिः पुनर्भवेद् द्वेधा, सदसद्गुणकीर्तनात् ॥ २ ॥

असद्गुणा विवाहादौ नीचैश्चाऽन्यत्राऽपीष्यन्ते, मृषावादी दोषन्यासः स्यात्, अतः सद्भिस्तु मृषावाग् न क्रियते । सन्तोऽपि द्विविधाः, साधारणा असाधारणाश्च । साधारणा रागादिचेष्टावन्तः, ईदृशी हि रागादिचेष्टा सर्वस्मिन् जने प्राप्यते, अतस्तस्याः स्तुत्या को विशेषः ? । ये प्राणातिपाताद्या अष्टादश दोषा उत्तमैर्निन्दितास्तैरेव या देवादौ स्तुतिः सा तत्त्वतो निन्दैव । असाधारणा द्वेधा-कल्पितगुणा अकल्पितगुणाश्च । तत्र कल्पितगुणा ये हरि-हर-ब्रह्मादयोऽसद्गुणा अपि परशास्त्रादौ प्ररूपिताः । तथाहि—

"संहार-सृष्टि-सत्ताः, प्रजापतिर्यः करोति जगतोऽपि । हरिनाभिकमलनिलयं, तं सावित्र्याः पतिं प्रणुमः" ॥ १ ॥

इत्यादि । एषाऽपि स्तुतिर्मिथ्याक्तिपापतः सद्भिर्नो कार्या । को हि जैनोक्तितत्त्वविद् मिथ्यादृक्छास्त्रैर्मुह्येत् ?। यद् विचार्यमाणं युक्तीर्न सहते, अनुभवप्रमाणैश्च विरुध्यते; तत्र स्वदृष्टिरागग्रहिलान् विमुच्य को हितार्थी सुधी रमेत ?। ततो येऽसाधारणा अकल्पिताश्च गुणास्ते स्तुत्याः, ते हि संसारिजीवेषु विशेषतश्च मिथ्यादृक्षु असन्त एव, अर्हति सङ्घे वा लभ्याः, प्रायो नाऽन्यत्र कुत्रचित् । षड्विधजीवेषु कृपा, सम्यग् ज्ञानम्, अरागिता, अष्टादशदोषाणां च त्यागोऽर्हच्छासनं विना कुतः ?। तद् राजन् ! जिनगुर्वादिगीतं गायन् स्वां रसनां सदस्यानां च श्रुतीः पुनामि, तत आदराद् यूयं सर्वे शृणुत"। इत्युक्त्वा वामनो मत्सरग्रस्तकुमाराणामुपहासगिरः पूर्ववदवज्ञाय स्वप्राग्दानवशाऽशेषसामग्र्या यत्नात् सावधानो गातुमुपाक्रमत । तस्मिन् गायति सति सदस्या हाहा-हूहादिगायनान् तद्गानश्रोतृंश्च सुरानपि तृणायाऽपि नाऽमन्यन्त । तदवसरे न कश्चिद् भाषते, कश्चिच्चित्रमपि नेक्षते, कोऽपि किञ्चिद् ध्यायत्यपि न, केवलं सर्वे सभ्याः श्रुत्येकेन्द्रिया इवाऽभवन् । अथ सर्वाऽतिशायिनि तद्गीतरसे कोटिप्राप्ते समस्ता सभा सुप्तेव जज्ञे । तदा छन्नश्रुतिद्वया दास्यो नृपादीनामस्त्राणि अलङ्करणानि च पूर्ववद् गृहीत्वा क्वापि मुमुचुः, पूर्वसङ्केताच्च क्षुरिण आगत्य वामनस्याऽत्युपहासकारिणां पञ्चकुमाराणां मौलीन् द्रागमुण्डयन् । परं तदा कश्चिदपि किञ्चिन्नैव चेतयते स्म, यतः स एव हि रसो यत्र वेद्यान्तरवेदनं न भवति । अथ प्रगाय तस्मिन् स्थिते सति समस्ताः सभ्यास्तज्ज्ञात्वा हृष्टा 'वामनेन जितं जितम्' इत्युच्चैर्जुघुषुः, जयतूर्याणां च घोषोऽभूत् । गीतसुन्दर्यपि वामनं स्वजैत्रं मत्वा तमवृणोत् । नरेन्द्रकुलदेवता वामन-कन्ययोर्मौल्योः

पुष्पवृष्टिं वितन्वाना व्योम्नि प्राग्वज्जुघोष । क्षुरिषु नष्टेषु कुमारकाः स्वशीर्षाणि तथा मत्वा जनहास्यैर्ह्रियाऽनशन् । राजादयः प्राग्वद् धनैर्वस्त्रा-ऽलङ्कारान् जगृहुः, तदा दास्यो द्रव्यागमप्रीता वामनायाऽऽशिषो ददुः । नृपो दध्यौ–'द्वे कन्ये वामनः परिणेष्यति, दैवाद् एतयोर्विडम्बनाऽऽगात्, मम च लघिमाऽभूत्; परं यद्येकाऽपि मे पुत्री केनचिद् राजपुत्रेण कथञ्चित्परिणीयेत ततो मम हृदि निर्वृतिः स्यात्' । इति ध्यात्वा राज्ञाऽऽदिष्टो वेत्री प्राग्वद् बहुधा कोलाहलं निषिध्य जुघोष–'भो भो नृपनन्दनाः ! शृणुत, द्वे कन्ये प्रतिज्ञावशाद् वामनं पतिं वव्रतुः, एवं च युष्माकमभिभव-व्रीडे जाते, ततो भवत्सु कश्चिद् नादकलयाऽस्या विजित्वरो नादसुन्दरीं वृणुताम्' । कुमारा अपि वामनेन स्वं घृष्टं मन्यमाना विशिष्य दाक्ष्याद् नानारागैरनुक्रमेण वीणामवीवदन्, तन्नादैश्च सर्वा सभा स्तब्धेवाऽखिलाश्चेष्टाः परिहृत्य तदेकलीनमानसा समजायत । एषु सर्वोत्तमकलेषु पूर्वपूर्वजयक्रमाद् अन्तिमेऽवसरे प्राप्ते कस्मिंश्चिद् वीणां वादयति सति, पूर्वसङ्केतितैर्हस्तिपकैर्महागजे मुक्ते तस्मिंश्च महाभयङ्करे क्रुद्धे सगर्जं धावमाने निकटमागते सर्वे सभासदस्त्रेसुः, यतः सर्वनादादिरसेभ्यो जीवितं वल्लभं भवति । अथ भूपाज्ञया नादसुन्दरी वीणामवीवदत्, तस्याः कर्णामृतकिरा नादेन सोऽपि गजः स्तब्धः, सर्वे च सभासदः स्तम्भिताः । ततस्तया नादे निरमिते निषादिभिश्च गजे आत्ते सति 'कन्यया जितम्' इत्यादिः प्राग्वज्जयारवो जज्ञे । तदा पूर्ववत् खिन्नो नृप उपाध्यायमप्राक्षीत् । सोऽपि वरमालाद्वयीरम्यं वामनमदर्शयत् । नृपः प्राग्वद् ध्यात्वा वीणावादनाय वामनमादिशत् । सोऽपि नृपादेशाद् मुदितो वादयितुं वीणामयाचत, तदा नृपाज्ञया नरैरेका

उत्तमा वीणाऽर्पिता । तां विलोक्य वामनोऽवदत्—'भो ! अस्या दण्डान्तः कीटकोऽस्ति' । तदा कौतुकिना राज्ञाऽऽदिष्टः सन् स भङ्क्त्वा कीटकमदर्शयत् । ततो वीणा परावर्तिता, वामनस्तस्याः कटुतुम्बं जगौ, तदा कश्चित् तत्तुम्बस्य खण्डं मुखे क्षिप्त्वा तत् समवीवदत् । पुनरपि परावर्तितायामन्यस्यां तन्त्र्यन्तः सूक्ष्मवालमदर्शयत्, परस्यां च दण्डं जलमध्ये चिरं स्थितमब्रवीत् । एवं बह्वीर्वीणा दूषयित्वाऽथ काञ्चन सुविशुद्धां वीणां परीक्ष्य सम्यगवीवदत्, तदा तज्ज्ञनिर्जनैरित्यतर्क्यत—'किं स्वर्गलोकादिदं सुखसर्वस्वमुपागमत् ? किमियं श्रवस्सु सुधावृष्टिः ?' । नादरसपण्डितैर्बुधैर्वामन इत्यतर्कि—'किं तपस्तुष्टेन शक्रेण महीलोकं सुखाकर्तुमयं वामनो वादकः प्रैपि ?' । अस्मिन् नादरसे क्रमात् परमं प्रकर्षं प्राप्ते सकला सभा लयानन्दसुखाऽद्वैता निदद्रौ, तदा पिहितकर्णैः पूर्वसङ्केतितैर्हस्तिपालकैः पीतमद्यः क्रुद्धो गजो वाढं प्रेर्याऽमोचि; स च सभासमीपे प्राप्तोऽपि केनापि न ज्ञातः । सोऽपि गजस्तथा स्तब्धो यथा अङ्कुशजान् घातानपि नाऽज्ञासीत् । तं गजं घातं घातं निर्विण्णैर्हस्तिपकैः पूर्वं जयजयारवश्चक्रे, ततश्च सर्वैरपि जनैर्जयजयारवश्चक्रे । आकाशे वाद्ये वादिते सति मुक्तवीणावादनं वामनं जिता नादसुन्दर्यप्यवृणोत् । देवी कुसुमोच्चयं वर्षन्ती पूर्ववज्जुघोष, वामनश्च स्तुवद्भ्यो याचकेभ्यः प्रार्थितान्यदात् । 'अहो कला ! अहो दानम् ! अहो चातुर्यम् !' इत्यादिवामनस्तुत्या जना मुखरा अभवन् । "ईदृग्गुणाधारः पुमान् वामनत्वेन दूषितः, तद् हतकस्य विधेरनौचित्यं किं ब्रूमः ? । यदुक्तम्—

"शशिनि खलु कलङ्कः कण्टकाः पद्मनाले, प्रिययुवतिवियोगो दुर्भगत्वं सुरूपे ।
जलधिजलमपेयं पण्डिते निर्धनत्वं, धनवति कृपणत्वं रत्नदोषी कृतान्तः" ॥ १ ॥

अथवा वामनत्वेनाऽन्तर्हितः कोऽप्ययम् अभ्रच्छन्नसूर्यवद् दिव्यमूर्तिः पुमान् भविष्यति, यतो विधिरेतान् विश्वोत्तरान् गुणान् वामने न कुर्यात्, मृदामभाजने किं कश्चिदमृतं प्रक्षिपेत् ?। अस्य हि गहनं स्वरूपं वर्तते, तच्च सर्वविदेव वेत्ति"। इत्यादिविविधानालापान् जनाः परस्परं विदधिरे। अथ भूपो व्यचिन्तयत्—"कनीनां प्रतिज्ञानं धिक्, गर्हितक्रियं विधिं धिक्, कलान्यूनान् कुमारान् धिक्, आदिष्टवादिनं च मां धिक्, यद् अप्सरोऽधिकरूपाणां मम प्राणेभ्योऽप्यधिकानां तिसृणामपि कनीनामयं वामनो वरोऽभूत्। अन्यथा प्रारब्धमिदं कार्यमन्यथा निर्व्यूढम्, यदसम्भाव्यं तदभूत्, दैवं लङ्घितुं कः क्षमः ?। तदुक्तम्—

"अवश्यभव्येष्वनवग्रहग्रहा, यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयाऽनुगम्यते, जनस्य चित्तेन भृशाऽवशात्मना" ॥ १ ॥

तथा—"यन्मनोरथशतैरगोचरं, यत् स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा, हेलयैव विदधाति तद् विधिः" ॥ १ ॥

---

१ मृदो—मृत्स्नाया आमभाजने—अपक्वपात्रे । २ अनवग्रहः—प्रतिबन्धरहितो ग्रहो—ग्रहण यस्याः सा । ३ वातानाम्—वायूना समूहो वात्या । ४ भृशम् अवशो—अनधीन आत्मा—स्वरूप यस्य तेन । ५ वाचः ।

इति चिन्ताव्याकुलो भूपः कलागुरुं पप्रच्छ—'कोऽयं वामनः ? किंदेशः ? किंकुलश्च ?'। गुरुर्व्याजहार—"अयं न्यूनाद् मासात् प्राग् आगमत्। स्वरूपं पृष्टः सन् इत्याख्यत्—'नेपालदेशतो विजयपुरपत्तनात् क्षत्रपुत्रोऽहं कलाशिक्षार्थमागतोऽस्मि'। अस्याऽधिकं तु स्वरूपं कोऽपि सुधीरपि न वेत्ति। दिव्याऽलङ्करणो दिव्यदानश्चाऽयं कलाः प्रयत्नेन पाठितोऽपि आत्मानं मूर्खमिव प्रदर्शयन् इयन्तं कालं कलालेशमपि नाऽज्ञासीत्, परं साम्प्रतं तु दिव्याः सर्वाः कला अदर्शयत्, तदयं कश्चिद् अलक्ष्यस्वरूपः पुमान् संभाव्यते"। इति गुरोर्गिरा नृपो बहुधा विकल्पान् दधौ। अथ ते राजकुमारा भृशं खिन्ना व्यचिन्तयन्—"अहो ! अनेन मायाविना वामनेन घृष्टाः स्मः। एतावत्कालं मूर्खत्वं दर्शयित्वाऽधुनैष एवमेकपदे कलाः प्रदर्श्य कनीत्रयमग्रहीत्। अस्माकम् इयत्पाठश्रमादि वृथा कृतम्। पूर्वं चेद् ज्ञातमभविष्यत् तत् तदैव वयमहनिष्याम। अथवा सम्प्रत्यपि एनं निराश्रयं रङ्कं हत्वा कनीर्ग्रहीतुं दातुं च स्वेच्छया किं न शक्नुमः ?। अस्मिन् कुरूपेऽज्ञातकुल-शीले च कनीत्रयीं न सहामहे, अन्यथाऽस्माकं सुनिश्चितौ हास्या-ऽभिभवौ भविष्यतः। बहूनां सबलानां चाऽस्माकं भूपालः किं करिष्यति ?। मायाकृताऽपराधस्य रङ्कस्यापि घाते न दोषः। अथवा घातोद्यतानस्मान् दृष्ट्वा चेद् वामनो नङ्क्ष्यति तदा रङ्कहतिदोषोऽपि न भावी, कार्यं च सेत्स्यति"। एवं परस्परं विमृश्य सर्वानुमत्या तेषु सुरपालाभिधो मुख्यः कुमारः स्माह—"भो वामन ! एकगुरुत्वेन त्वं स्वकीयोऽसि, ततो हितमुच्यते—नाट्यं मयूर-मर्कटकादिष्वपि सुलभं संभवेत्, गीतं कोकिल-चाण्डालादिष्वपि वरं प्राप्यते, वीणादिनादश्च चाण्डालैरपि साधु विधीयते;

परं वामन ! तेषु कश्चिद् राजकनीर्[1]नाऽर्हति, तथा त्वमपि आसां राजकनीनां योग्यो नाऽसीति किं न बुध्यसे ? । खरो रैघण्टां नाऽर्हति, श्वा क्षीरभोजनं नाऽर्हति, उष्ट्रो मणिहारं नाऽर्हति, तथा त्वमपि भूपंजा नाऽर्हसि । तद् वामन ! इमास्त्यक्त्वा काञ्चन अनुरूपां वामनां भज, कलार्जितैश्च द्रव्यैर्नटादिवत् सुखमाजीविकां कुरु, अन्यथा मरिष्यसि" । इत्युक्ते वामनः क्रुधाऽब्रवीत्—"रे ! किमद्याप्यात्मानं निर्भाग्यं निष्कलं च यूयं न बुध्यध्वे ? । मया यथा कलावादे यूयम् अकिञ्चित्करतां प्रापितास्तथैव रणेऽपि निर्जीवतां प्रापयिष्यध्वे । भोः ! भवतां मध्ये य एता मत्प्रियाः कटाक्षयिताऽपि स नूनं यमेन द्राक् स्वालयं नेतुं कटाक्षितः" । सुरपाल उवाच–'यद्येवं युद्धेऽपि दृढोऽसि तदस्त्रं गृहाण' । तदा वामनोऽवज्ञयाऽब्रवीत्–"दैत्यारिर्[2]हरो[3] वा, इन्द्रो वा, विश्वस्याप्यन्तकृद् यमो वा, लोकपालो वा यः कश्चिद् अतुलबलतां ख्यापयन् चेद् मद्दृगग्रे तिष्ठेत् तदिहाऽहं किञ्चिदस्त्रम् आददे[4], भुजयुगस्य च बलं दर्शये । मम प्रकटां चपेटामपि सुरेन्द्रोऽपि सोढुं न समर्थः, तद् गजपतेर्मम पुरः शशेषु युष्मासु अस्त्रग्रहः कीदृशः ? । मम तु भुजौ एव शस्त्रम्, पराक्रम एव कङ्कटः, भाग्यमेव च सहायः किं रे ! अद्यापि युष्माभिर्नाऽलक्षि ? । ततो यूयं सर्वे सम्भूय युद्धे सन्नह्यत, अस्त्राणि आदद्ध्वम्, युष्माकं पुनः कौतुकं दर्शये" । तदा ते समस्ता गिरा तं दुर्लक्ष्यं मत्वा परीक्षावसरे आकारितैः स्वस्वबलैः सह समनह्यन्त । अन्येऽप्येत्य रणावनौ योद्धुं यावत् प्रक्रमन्ते तावत् ते पश्चाऽपि मुण्डितशीर्षाः टोपाच्छादितमौलया ज्वलत्क्रोधाग्नयो

१ द्वितीयाबहुवचनम्–राजपुत्री । २ विष्णुः । ३ शङ्करः । ४ गृह्णामि ।

युद्धोत्सवमाकर्ण्य 'दुष्टचेष्टितं वामनं स्वहस्तेन वयं हनिष्यामः !' इति प्रतिज्ञाय दर्पाद् द्राग् आगत्य अग्रसैन्ये समापतन्। वामनस्तान् वीक्ष्य उपहसन् मुदाऽवादीत्–'भो भोः ! किं नु मुण्डितैः शीर्षैर्लज्जमाना इहागताः ? एतद् वरं कृतम्, अधुना तु तानि शीर्षाणि च्छित्त्वैवाऽहं वो लज्जां व्यपनेष्यामि'। इति वामनोक्त्या तेऽत्युद्धतक्रुधा बाणधोरणीममुञ्चन्, शेषा अपि समन्ततो व्योम शराऽऽपूर्णं व्यधुः। अथ वामनसिंहोऽपि श्रीपरमेष्ठिनः स्मृत्वा एकं महास्तम्भमुन्मूल्य तान् मृगान् प्रति दधावे। स च गजान् अद्रिशृङ्गाणीवाऽपातयत्, सादिनः पारापतानिवोच्छाल्य आकाशेऽभ्रमयत्, पत्तीन् गजो गोलकानिव उदलालयत्, कृपालुत्वात् कांश्चिद्भटान् अजिघांसन् अमूर्च्छयत्, केषाञ्चिद् रथान् पर्पटानिवाऽभाङ्क्षीत्, योधानां च धनु-र्मुद्गर-भल्ला-ऽसि-गदाद्यस्त्राण्यचूर्णयत्। स हि क्षणात् पृथ्व्यां क्षणादाकाशे क्षणाच्च सैन्यस्याग्रे भ्रमन् रिपूनाजघान, स्तम्भेन मुष्टिभिः पादाघातैश्च सर्वत आहत्य निषादि-सादि-पदाति-रथानपातयत्। अयं वामन उत्पतन् निपतन् दूरादायान् यांश्च कैरपि न लक्षितः, केवलं तद्घातैः पतितान् वीरानेव जना ददृशुः। अथ सुरपालाऽन्वितान् पञ्च मुण्डमुण्डकान् कुमारान् सोऽजिघांसुर्दण्डेन मृदु आहत्याऽमूर्च्छयत्, तांश्च द्वौ कक्षयोर्द्वौ स्कन्धयोर्द्वौ च पादद्वयान्तः क्षिप्त्वा उत्प्लुत्योत्प्लुत्य द्राग् न्यासमिव पत्नीनामार्पयत्। ताः पत्न्योऽपि तान् प्रेष्य-दासीभिर्बन्धयित्वा पत्यादेशात् कृतैः शीतोपचारैरुदजीवयन्। एवं तेषु गृहीतेषु रिपुसैन्यानि सर्वतोऽभज्यन्त, प्रणेशुश्च, यतः सर्वेषां हि प्राणाः प्रिया भवन्ति। अथ कनीनां तादृशा पत्या खिन्नः श्रीपतिनृपः प्राग् वामनं भटं निघ्नतस्तान् कुमारान् उपैक्षिष्ट, परं तेषु

मग्नेषु स सारसेनान्वितं शस्त्रैर्भृते रथे स्थितं स्वं सेनान्यम् एषां सैन्यैः सह व्यमिश्रयत् । तदा तद्वृत्ताऽवष्टम्भाश्चण्डपालादयः कुमाराः क्रुद्धाः स्वस्वबलान्विताः पुनर्योद्धुं डुढौकिरे । वामनोऽपि स्वशरीरमभितः स्तम्भं तथाऽभ्रमयद् यथा शत्रुशस्त्रमेकमपि नाऽलगत् । स च शस्त्राणि निघ्नन् सेनान्यं यावद् गत्वा तमंह्रिणा गृहीत्वा अलातवद् भ्रमयित्वा च क्वाऽप्युदक्षिपत् । तं सेनान्यं क्वापि दूरे पतितं पृथ्व्याहत्या च मूर्च्छितं पुरुषैरानाय्य वामनो द्राक् किञ्चिदचिकित्सयत्, शस्त्रभृतं च तद्रथं स्थित्वा आत्तशरासनः सारथिना जवाद् वैरिसैन्येऽभ्रमयत् । ततश्चण्डपालादयो गर्जन्तो बलदर्पोत्कटा भटाः शरासारं कुर्वन्तो वामनं रुरुधिरे, वामनोऽपि दूरापातिभिः शरैर्गजान् भटसंघातांश्चाऽभितो विध्यन् चिरं युयुधे । अथ वामनश्चण्डपालस्य रथं भङ्क्त्वा धनुश्छित्त्वा क्षुरप्रेण तुण्डमुण्डममुण्डयत्, सोऽपि शूरत्वाद् वेगादुत्प्लुत्य तद्रथमागत्य खड्गमादाय वामने घातं मुमोच; तदा वामनस्तं वञ्चयित्वा तत्करात् खड्गमाच्छिद्य मुष्टिघाताच्च मूर्च्छयित्वा तद्वस्त्रैस्तम् अबन्धयत् । ततो वीरो दृढरथो वामनं युद्धायाऽऽह्वास्त, तौ परस्परं शरैश्चिरं युयुधाते । अथ वामनः क्षुरप्रेण तस्यापि मुण्डममुण्डयत्, ततोऽस्मिन् लज्जया नष्टे रणबलः कुमारो योद्धुमलगत् । वामनस्तस्यापि तामेव गतिमकार्षीत् । एवमनया रीत्या सप्त कुमारकाः प्राणशन् । 'अथ वामनेन हतानामस्माकं पाश्चात्येषु ग्रासवृद्धेरसम्भवः, कीर्तिरपि तादृशी न प्राप्या, तत् किं मुधा म्रियामहे ?' इत्यालोच्य परेऽपि कुमारा जीवितमिच्छवः सबलास्त्रेसुः । वामनस्तान् समग्रान् ससैन्यान् समधीरयत् । ततो वामने रणदृग्व्यन्तरैः कृता पुष्पवृष्टिरभूत् । अथ स्वैरधीः श्रीपतिर्नरेन्द्रस्त-

था दृष्ट्वा सर्वाभिसारेण स्वयं यावत् सङ्ग्रामाय सज्जति तावद् हितकाङ्क्षिणो धीसखा आगत्य तमूचुः— "स्वामिन्! असमीक्ष्य विधानतः किमिदमौद्धत्यम्? मूर्खिम्णा किं मुमूर्षसि? चमूं च किं विनाशयसि?। अस्य हि वामनस्य पुरो जगतोऽपि भटास्तृणम्, तद् वामनेन हतस्य ससैन्यस्य तव का कीर्तिः?। जीवन्मुक्तोऽपि जामातुरास्यं किं दर्शयिष्यसि?। येनैकेन निरस्त्रेणापि क्रुद्धेनैवं ससैन्याः सर्वेऽपि कुमारा विडम्बितास्तस्य पुरो नु शक्रोऽपि कः?। राजन्! कनीनां भाग्यैरेव ईदृक्कला-बला-ऽऽभोगो वरो लभ्यते, अतो हर्षस्थाने मोहात् किं विषीदसि?। किञ्च एतत् शौर्यम्, एताः कलाः, ते च दान-दयादयो गुणा वामने न सम्भवेयुः, यतो गुणा आकृतिं विना न भवन्ति। तस्माद् दिव्यप्रकृतिः कश्चिद् महान् पुमान् विद्याशक्तिभिर्यथाकामं पृथ्व्यां क्रीडति, नूनम् एनमर्थं त्वत्कुलदेवताऽस्मिन् असकृत् पुष्पाणि वर्षन्ती एवं चोद्घोषन्ती समर्थयति। अथ प्रार्थितः सन्नयं दाक्षिण्यात् कला इव स्वकीयं सहजं रूपमपि स्फुटीकर्ता, ततस्तद्विषयेऽर्थ्यताम्"। नृपस्तेषां गिरो नयमार्गानुगाः परिणामहिताश्च प्रतिपद्य सद्यो जयतूर्याण्यवीवदत्, अमात्यादिभिश्च सह वामनं प्रति यावदभियाति तावद् बन्दिउद्घोष्यमाणगुणो गाथनैर्गीयमानश्च सोऽपि तेभ्यो महादानं ददद् रथादुत्तीर्णवान्, श्वशुरं च प्राणमत्। राजाऽप्याशीर्वादं दत्त्वा तमालिलिङ्ग। अथ नृपो हैममासनमध्यास्त वामनं चाऽध्यासयत्, समाजे च यथायोग्यमासीने नृपः सुखजयमप्राक्षीत्। वामनः स्माह—"हे महीन्द्र! अहं हि कलासु वादाद् रणं च नाऽजैषम्, किन्तु मम हृदि यः प्रभुः श्रीपञ्चपरमेष्ठिमन्त्रः स्थितः स इमानजैषीत्। यतः—

" ग्रहाः प्रसन्नाः स्युरथाऽमरा वशा, दुष्टा न भूपा न खलाः प्रभूष्णवः ।
नश्यन्ति विघ्ना विलसन्ति सम्पदो, हृदि स्थिते श्रीपरमेष्ठिपञ्चके" ॥ १ ॥

इति श्रुत्वा सर्वे पार्षदाः श्रीजैनधर्मम्, अगर्वितं तं, दृष्टप्रभावं च पारमेष्ठिनं श्रीमन्त्रं तुष्टुवुः । अथ वामनो बद्धान् चीरान् तत्राऽऽनाय्याऽमूमुचत् । ते च प्राग्मुण्डमुण्डाश्चण्डपालं दृष्ट्वा उपाहसन्, सोऽपि तान् प्रहसन् प्राह—'न दुःखं पञ्चभिः सह' । तत्प्रभृति चैष श्लोकपादो जनेष्वपि प्रावर्तत । अथ वामनो घातार्तं भट-करि-तुरङ्गादि सर्वं कण्ठगतप्राणमपि औषधीजलाद् उदजीवयत् । स हि कृपालुत्वात् प्रायोऽजिघांसुर्भटादिषु सापेक्षो घातान् व्यमुचत्, ततो बहवो न मृताः । अथ भूपाद्या जगुः—'वत्स ! यथा त्वया गुणाद्याः प्रादुष्कृतास्तथा त्वम् अदोऽनुरूपं रूपमपि प्रादुष्कुरुष्व' । सोऽपि तद्दाक्षिण्याद् औषध्या अकृत्रिमं रूपं दधौ । सर्वे तद्वीक्ष्य चित्रानन्दमया आसन्, वाद्य-गीतादिनादयुक् च जयकोलाहलो बभूव । अथ तमुपलक्ष्य कश्चिद् दूरादागतो बन्दी अपठत्—'हे क्षत्रवैश्रवण ! स्वर्णश्रीसारवर्षेण भुवि मेघवत् सर्वजनान् प्रीणन् दिष्ट्या दृष्टोऽसि' । अथ राज्ञा पृष्टः—'कोऽयं क्षत्रवैश्रवणः ?' । ततो बन्दी पद्मरथराजपुत्रीपाणिग्रहणादितः कमलप्रभभूपसुतापरिणयावधि प्रौढाऽवदात-चित्रं समस्तं तच्चरित्रं जगौ । तच्च श्रुत्वा विशिष्य मुदा-ऽऽश्चर्यमयी सभाऽभूत्, 'अस्मान् न सामान्यो जिगाय' इति कुमारा अपि मुमुदुः । ततस्ते सर्वेऽपि सम्भूयेत्यवदन्—'यदस्माभिर्विश्वाद्भुताऽपि अज्ञानादपराद्धोऽसि तद् हे अलक्ष्यस्वरूप !
१९ क्षमस्व' । सोऽपि तान् सापराधम् अक्षमयत्, परस्परं च प्रीतिरभवत् । कन्या अपि तत्सर्वं ज्ञात्वा स्वसंवेद्यां

मुदं दधुः । अथ नृपः कियत्कृतपरिवारं कुमारं स्वावासे चित्रशालायां बहुमानतोऽस्थापयत् । अन्येद्युर्भूपः कन्यापाणिग्रहणायाऽभ्यर्थयत । सोऽवक्-'कलत्रैर्मम प्रयोजनं नास्ति, तानि हि मम पुराऽपि सन्ति; एष कला-रणजयस्तु केवलं मम कौतुकाय । अपि च, अज्ञातकुल-शीलाय पुत्रीर्दातुं नाऽर्हसि, अतः केभ्यश्चित् कलावद्भ्यो राजपुत्रेभ्यः कन्याः प्रयच्छ, एषां च चिरं कलासु विहितं श्रमं कृतार्थय' । राजाऽवदत्-"सुरी 'साधु वृतम्' इत्युक्त्वा कनीस्तुभ्यमदात्, तव च कुल-शीले आख्यत्; तत् प्रार्थनां मा वृथा कृथाः" । एवं भूपो बलात्तेन प्रतिपाद्य विविधोत्सवैः सुलग्ने तदेकरागिणीः पुत्रीः पर्यणीनयत्, तस्मै च देश-दन्ति-पत्ति-रथा-ऽश्वान् सर्वोपस्करसंयुतं च सुन्दरं मन्दिरं ददौ । कुमारस्तस्मिन् नवोढाभिर्नवस्नेहरम्याभिस्ताभिः प्रियाभिः सह सुखं वसन् स्वैरं खेलति । देव-गुर्वादिसप्तक्षेत्र्यां तथाऽर्थिषु यथेष्टं द्रविणं दत्ते, तादृशि हि आये व्ययो युक्तः । अस्य भाग्य-बलादिभ्यो राज्ञोऽपि राज्यमवर्धत, अस्य च गुणस्तवा लोकेषु सर्वतोऽवर्धन्त । एवं विदेशेऽपि असहायोऽपि पुमान् यत् सर्वत्र जयश्रियं भजति तदहो ! पूर्वविनिर्मितानां पुण्यश्रियामनुभावो विभाव्यः ।

इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे नाट्यसुन्दरी-गीतसुन्दरी-नादसुन्दरीपरिणयननामा दशमः सर्गः ॥

## अथ एकादशः सर्गः ।

भुवनभावविभासनभास्करं, विकटदुर्घटसङ्कटजित्वरम् ।
विमलनाथमनन्तगुणास्पदं, जिनवरं जितमोहमहं स्तुवे ॥ १ ॥

अथ श्रीजयानन्दकुमारः क्रीडावनादिषु क्रीडन् धर्म-शर्ममयं कियन्तं कालं निन्ये । अन्येद्युः कुमारः क्रीडितुं हयैरुद्याने व्रजन् पराङ्मुखं, खरारूढं, सप्तधा मुण्डमुण्डम्, आक्रोशमुखरैः पुंभिर्मुहुर्मुहुस्ताड्यमानं, कोलाहलकरैर्डिम्भैर्धूलि-कर्करैर्भ्रियमाणं, भस्मना गुण्ठितं, मष्या लिप्तास्यं, व्रणजर्जरं, पुरःकद्रुत्कारिकाहलं, क्षामकुक्षिकं, नरकस्य वर्णिकामिव, पापमूर्तिमिव, ईदृशं नरं वध्यभूमिकां नीयमानमद्राक्षीत् । कुमारस्तं वीक्ष्य तलारक्षान् पप्रच्छ—'अयं कः ? किं च विडम्ब्यते ?' । तेऽप्यूचुः—'अयं दस्युर्निशि ईश्वरश्रेष्ठिनो गृहे खात्रेण सर्वस्वमादाय नश्यन् जागरितैर्जनैः कोलाहले कृतेऽस्माभिर्धृतः, लोप्त्रं च मोचितः । ततोऽधुना नृपादेशाद् हन्तुं वधोर्व्यां नीयते, चौरस्य गतिरेषैव, यतः पापस्य ईदृक् फलम्' । 'मयि सत्यपि कथमेवं भवेत् ?' इति ध्यात्वा कृपापूर्णः कुमारो राजपुंभ्यस्तं विमोच्य स्वगृहे नीत्वा स्नान-भुक्त्याद्यचीकरत् । ततः क्षणेनाऽऽकार्य पप्रच्छ—'भोः ! कस्त्वम् ? चौर्यं किं करोषि ?' । तदैष कुमारमुपलक्ष्य नीचाऽऽस्यो भिया न वक्ति । कुमारेण दत्ताऽभयः स गद्गदवाग् अवक्—'पाप्मनो मम

चरित्रं न श्रव्यमस्तीति किमाख्यामि ?' । अथ कुमारः स्वर-रूपाभ्यां तमुपलक्ष्य जगौ—'अयि ! सिंहकुमारोऽसि, बन्धो ! ईदृश्यवस्था किम् ?' । ततः स्नेहात् किञ्चिदालिङ्ग्य उपवेश्य च तमभ्यधात्—'तव पल्लीराज्यं कथमगात् ? कथं च शरीरे व्रणानि ?' । सोऽपि कपटे पटुः स्वापराधं निगूहन् उवाच—"बन्धो ! तदा निशि देव्या मन्दिरे त्वयि सुप्तेऽहं यामिकत्वं बिभ्रत् सिंहमैक्षिषि । त्वद्रक्षणोद्यतोऽहं तं वित्रासयितुं दूरमगाम्, ततश्च प्रत्यागच्छन् भ्रान्तोऽध्वानं नैवाऽलप्सि[1] । भ्रान्त्वा भ्रान्त्वा दिने जाते देव्यालयमुपागमम्, परं तत्र तु चिन्तामणिन्यासमिव त्वां नाऽद्राक्षम् । ततस्तच्छैलेऽहं मम पत्तयश्च अशूशुधाम, परं त्वां तु अम्बुधौ भ्रष्टं रत्नमिव क्वाऽपि नाऽलभामहि । ततस्त्वद्वियोगार्तोऽहं पल्लीं पालयामि । अथ रवेरुद्द्योतं विनाऽन्धकार इव त्वां विना महासेनः क्रमाद् ममाऽवनीं व्यापत् । तत ईर्ष्यया अहं तन्निजिघृक्षया[2] सर्वबलसहितोऽमुष्य पल्लीं गत्वा तेन सह युयुधे । महासेनस्य बलेन मम सैन्ये भग्नेऽहं सङ्क्रामयन् प्रहारजर्जरो बद्ध्वा तेन चारकेऽक्षेपि । ततोऽयं निरातङ्कः[3] पल्लीद्वयराज्यं भुनक्ति, मां च चर्मणा मठित्वाऽद्रिशृङ्गादधोऽक्षिपत् । अहं कर्मणा क्वचित् पलालपर्णजाले न्यपतं, न मृतः, परं शैलशिलाघर्षैः सर्वतो व्रणिताङ्गो जातः । अथ भाग्यवशाद् अकालेऽपि रात्रौ मेघो ववर्ष, तदा तच्चर्मोत्थगन्धादागतैः क्रोष्टुभिस्तच्चर्माऽभक्षि, अहं च मूर्च्छितो वातैश्चेतनामगाम्; यतोऽभाग्याद् भाविदुःखानां मृत्युरपि दुर्लभः । व्रणजर्जरोऽहं क्रमात्तं शैलमुलङ्घ्य ग्राम-पुरादिषु भ्राम्यन् भिक्षया च जीवन् कालेन इहाऽऽगाम् । देवलो-

१ अप्रापम् । २ तं निग्रहीतुमिच्छया । ३ भयरहितः ।

कुसदशेऽप्यस्मिन् पुरे त्र्यहं भ्राम्यन्नहं भिक्षामपि न प्रापम्, तद् निशि चौर्यमकार्षम्, क्षुधातुरो हि किं न कुर्यात् ?। अग्रतस्तव जीवितदायिना विदितम्। भ्रातः! भवपर्यन्तं तव दासेनाऽपि कथमनृणः स्याम् ?। धिग् मम पुरार्जितं वाचामगोचरं पापं, येनैवं पदे पदे दुरापदां पदं भवामि। यतः—

"अधमसङ्गति-दुर्मति-दुःस्थताः, प्रतिपदं वध-बन्ध पराभवाः।
प्रियवियुक्त्य-रिभीति दुरापदः, खलु फलानि हि दुष्कृतशाखिनः" ॥ १ ॥

एवं श्रुत्वा कुमारः कृपालुतया तमवदत्—'भ्रातः! विषादं मा कार्षीः, संसारे आपदः केषां न स्युः ?। एतद् राज्यम् एतच्च धनं यद् ममाऽस्ति तत्तवैव जानीहि, सैव हि लक्ष्मीर्या निजैर्भोज्यते'। ततः कुमार औषधीनीरैस्तद्व्रणानि व्यपानयत्, वस्त्रा-ऽलङ्करणान्यदात्, तं च लोके भ्रातृत्वं ख्यापयन् सर्वकार्येषु मानयन् स्वपार्श्वेऽस्थापयत्। 'धनाद्यैः सर्वं प्राप्यते, न तु कथञ्चन भ्राता प्राप्यते' इति ध्यात्वा कुमारदारैरप्यनुगतः। ततः कुमारस्तं स्वदेशेऽध्यकरोत्। कुमारदत्तमानात् स धनादिभिर्विलसन् लोकेऽपि मान्योऽभूत्। स्वस्याऽऽपदः स्मृत्वा कुमारस्य च सम्पदो दर्शं दर्शं वर्षाकालेऽब्दं दृष्ट्वा यवासक इव स शुष्यति। स स्वं रङ्कं कुमारं च सर्वाङ्गीणतेजोऽतिभास्वरं वीक्ष्य अर्कस्य घूकवत् कुमारस्याऽस्तम् ईहते, दध्यौ च—'चेद् मम सम्पद् नास्ति तदस्य तां किं न हरामि ? यतो वर्धमानं द्विषं को हि उपेक्षेत। अयमुपायात्तथा घात्यो यथा समस्ताऽपि लक्ष्मीर्ममैव स्यात्, स तु उपायः प्रायो भूपालसेवया साध्यः'। इति ध्यात्वा कुमारेण सह सभायां याति, कथावार्तया राजानं प्रीणाति, क्रमाच्च राजाग्रे एकोऽपि

याति । दुष्टस्य तस्यैतानभिप्रायान् कश्चन नांऽवेत्[1], यतः कर्दमस्याऽन्तर्निगूढान् कण्टकान् को जानाति ?। कुमारस्य विज्ञाः प्रियास्तु तस्य चेष्टितैर्दुष्टत्वमज्ञासिषुः, परं स्वानुरूपदृक् कुमारस्तु तदुक्तं न श्रद्दधौ । यतः—

"शिष्ट[2]-दुष्टा हि मन्यन्ते, गुण-दोषवतः परान् । पश्यत्यालोकमेवाऽर्कः, काकारि[3]स्तम एव च" ॥ १ ॥

लोकोऽपि दध्यौ–'चौरस्याऽप्येवं कुमारराड् मानं किं दत्ते ? अयं हि असादृश्याद् भ्राता न सम्भवेत्' । अन्यदा भूपः कुमारमप्राक्षीत्–'अनेकान् गुणाधिकान् त्यक्त्वा द्विपः शृगालमिवैनं किं मानयसि ?' । स ऊचे–'भ्रातृत्वात्' । परं भूपो लोकवत् तद् अश्रद्दधद् अन्यदा कौतुकाद् रहः सिंहमप्राक्षीत् । स च मायी प्राप्तावसरः स्वाशयानुगं जगौ–'प्राग् मयाऽस्य बहु उपाकारि, तद् मामयं मानयति । विशेषहेतुस्तु कुमारेण शपथदानतो निषिद्धत्वात् तवाऽपि च दुःखकृत्त्वाद् वक्तुं नाऽर्हः' । तदा राजा अधिकाक्षेपाद् आशङ्काशतसङ्कुल इत्यवक्–'चेत् किञ्चिद् ममापि मन्यसे तदैतदपि वद' । सिंहोऽवदत्–'कुमारस्य आज्ञातस्तवाज्ञा बलवत्तरा, स्वामिद्रोहोऽपि महत्पापं, ततः शृणु–विजयपुरे जयनाम्नो राज्ञो[4]ऽहं सुतो दाने अतिव्यसनी, ततः किञ्चन चौर्यादि कुर्वे' । नृपो दध्यौ–'अहो सत्यवाक् !, एष हि स्वस्यापि दोषं नाऽपह्नुते' । ततो भूधवाज्ञया सिंहोऽश्रतोऽवादीत्–"राज्ञः प्रसादपात्रं मधुगीतो गायनश्चण्डालकुलसम्भूतः कलावित् सुस्वरोऽस्ति, तस्य सुरगीताभिधानः सुतः पुण्यानुभावतो बाल्यतः सुभगः शूरः प्रज्ञावान् सुस्व-

१ नाऽजानात् । २ शिष्टाः परान् गुणवतो, दुष्टाश्च परान् दोषवतो मन्यन्ते । ३ काकोऽरिर्यस्य–घूकः । ४ जयनृपस्य ।

राग्रणीश्चाऽऽस्ते । कुकुलजेऽप्यस्मिन् पङ्कजे सौगन्ध्यमिव सौभाग्यादिगुणोच्चयः क्रमात् सर्वातिशायितां प्रापत् । तत्पिता प्रीतस्तं सर्वोत्तमां गीतकलामपाठयत् । तत एष मदग्रे गायति, अस्मै चाऽर्थितं दानं ददे । अन्यासामपि नाट्यादिकलानां पिपठीः स बहूनभ्यर्थयत, परं तम् अकुल्यं कश्चिदपि नो पाठयति । ततो देशान्तरे कला अध्येतुं जिगमिषन्नयं द्रव्यं विना पाठो न स्यादिति मामयाचत । 'अनेनाऽधीताः कला नूनं ममैव उपयोगिन्यः' एवं विचिन्त्य मयाऽस्मै कोटिमितं धनं ददे । ततः स क्रमाद् विशालपुरे प्रापत्, तत्र विद्याविलासाह्वस्योपाध्यायस्य महत्तधनदानेन वशीकृतस्य समीपेऽल्पैरेव वासरैस्तीव्रप्रज्ञावशात् सकलाः कलाः सम्यक् पपाठ, लोके च स्वस्य क्षत्रत्वमख्यापयत् । स दक्षत्वेन कस्माच्चिद् आराद्धाद् दृष्टरूपादिकारिणीः कतिचिदौषधीराप, भ्राम्यतां हि किं न सिध्यति ? । ततः पुरादिषु भ्राम्यन् कलौषध्यादिभिर्जनान् रञ्जयन् उपकुर्वंश्च सोऽर्थितं धनं लभते । एष कथञ्चन द्वौ नृपती अपि विमोह्य तत्सुते परिणिन्ये, यतः कला-भाग्य-गुणा हि कुलेक्षिणो न भवन्ति । मत्सङ्गादयं दानं दत्ते, तेन दानेनाऽप्यस्य दुष्कुलं छन्नम्, यतः स्वर्णश्रीवर्षुकेऽब्दे हि को मालिन्यं चिन्तयति ? । यच्चाऽस्याऽत्रागतस्यासीत् तत्सर्वं त्वं ज्ञातपूर्व्यसि । अथाऽहमभाग्यो व्रीडाकरमपि स्ववृत्तान्तं ब्रुवे–तातदेशोपद्रवकारिणं सबलं पल्लीराजं पर्वतस्थितं शत्रुं महासेनं निग्रहीतुं प्रयान्तं तातं विनयान्निवार्य, ससैन्योऽहमद्रितटे गत्वा युद्धाय तमाह्वयम् । सोऽपि गर्वितो भिल्लसेनायुक् शृङ्गनादैर्घैर्गुहा नादयन् गिरेरुत्तीर्य मया सह चिरं युयुधे । स मया भग्नः सन् अनेशत् । ततोऽहं पल्लीं ज्वालयितुं मौग्ध्याद् यावद् विषमोपलेऽद्रिकटके विशामि तावद्

गुहानिलीनः कृतान्तवत्क्रूरः शत्रुरकस्माद् भिल्लसैन्ययुग् वाणान् वर्षन् समुत्तस्थौ। ततो मम वलं भग्नं, विषमे हि को न भज्यते ?। अहं तु प्रहारजर्जरस्तेन वद्धा पल्ल्यां नीतः। अन्यदा चर्मणाऽऽवृतोऽहं श्रृङ्गात्पातितो यावदत्राऽऽगाम्, इत्यादि प्रभो ! त्वया श्रुतं भावि। ततोऽनेन प्रागनुपलक्ष्य मोचितः, पश्चाद्गृहे नीतः। उपलक्षितश्चाऽहं धनदानाद्यैर्वहुधा सत्कृत्य वहु मानितः। 'मत्कुलादि क्वापि न प्रकाश्यम्' इति दृढैः शपथैर्नियन्त्रितोऽहम् अनन्यगतिकत्वादत्रैवाऽस्थाम्। एप हि अविश्वासाद् मां वहु मानयति, स्वसमीपमेव च स्थापयति। हे स्वामिन् ! गोप्यमप्येतत् त्वदाज्ञैकवशोऽवदम्, परम् अस्मिन् अप्रसत्तिस्तु न कार्या, यतः सद्गुणे हि कुलं नेक्ष्यम्"। इति श्रुत्वा विस्मय-क्रोध-खेदसङ्कुलो नृपस्तं स्वेष्टसिद्धितो हृष्टं व्यसृाक्षीत्। अस्मिन् जैनेऽपि राज्ञि दुर्वलकर्णत्वम् अविमृश्यविधायिता स्वैरित्वं चेति त्रयोऽपि दोषाः सन्ति। ततो नृपः क्रुद्धो दध्यौ–"हा ! एतेन पापिना जामात्रा मदादीनामनेकेषां कुलं विटालितम्। हा ! कुलादीनां निर्णयमकृत्वैव मया रभसात् स्वपुत्र्यः कथं दत्ताः ? अस्य च पत्न्यौ कथं वुभुजे ?। अयं मायी स्वं क्षत्रवैश्रवणं ख्यापयन् पद्मरथ-कमलप्रभौ अपि धूर्तवदवञ्चयत। चेदियं निन्द्या वार्ता राज्यान्तरेषु प्रसरिष्यति तदा भूपा मां हसिष्यन्ति, कुलं वा मम त्यक्ष्यन्ति। तदयं ध्रुवमद्यैव निशि सद्यो घात्यः"। इति ध्यात्वा भूमिभृद् आप्तं पत्तिद्वयमाकार्य जगौ–'अद्य निशीथे हयारूढो यः पुमान् राजमार्गे एति स भवद्भ्यां द्राग् हन्तव्यः, इदं तु क्वापि न प्रकाश्यम्'। तमादेशं श्वानाविव अविचारं प्रतिपद्य तौ रात्रौ यथास्थानं सावधानौ तस्थतुः। अथ किञ्चिन्न्यूने निशीथे राजा नरेणाऽऽलो-

चकार्यमुद्दिश्य कुमारमेककं जनादाजूहवत्। सरलः कुमारो भूपाले विश्वास-विनयादिभृत् सद्यः शय्यां त्यक्त्वा गच्छन् वैर्याद् पत्नीभिरौच्यत—"स्वामिन्! नीतिशास्त्रविदोऽपि तव कथं सरलता? कोऽयमालोचावसरः? कश्चाऽयमाकारणक्षणः?। नरस्य नार्या वा एकान्तसरलत्वं न शस्यते, तेन हि कार्यसिद्धिर्न स्यात्, पश्चात्तापस्तु निश्चयेन भवेत्। राज्ञो हि अकालाऽऽकारणं दुष्टकारणं विना न सम्भवति, यतोऽरिष्टम् ऋते किं भूरुहां कचित् कुसुमोद्गमः स्यात्?। उक्तञ्च—

"अन्यच्चित्त नचश्चान्यत्, क्रियाऽन्याऽन्यच्च तत्फलम्। वेश्याजन इव क्ष्माभृद्, दुर्ज्ञानचरितो जने" ॥ १ ॥

तन्नृपे विशिष्य चाऽस्मिन्नृपे विश्वासं कर्तुं नाऽर्हसि, यतोऽस्मत्ताते सर्वगुणेऽपि त्रयो दोषाः ख्याताः। तस्मात् सर्वत्र तव मान्यं सिंहं प्रेषय, अन्यथा सदाध्येनं पोष्यमाणः कस्मिन् कार्ये समेष्यति?। अनुचरो हि तादृक्प्रस्तावार्थं पुरो ध्रियते"। नयमार्गानुगाभिस्तद्गीर्भिः प्रीतः कुमारराट् 'त्वां भूप आकारयति' इत्युक्त्वा सिंहं मुमोच। सोऽपि 'नृपो नूनं कुमारस्य घातोपायं मां प्रक्ष्यति, अहं च स्वेष्टं वक्ष्ये' इति हर्षाद् हयारूढो जग्मिवान्। अथ सोऽर्धमार्गे गतः सन् ताभ्यां पुंभ्यां युगपद् बाणद्वयेन विद्धः पपात, अहो हि मातृद्रोहफलम्। ततस्ताभ्यां 'तत्कार्यं कृतमस्ति' इति राज्ञो निवेदिते नृपो जहर्ष, प्रायः क्ष्मापतौ हि विवेको न भवति। यतः—

"विवेको दुर्लभः प्रायो, विशिष्य महतामिह। धनाढ्य-नृप-दैवेषु, स मनागपि नेक्ष्यते" ॥ १ ॥

---

१ विज्ञत्वात्। २ आह्वानाऽवसरः। ३ अशुभम्—उत्पातम्। ४ विना।

अथ तद्वचक्रमाकर्ण्य आरक्षका नरा अधावन्त, तं च कोलाहलं श्रुत्वा नृपो व्याहरां प्रैषीत्। ततः कैश्चिन्नरैः कुमारस्य तत्स्वरूपे निवेदिते पत्न्यो जगुः—'प्रभो! नृपे विश्वासजं फलमदर्शि?। स्वच्छप्रकृते! तदाऽस्मद्वचो यदि नाऽकरिष्यस्तदा हहा! अधुनाऽस्माकं का गतिरभविष्यत्?। हे नाथ! अतः परं सावधानेन स्थेयं, कश्चित् खलु खलः प्रविष्टोऽस्ति, राज्ञो वाऽऽशयं को वेत्ति'। कुमारोऽवक्—'युष्माकं हृत्सु सजातित्वाद् ब्राह्मी[1] खेलति, परं पुंस्पर्शभीतेव मां स्पृशत्यपि न। तद् यूयं मम प्रमाणं, यतः पतिव्रता दक्षाः स्त्रियः पुंसां सदा सहचर्यः श्रियो रक्षा धृतिर्मतिश्च'। इत्युक्त्वा ता आनन्द्य, अथ स निजान् नरान् 'यदि सिंहो जीवन् भवेत्तदाऽऽशु समानीयताम्' इत्युक्त्वा प्रैषीत्। ते नरास्तं श्वसन्तमानिन्युः; कुमारश्चौषधीजलैरुदजीवयत्, एवं हि कृपालुत्वं परीक्ष्यते। यतः—

"उपकारिणि वीतमत्सरे वा, सदयत्वं यदि तत्र कोऽतिरेकः?।
अहिते[2] सहसाऽपराधलुब्धे, सदयं यस्य मनः सतां स धुर्यः" ॥ १ ॥

अथ सिंहो दध्यौ—'ममाऽऽपदो मुहुर्मुहुर्मृत्युवन्ता अभवन्, ताश्च एष एव हरते, अतः परः कः पराभवः?। तद् मन्ये धाताऽन्यत् स्थानम् अनवाप्य सर्वान् पराभवान् निष्पुण्ये मय्येव न्यास्थत्। अथवाऽस्यैवाऽयं प्रपञ्चः, एतदर्थैव च सत्क्रिया, एष धूर्तश्चिन्त्यः, अतः परं तु मामयं मा च्छलतु'। इति नीचः स कुमारस्योपक्रियाम्[3] अपक्रियां[4] वेत्ति, भास्वरा अपि भानोर्भा घूकस्तमोमयीः पश्येत्। अथ कुमारस्तमुपजीव्य

१ सरस्वती। २ शत्रौ। ३ उपकारम्। ४ अपकारम्।

निश्चिन्तो निर्भयोऽशेत, शयानोऽपि सिंहः किं मृगेभ्यो विभेति ?। तस्य पत्न्यस्तु साशङ्काः कियतो भटानाहूय तदावास-प्रतोल्यादि सुरक्षितमकारयन्। अथ 'केनापि शत्रुणा सिंहोऽघाति' इति कैश्चिदुदिते नृपः खेद-सम्भ्रमसंभृतो दध्यौ—"अहो दैवं पराङ्मुखम्! किमेतत् संजातम्? अन्यथा प्रारब्धं कार्यं दैवेनाऽन्यथाऽकारि। घात्यो धूर्तो नैवाऽऽययौ, मम हितः पाल्योऽम्रियत, जने गोप्योद्घाटो जज्ञे, मम च कार्यं नाऽसिधत्। उक्तञ्च—

"विहितो गोत्रिविध्वंसो, राज्यं च रिपुभिर्हृतम्। अभक्ष्यव्रतलोपोऽभूद्, न च शान्तिं ज्वरोऽगमत्" ॥ १ ॥

अथोद्घाटस्य जातत्वाद् अयं स्फुटमेव घात्यः"। इति ध्यात्वा नृपः सन्नद्धान् सहस्रशः शूरान् प्रैषीत्, तांश्च जगौ—'सुप्तोऽसुप्तो वा जामाता घात्यः'। ततस्ते हि सर्वसामग्र्या सह कुमारावासमभ्ययुः, आयसमुद्गरैश्च यावद् अस्य प्रतोलीं भञ्जन्ति तावत् कुमारस्य बलोत्कटैर्युध्यमानैर्भटैर्महागजैः कासरा इव न्यरुध्यन्त। कुमारभटैर्योधयित्वा नृपभटा भग्नाः, ते च नंष्ट्वा प्रगे फेरवः कुञ्जान्तरिव नृपगेहान्तः प्राविशन्। 'स्वामिन्! दैववशात् कुमारस्य भटैर्वयं भग्नाः, भास्करस्य करा अपि किमन्धकारान् न घ्नन्ति ?' इति तैरावेदिते क्रुद्धो नृपो युद्धभेरीमवीवदत्, समस्तं च सैन्यं मेलयित्वा युद्धेऽसज्जयत्। कुमारस्तु प्रबुद्धः सन् प्रातःकृत्यान्यकरोत्, दरोज्झितैश्च स्त्रीभिः सह सारिभिः केलिं कर्तुं प्रारेभे। अथ पत्न्यः कटकस्य श्रुतिस्फोटं कटुं ध्वनिमाकर्ण्य भूपं ससैन्यमायान्तं सम्भाव्य भिया जगुः—'हे प्रिय! अयं केलिकलाकालो नास्ति,

१ महिपाः। २ प्रातःकाले। ३ शृगालाः। ४ किरणाः। ५ जागरितः। ६ भयरहितः। ७ सैन्यस्य।

समस्तं बलं मेलय, वैरिश्रियां च दुष्कालकरमस्त्रं कलय, कोपाटोपकटुर्नृपस्त्वां निग्रहीतुमुपैति। त्वद्भटैस्तद्भटा भग्नाः, अयं तु सैन्ययुग् दुर्भञ्जः, तद् भयभीतानामस्माकं केलौ मनो न रमते'। इत्याकर्ण्य कुमारः सलीलः सस्मितं जगौ—'याभ्यां भुजाभ्यामस्त्रं विनाऽपि बलैः प्रबलाः कुमारा विजितास्तौ मम भुजौ प्रगल्भेते, तत् प्रियाः! यूयं निर्भया दीव्यत[1]'। ततस्ता अपि क्रीडन्ति, स्त्रीस्वभावात्तु मानसे शङ्कां नो जहति[2], ततो भ्रूसंज्ञया बलमसज्जयन्। अथ सङ्ग्रामसामग्र्या प्लवपाटकं[3] कालेच्छुगोधावद् नृपं कौमारमन्दिरसमियान्तं वीक्ष्य सचिवाः सद्य आगत्य नत्वा च व्यजिज्ञपन्—'स्वामिन्! ससैन्यः कस्मात् क च प्रस्थितोऽसि? कं च द्विषं हन्तुं गच्छसि?'। राज्ञा सिंहोक्तिपूर्वके स्वाशये कथिते ते ऊचुः—"प्रभो! किमिदं खलगीरवधारणम्? यतः खला हि सतां निष्कारणवैरिणः। यदुक्तम्—

"शृणोति तस्मात्[4] परदूषणानि यो, वक्त्रा[5] समं सोऽपि पतत्यधोऽंहसा[6]।
तत्रापि दोषान् महतां तु वक्ति य–स्ततोऽप्ययं पापतमः शृणोति" ॥ १ ॥

मत्सरमात्रार्थः खलो महतां व्यसने पातयति, मक्षिकोद्वेजितः कुष्ठी किं सूर्यस्याऽस्तं नेहते?। सुधीस्तु महतो विरुद्धस्य वक्तुर्मुखं भञ्ज्यात्, नूनं हि तुदतः कण्टकस्येव उपानहं दद्यात्। यदुक्तम्—

"कण्टकानां खलानां च, सदृश्येव प्रतिक्रिया। उपानद्मुखभङ्गो वा, दूरतो वा विसर्जनम् ॥ १ ॥
शृणुयान्न खलोक्तं सत्, श्रुतं वा नाऽवधारयेत्। भुजगानां गरैः किं वा, घटवद् भाव्यते सरः!॥ २ ॥

---

१ क्रीडत। २ त्यजन्ति। ३ शबरपाटकम्, भाषायाम्–'वाघरीवाडो'। ४ खलात्। ५ वाचकेन। ६ अंहसा—पापेन।

पूज्यन्तेजोमयोऽप्यग्नि–स्ताड्योऽयःसङ्गतो यथा । मृल्लेपसङ्गमात्तुम्बं, यथा चाऽम्भसि मज्जति ॥ ३ ॥
महानप्यापदां पात्रं, खलसङ्गात्तथा भवेत् । यात्यतः शीघ्र वारीव, कर्करच्छिद्रिताद् घटात्" ॥ ४ ॥

तदसम्भाव्यं न वाच्यं, बुधस्तदुक्तं न शृणुयाद् न चाऽवधारयेत्, युक्ता-ऽयुक्तं वा विचारयेत्। 'ईदृग्गुणोऽपि जामाता दुष्कुलः, वध्यश्चौरोऽपि सिंहः सुकुलः' एतत् कः सचेतनः श्रद्दध्यात्?। अयं हि कोऽपि वासुदेवो वासुदेवसमो वा ध्रुवं सम्भवी, प्रभो! एतद्धि अस्य गुण-लक्षण-भाग्यानि ब्रुवते। तव कुलदेवताऽपि पुष्पवृष्टिं घोषं च कृत्वा एनमर्थं समवदत, तां मा वृथा कृथाः। यथा त्वं नरेषु राजा तथा विवेको गुणेषु राजा, अविवेकस्तु दोषेषु राजा, अतो मुहुर्मुहुः किं विमुह्यसि?। तद् राजन्! अविवेकः किमारब्धः? अविमृश्य कृतं कार्यं हि जीवितावधि दुःखकृद् भवति। यदुक्तम्—

"सगुणमपगुणं वा कुर्वता कार्यजातं, परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते–र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १ ॥

सहसा विदधीत न क्रिया–मविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः" ॥ २ ॥

त्वं तु वाढं संरभसे, स तु लीलया खेलति, तद्दृष्टैश्च त्वद्बलं भग्नं, तदस्य भाग्यं निर्णय। एष वीराग्रणीः ससैन्येनाऽपि त्वया दुर्जयः, सयूथेनापि महेभेन किं सिंहो जीयते?। यतः—

"हेलाऽपि कस्यचिदचिन्त्यफलप्रसूत्यै, कस्यापि नाऽलमणवेऽपि फलाय यत्नः ।
दिग्दन्तिदन्तचलनं धरणीं धुनोति, खात् सम्पतन्नपि लतां चलयेन्न भृङ्गः" ॥ १ ॥

किञ्च, तदा त्वत्सैन्यसजुषां कुमाराणां रणे स्वसेनाग्र्यं चमूपतिं तथा दृष्ट्वा किम् इममर्थं नाऽन्वभूः ? । यद्येष कृपां नाऽधास्यत्तदा एतेषु को जीवन्नायास्यत् ? राजन् ! त्वमपि राज्यभाक् कथमभविष्यः ? । कुमाराणां विडम्बनां दृष्ट्वा, वटुरूपेण चाऽनेन भूरिकोटिभटस्याऽपि पञ्चरथस्य राज्ञो यत्कृतं तद् वन्दितः श्रुत्वा जानन्नपि कथमेवं करोषि ? । पुनरनेनाऽखिले बले हते नृपेषु गर्हां प्राप्स्यसि, अस्मिन् क्रुद्धे तवापि जीवितेऽस्माकं मनः संदेग्धि । ततः स्वामिन् ! स्वस्याऽस्माकं च क्षेमं काङ्क्षन् इदं कर्म त्यज, स्वामिनि हते भक्ता हि सेवकाः किं जीवन्ति ?" । इति तेषां गिरा सिंहप्रोक्तं मृषा चिन्तयन् भूपो भीत्या तान् जगाद–'हे स्वामिभक्ताः सचिवा ! नयानुगाम् इमां युष्माकं वाचं सम्यक् श्रोतुमर्हामि । तथापि तेन पापेन तथोक्त्या ममाऽस्मिन् विनाशितं स्नेहं मनो न धत्ते । ततो यदि स्वामिभक्ताः स्थ तद् जामातरं कुलादि सम्यक् पृष्ट्वा ब्रूत यन्मम मनो विशुध्यति' । तेऽप्यूचुः–'ये उत्तमा विशेषतश्च ये शूरास्ते स्वयं स्वनामाऽपि नैव आख्यान्ति, तत् कुलादि कथं ब्रूयुः ? । तथाप्यनुलङ्घ्यात् तवाऽऽदेशाद् गत्वा, यद्ययं वक्ष्यति तदा प्रयत्नतोऽस्य कुलादि पृष्ट्वा वदिष्यामः' । इत्युक्त्वा नृपं नत्वा ते कुमारान्तिकेऽगमन् । विनयात्तं प्रणम्य रचिताञ्जलि अवोचन्–'कुमार ! त्वं दुर्विनीतद्विषां शास्ता, द्विधा गुरुषु भक्तिमान्, प्रणम्रेषु कृपालुः, आश्रितेषु चाऽतिवत्सलोऽसि । जङ्गमः कल्पद्रुरिव सर्वार्थिनां सर्वं दत्से । तत् स्वं तात-कुलादि ब्रूहि, अस्माकं

प्रार्थनां मा भाङ्क्षीः, यतः कोऽपि दुरात्मा भूपस्य निक्षेपमुदपादयत्। त्वया हि तात-कुलाद्यभिधाने कथिते सति नृपस्य विक्षेपो व्यपयास्यति, वयं च शर्मणैधिष्यामहे'। कुमारः स्माह—'सचिवाः! कस्यचित् प्रार्थनाभङ्गं नाऽकार्षं न च करिष्ये इति निजे हृदि धत्त। मम कुलं सङ्ग्रामे ज्ञास्यते, सन्तो हि तत् फलेनैव ब्रुवते न तु कण्ठेन। वैरिणः सर्वे क्षयं यास्यन्ति, भवादृशाश्च सुहृदः शर्मणा वर्धिष्यन्ते, तत् पार्थिवः सैन्य-शस्त्रयुक् सज्जीभूयाऽभ्येतु, मम तु भुजावेव सैन्य-शस्त्रे, अतोऽहं सदा सज्जोऽस्मि'। इति श्रुत्वा सकर्णास्ते तं नत्वा भूपमभ्ययुः, तदुक्तं च समस्तमाख्यन्। ततो नृपो विषसाद, अचिन्तयच्च—'इत्याद्याडम्बरं कृत्वा यथा तथा मुञ्चन् लज्जे, युद्धे तु कार्यसिद्धिं यशश्च न विभावये, अत उभयभ्रष्टोऽहं कामपि गतिम् अनाप्नुवन् किं कुर्वे?'। इति चिन्तातुरं नृपं बुद्ध्वा धीसखा अभ्यधुः—'स्वामिन्! अयं सङ्ग्रामे वज्रिणमपि तृणायाऽपि न मन्यते, तद् अकुतोभय एष आक्रान्तः किं स्वकुलाद्याख्याति?। अथवा कुलस्य पृच्छया किम्? गुणैस्तद् आख्यातमेव, यतो मणीनां मह एव रत्नाकरोद्भवं ब्रूते। तद् यदि देव आज्ञापयेत् तदाऽदीर्घरोपणं जगदुत्तमं तं कुमारं साम्नैव प्रसाद्याऽत्रानयामः'। ततो नानाचिन्ताकुलो नृपो यावत् किञ्चिद्वक्ति तावत् कुमारानुमतिं प्राप्य पुत्र्य उपागमन्। ताः पितुः पादौ प्रणम्य सम्भ्रान्ता निपुणं जगुः—'तात! कोऽयमाकस्मिकः सैन्यस्य संरम्भः?'। अथ राज्ञा सिंहोक्तादारभ्य समस्तवृत्तान्ते ज्ञापिते ताः प्रोचुः—"कोऽप्ययं दिव्यप्रकृतिर्जगदुत्तमः सत्य-शौर्य-धैर्यादिकैर्गुणैर्बाह्या-ऽऽभ्यन्तरैश्च चक्रिलक्षणैर्लक्षितो यदि अकुलीनो भवेत् तद् विश्वे कोऽपि कुलीनो नास्ति, तत् चौरखलवाचा एवं मूर्खिम्णा

किं मुमूर्षसि ?। सर्वार्थसाधकं नरचिन्तामणिं भाग्यात् प्राप्य अविवेकात् किं प्रतिकूलयसि? किं ग्रहिलोऽसि ?। अयं हि दुरात्मा दुर्जनः सिंहः पुराऽप्यस्माभिर्ज्ञातः, विनय-भक्तितश्चाऽसकृत् कुमाराय ज्ञापितः, परं स्वाजन्यतो निकृत्या[1] च रञ्जितः कुमारश्चन्द्रमाः कलङ्कमिव नैनं त्यजति । त्वयापि मानितोऽयं सिंहः त्वामपि आपदि अपीपतत्, नूनं कपोतो[2] यां शाखामधिरोहति सा शाखा शुष्यति । तत् स्व-परक्षेमम् इच्छन् एनं नरोत्तमं सान्त्वय । तात ! विविधं विमृश्य तव भक्त्यैव हितमुच्यते, आयतौ हितावहाः कटवोऽपि गिरो मान्याः, यत आमयहारीणि[3] कटून्यप्यौषधानि सेव्यानि" । नृपः स्माह—'सहसा कृतमप्यमुं संरम्भं लज्जा-मानाद्यैरेवमेव मोक्तुं न हि क्षमे, तद् हे पुत्र्यः ! यदि ताते युष्माकं भक्तिस्तत् पत्युः कथञ्चन कुलादि पृष्ट्वा आख्यात, यतः सर्वं भव्यं भवेत्'। ता अपि पैत्रं[4] वच ऊरीकृत्य गत्वा गाढस्नेह-विनय-भक्तिभिः स्वपतिं कुलादि पप्रच्छुः । सोऽप्युवाच—"मम भ्राता सिंहस्तत् कथयिष्यति'। ता अवदन्—'अनेनैव इदमसमञ्जसम् अकारि, तद् हे प्रिय ! अस्य पापस्याऽश्रव्यं नामाऽपि किमु गृह्णासि ?'। ततस्ताः पार्थिवाद् ज्ञातं सिंहोक्तं सकलं जगुः । तच्छ्रुत्वा कुमारोऽचिन्तयत्—'आः ! किमयम् ईदृक्खलोऽस्ति ? । एवं सत्क्रियमाणोऽप्ययं किमित्यचेष्टिष्ट ? । तदयं दूरतस्त्याज्यः, ताश्च पत्नीगिरो मान्याः'। इति ध्यात्वा अवदत्—'कान्ताः ! एवं चेद्, अयं खलो दूर्यताम् । अथैषा औषधी गृह्यताम्, अमूं पुत्रिकायाः शिरसि न्यस्य तामिष्टं पृच्छत । सा हि सकलं सम्यग् वक्ष्यति' । ततस्ताः साश्चर्यास्तां पतिदत्तां महौषधीं मुदाऽऽ-

१ शठत्वेन । २ भाषायाम्—'होलो' । ३ रोगहारीणि । ४ पितुरिदं पैत्रम्—पितृसम्बन्धि ।

दाय उपभूपमागत्य, सर्वपर्षदः समक्षं पुत्रिकायाः शीर्षे महौषधीं न्यस्य, तां पुत्रिकां कुमारकुल-पित्रादि पप्रच्छुः। अथ सा पुत्रिका मानुषीव जगौ, तद्यथा—

"[1]निजयपुराहिवनिजयसुअ, सिरिजयानंदाभिहाणुं। वरखत्तिअनिववंसमणि, गुणनिहि महिमनिहाणुं" ॥ १ ॥

एवं श्रुत्वा पार्थिवाद्याः सर्वे चमत्कृता जहृषुः, मङ्गलतूर्याणां च जयजयरवोद्धुरा नादा आसन्। नृपो युद्धसमारम्भं मुक्त्वा कुमारेन्द्रम् अक्षमयत्, पुन्योऽपि च क्षमिता हृदि मुदिताः स्वपदं जग्मुः। अथ नृपः सदस्यध्यास्त, मन्त्रिणश्चाऽप्राक्षीत्–'किमेतदिन्द्रजालम्? किं काऽपि पाञ्चालिका वदेत्?'। तेऽप्योचन्–'कुमारस्य भाग्याद् अथासौषधीबलाद् देवतानुप्रवेशाच्च अचेतना अपि निगदन्ति। तथापि यदि तव दुर्विदग्धं मनः सन्देग्धि तत् शतबुद्धेर्मन्त्रिणः सुतं चन्द्रबुद्धिं द्विजं ज्योतिरादिषु मर्मज्ञं निपुणं त्वयि च भाक्तिकं निजयपुरे प्रेष्य सर्वं सम्यग् निश्चयं कुरु'। इति श्रुत्वा नृपो मुदितस्तं शिक्षापूर्वं प्राहिणोत्। सोऽपि नवमेऽह्न्यागमं प्रतिज्ञाय द्रुतमचलत्, ससभिश्च पुरुषैर्युक्तो वेगवत्तरैः करभैर्योजनशताग्रस्थे तत्र पुरे सत्वरमगात्। स नैमित्तिकस्य वेषेण हस्तन्यस्तपुस्तको नृपादेशाद् वेत्रिणा राजसद्मनि प्रवेशितः। तत्र रत्नमयावनौ स्फटिकोद्दीप्रकुड्यायां सौधर्म्यामिव सभायां [2]सुपर्वाभैः सारालङ्करणा-ऽऽयुधैर्मन्त्रि-सामन्त-सेनानी-महेभ्य-श्रेष्ठि-पत्तिभिः सेव्यमानौ, मणिसिंहासनासीनौ, चामर-च्छत्रराजितौ, उदायुधैरङ्गरक्षकैरभितो रक्ष्यमाणौ, मिलितौ सौधर्म-शानेन्द्राविव दिव्यभूषणौ, नानादेशादागच्छत्प्राभृतौ, श्रिया सम्भृ-

---

१ निजयपुराधिपनिजयसुतः, श्रीजयानन्दाऽभिधानः। वरक्षत्रियनृपवंशमणिः, गुणनिधिर्महिमनिधानम् ॥ १ ॥ २ देवसदृशैः।

तौ, चन्द्र-सूर्ययोः पिण्डिताविव महश्श्रयौ, ईदृशौ राज-युवराजौ भ्रातरौ जय-विजयनामानौ चन्द्रबुद्धिरपश्यत्। स तदैश्वर्यं[5] वीक्षितुं नु भित्तिसङ्क्रमाद् बहुशोऽर्हामाशिषं ददौ। तथाहि—

"सर्वज्ञः शिवमातनोतु सविता[1] चारोग्यमिन्दुः श्रियं, भौमः[2] शत्रुजयं बुधश्च विशदं बोधं धियं गीष्पतिः[3]।
सौभाग्यं भृगुजः[4] शनिश्च विभुतां राहुः प्रतापोच्चयं, केतुः कीर्तिततीः सुखानि च गुरुस्तुभ्यं सदा भूपते!" ॥ १ ॥

ततो राज्ञा भूसंज्ञया दापितेष्वासनेषु परिवारयुतः स आसाञ्चक्रे। अथ भूभुजाऽप्रच्छि—'भोः! त्वं क्व वासी? कुत आगाः? क्व गन्ता? किं च वेत्सि?'। विप्र आचचक्षे—'अहं सुरङ्गपुरवासी नैमित्तिको देशान्तरे भ्रमन् युवयोर्द्रष्टुमागमं, युष्मदीक्षणाच्च कृतार्थोऽस्मि। अहं शास्त्रोदिताऽष्टाङ्गनिमित्तादिबलेन अतीता-ऽनागताद्यर्थं सर्वं प्रायो यथातथं वेद्मि'। ततो भूपोऽसौ बहुमानतः फलादि ढौकयन् प्राग् द्वि-त्राणि यानि तानि पृष्ट्वा तात्त्विकं पप्रच्छ—'देहमात्रेण भिन्नयोरावयोर्भ्रात्रोर्द्वौ सुतौ स्तः, प्रथमः सिंहसारोऽन्यश्च श्रीजयानन्दनामकः। प्राच्यो दुर्नयकारित्वाद् मया बलान्निष्काशितः, स्वाङ्गोद्भवोऽपि दुर्गन्धो मलः किं नैव त्यज्यते। अपरो नैमित्तिकेन राज्यार्हः सर्वसद्गुणश्च प्रोक्तः, स चाऽऽवयोरपरेषां च जीवितादपि वल्लभः कल्पवृक्षाङ्कुर इव यत्नतो रक्ष्यमाणोऽपि मायाविना सिंहसारेण भ्रात्रा प्रेम दर्शयताऽभ्यर्थ्य ऋजुर्वञ्चितस्तेन समं केनाऽप्यविदितोऽगमत्। ततो भृशं गवेषणात् तौ श्रीविशालपुरे ज्ञातौ, तत्र च कलापाठं श्रुत्वा कियत्कालमुपेक्षितौ। अथ कालान्तरे तौ क्वापि जग्मतुस्तन्न बुध्यते। सिंहसारेण तु

१ सूर्यः। २ मङ्गलः। ३ गुरुः—बृहस्पतिः। ४ शुक्रः। ५ ऐश्वर्यम्।

प्रयोजनं न, परं श्रीजयानन्दकुमारस्तु सर्वतः शोधितोऽपि समुद्रे रत्नवन्न लेभे, तेनाऽऽवां बाढं दुःखितौ निमित्तज्ञादिभाषितैस्तन्मिलनाशया श्वासमात्रेण जीवावः, यतः सर्वे निमित्तं शकुन-स्वप्ना-ऽङ्गस्फुरणादि देवतादीन्यपि चाऽस्माकं तत्क्षेम-मिलनादि ब्रूयुः । परं सोऽद्यापि नाऽऽयातः, शुद्धिमात्रमपि नाऽवाप्यते, यद्यायाति तदा तं राज्ये न्यस्य आवां वने तपः कुर्वः । अयं भ्राता स्नेहात् सहैव तप इच्छन् राज्यं न लाति, ततोऽस्मिन् तपावयसि याति सति निरन्तरं विषीदावः । यतः—

"गतमप्येति यद्द्रव्यं कुटुम्बं सपरिच्छदम् । गजा-ऽश्वाद्यपि, न त्वेति कथञ्चिद् मानुषं वयः" ॥ १ ॥

तस्माद् हे ज्ञानिन् ! श्रीजयानन्दो जीवन्नस्ति नास्ति वा ?, अस्ति चेत् क्व कदा कथं च एता ? इत्यादि सम्यगखिलं वद" । इत्युक्त्वा तौ स्मृतपुत्रवियोगौ अरोरुत्ताम्, दग्धोऽश्मा जलयोगतः पुनः किं न धूमायते ?" । ततश्चन्द्रबुद्धिर्लग्न-ध्यानाद्याडम्बरं राजकुले मान्यं मत्वा क्षणं तं कृत्वा नृपौ प्रत्यवदत्—"महान्तौ युवां प्राकृताविव पुत्राऽऽर्त्या किं विषीदथः ? पर्वता हि वायुना पादपा इव न चाल्यन्ते । हे स्वामिनौ ! शास्त्रबलेनाऽहम् इत्यज्ञासिषम्—'तुरीयभुवनस्य स्वामियोगाद् युवयोः पुत्रः सुख्यस्ति, दशमस्य स्वामिदृष्टित्वाद् राज्यवान्, सप्तमस्य ताद्ग्ग्रहत्रयीदृष्टेश्च नृपपुत्रीत्रयीपतिर्वर्तते' । एवं भ्रातृयुगादयः श्रुत्वा मुदा भूपोऽवदत्—'निदांवर ! तर्हि क्वाऽस्तीति वद' । तदा चन्द्रबुद्धिराडम्बरं कुर्वन् मेषराश्याद्यनुक्रमात् स्फुरदोष्ठं श्लोकान् वदन् 'लक्ष्मीपुरेऽस्ति' इत्यूचिवान्, पुत्रिका-भूपवाचां च संवादेन निर्णयात् कुमारस्य वयः-संस्थान-वर्णाद्यमपि प्रतीत्यर्थं सोऽब्रवीत् । ततो नृपौ हर्षमयीभूय तस्मिन् फल-पुष्प-मणि-स्वर्ण-वस्त्रैर्नव्याम्बुदौ

इव वद्धपतुः । अथैताभ्यां विसृष्टश्चन्द्रबुद्धिस्तदौदार्यं तत्रागमे च स्वभाग्यं श्लाघमानस्ततो निरगात् । सपरिच्छदः प्रत्यागच्छन् स नवमेऽह्नि लक्ष्मीपुरे श्रीपतिं नृपमनमत् । भूभुजा बहुमानात् पृष्टश्चन्द्रबुद्धिर्हर्षोल्लसत्तनुस्तं वृत्तान्तं तद्दानं च पृथक् पृथक् सर्वं जगौ। केचिज्जगुः—'कुमारस्य हि दानलीला चित्रकृद् नास्ति, यतः पैतृकं प्रायशः सूनवोऽनुहरन्ते'। केचित्तु सहासम् आचख्युः—'अखिलः किलाऽयं संरम्भश्चन्द्रबुद्धेः कर्मभिरर्थहेतवे एव बभूव'। अथ विस्मया-ऽऽनन्द-खेदाद्यैर्बहुभी रसैर्भवद्हृदयसङ्कटो नृपो यावत् किञ्चन न वक्ति तावद् द्वाःस्थेन विज्ञप्तः—'हे स्वामिन् ! जयराजस्य प्रधानपुरुषाः कुमाराह्वानहेतवे गोपुरे प्राप्ताः सन्ति'। भूपतिः स्माह—'तान् मुञ्च'। ततस्ते सवेत्रिका दिव्यालङ्कार-नेपथ्या आजग्मुः, भूपं नत्वा प्राभृतं च मुक्त्वा निजाऽऽकारादिभिः पार्षद्यमोदिनो नृपादिष्टेष्वासनेषु आसामासुः। प्रीतिं दर्शयता राज्ञा श्रीराज-युवराजादीनां क्षेमप्रश्नेन मोदितास्तेऽप्येवं व्यजिज्ञपन्—"राजन् ! सपरिच्छद-पौरयोस्त्वत्सुहृदोर्भद्रमस्ति । ताभ्यां स्नेहरसायनं वाचिकं ज्ञापितं, तच्छृणु—'अस्माकं जीवितसदृशः श्रीजयानन्दकुमारो महाबुद्धिना त्वया महोन्नतिं प्रापितः, स च त्वद्गृहे बहुमानपुरस्सरं तिष्ठतीति नैमित्तिकगिराऽस्माभिर्ज्ञातम्, ततस्त्वयाऽस्मत्कुलजैः सह आचन्द्रा-ऽर्कं प्रीतिः स्थिरीकृता । अथाऽयं प्रेष्यतां येन प्रीतिक्षीरे सिताप्रक्षेपः स्यात्, तत्पानाच्च वियोगाऽऽर्तिप्रतप्तानां नः शीतिमा भवतु । यावज्जीवमविच्युतिर्हि तवोपकाराऽलङ्कारः कुमारपोषणमाणिक्ययोगाद् अनर्घ्यतां प्राप्तः । आवयोस्त्वं तृतीयो भ्राताऽसीति विनिश्चिनु, ततोऽस्मत्सदृशमखिलं कार्यं सर्वदा निवेद्यम्"। इत्याकर्ण्य नृपोऽवदत्—'भो भो ! भवद्वाक्सु-

धा नव्या, या पिबतां सतां स्वस्मिन् तृष्णां वर्धयते । कुमारप्रेपणाद्यर्थं सर्वं साधु भविष्यति' । इत्युक्त्वा साररत्नाद्यं तड्ढौकनमगृह्णात् । ततो भूपस्तान् सम्मान्य उत्तारकादिचिन्तां कृत्वा मिलनोत्सुकान् चेत्रिणा समं कुमारस्य सौधे प्रैषीत् । प्रतिहारनिवेदितास्ते सद्योऽन्तःसदसं गत्वा आनन्दमेदुरस्वान्ता यावत् प्रणमन्ति तावत् कुमार उत्थाय पृथक् पृथक् चोपलक्ष्य मुदाकुलस्तानालिलिङ्ग । तत आसनेषूपवेश्य पितृव्य-पित्रादिवर्गीय भद्रमप्रश्नयत् । तेऽवदन्–'सर्वांस्तान् भद्रं श्लिष्यति, केवलं त्वद्वियोग एव बाधते, इति लेखेन जानीहि' इत्युक्त्वा तस्मै लेखमार्पयन् । कुमारः पितृवर्गवियोगादिस्मृतिदुःखाश्रुभिः प्लुतं तं मूर्ध्न्यारोप्य उन्मुद्र्य च समभिवाचयत् । तथाहि–"स्वस्तिश्रीमत्सर्वविद्वंयं नत्वा विजयपत्तनाद् भ्रातृश्रीविजययुक् श्रीजयो राजा लक्ष्मी-विलास-प्रौढमन्दिरे लक्ष्मीपुरे पुरे श्रीजयानन्दं कुमारं सस्मयं स्नेहादालिङ्ग्य आदिशति–अत्र कल्याणं, तत्रत्यं च ज्ञाप्यम् । अपरं च, वत्स ! अस्माकं राज्यस्य च त्वं जीवितमसि । यत् सिंहसारेण समं करिणा हरिरिव केनाऽप्यविदितो गतोऽसि तत्तव स्वलसङ्गमो न युक्तः । यच्च सम्पदम् अधिरूढोऽपि अस्माकं न स्मरसि, अयं जगतोऽपि स्वभावः, परं महतां तु न युज्यते । महान् हि महत्त्वं प्राप्य पितॄन् अधिकं प्रीणयति, किं विधुरुदयं प्राप्य सागरं नोल्लासयति ? । वयं तव वियोगतो दिनानि कष्टतो नयामः, जरद्गवा इव च राज्यधुरां वोढुं नाऽर्हामः, अतो हे वत्स ! महोक्ष इवाऽत्र साहाय्यं कर्तुमर्हसि । यदि तवाऽस्मासु भक्तिरस्ति तद् अस्मान् दृष्ट्वा पयः पिबेः" । इति लेखस्य तत्त्वार्थमवबुध्य

सुदुःखितः कुमारराड् दध्यौ—'अहं ही ! पितृदुःखाकरोऽभवम् । वरं हि अचेतना[1] अपि वृक्षा ये पत्रपल्लवैः सच्छायाश्चण्डांशुकरतापितान्[2] पान्थान् ग्रीष्मे प्रीणयन्ति, अहं तु सम्पदाढ्योऽपि वार्द्धके स्वपितॄनपि न सुखाकरवम्, किन्तु वियोगतो दुःखाकार्षम् । तत् सम्प्रत्यपि आशु गत्वा पितॄन् सुखाकुर्वे' । इति ध्यात्वाऽतिथिभिः सह स्नानादिकृत्यानि निर्ममे । अथ वेत्रिणाऽस्मिन् निखिलेऽपि स्वरूपे निवेदिते राजा दध्यौ—'कुमारः स्वमिलनोत्सुको द्राग् गन्ता, यतश्चन्द्रबुद्धयुक्तिसंवादिवाग्भिर्निजनरैः पितृव्य-ताताभ्यामाहूतोऽप्ययं कथमत्र तिष्ठेत् ?। अयं मम राज्यस्य वृद्धि-शोभाकरोऽभवत्, न जानेऽतः परं वैरी स्वजनो वा भविष्यति । अस्य सर्वाङ्गसुभगस्य दर्शन-प्रणयो-क्तिभिः कर्मभिश्च या मम सुखाकृत् प्रीतिरभूत् सा पुनः क्व ?। ही ही ! प्राप्तश्चिन्तामणिर्दुर्धिया मया हारितः, अज्ञानादमृतं त्यक्तं यद् ईदृक् प्रतिकूलितः । अहो ! यं महाप्रभावम् अचेतनाऽपि पुत्रिका स्तौति तमपि विश्वभूषणं पुंरत्नं नाऽहमज्ञासिषम् । बहुराजविरोधादि पुत्रीवैधव्यजाऽऽपदः पुंचिन्तामणिहानिं च सर्वमुपेक्ष्य हा ! मया किं कृतम् ?' । इत्यादिचिन्ता-सन्ताप-दुःखसङ्घट्टनावशाद् मूर्च्छितः सन् नृपः सहसा आसनात् क्षितावपप्तत् । तदा व्याकुलैर्मन्त्रिभिः शीतोपचारैर्नृपः सज्जितः, पृष्टश्च जगाद—'अहो पार्षद्याः ! क्रूरः कुकर्मकृद् अविवेकः कृतघ्नश्च जगत्यपि मत्तो नाऽन्यः । तद् ईदृक्कुकर्मकर्तुर्मम मृत्युं विना शुद्धिर्नास्ति' । इत्युक्त्वा खड्गमा-

१ स्थावराणामस्फुटचैतन्याद् अचेतनत्वेन विवक्षा । २ सूर्यकिरणसंतप्तान् ।

कृत्य च्छेत्तुं निजे गलेऽमुञ्चत्, तदा लब्धलक्षाः सचिवास्तं वेगादुद्दाल्य लङ्गः । अथ शतबुद्धिरवक्-
"हे राजन्! किमेतदसमञ्जसम्?। त्वं हि विश्वस्यापि जीवातुरसि, नयसम्पदामाधारोऽसि, धर्मस्याप्युन्नतेः
कर्ताऽसि, स्वामिन्! मौग्ध्यतः किं मुमूर्षसि?। यतः-

"कस्य भ्राम्यति नो बुद्धिः, कर्मणा को न खण्डितः?। नाऽमुञ्चद् भ्रातरं[1] हन्तुं, चक्रं किं भरताधिपः? ॥ १ ॥
शास्त्रज्ञोऽपि विविक्तोऽपि, को न मुह्यति कर्मणा?। तस्यैव[2] हि वशाद् विश्वं, निन्द्या-ऽनिन्द्यप्रवृत्तिभाक्" ॥ २ ॥

हे राजन्! मृत्युना पापस्य शुद्धिर्न स्यात्, सा हि शुद्धिस्तपसा स्यात्, यतः पापं कर्म आत्मगतं, मृत्युस्तु तनुमात्रहृत्। तद् गुरूक्तेन प्रायश्चित्तेन आत्मानं शोधय, तच्च[3] जीवत एव स्यात्, ततः प्रभो! चिरं जीव"। इत्युक्तोऽपि नृपः किञ्चित्स्वस्थीभूतोऽपि नानाविकल्पार्तो रुदन् भोजनाद्यपि नेच्छति। अथ तत्स्वरूपं पुत्र्यो ज्ञात्वा तत्रैत्य तातपादौ च प्रणम्योचुः-'पितः! कैषा तवाऽनौचिती?। महतां हि अतिहर्ष-विषादौ क्वचिन्न युज्येते, यतो वार्द्धेश्चया-ऽपचयजौ उल्लास-सङ्कोचौ न स्तः। प्रभो! अत्र तवाऽल्पोऽपि दोषो नास्ति, स हि खलस्यैवाऽस्ति, दृढोऽप्यद्रिर्नित्यं प्रवहताऽम्बुना भिद्यते'। तदा नीचैर्नम्रो नृपोऽवादीत्-'हे पुत्र्यः! भवतीनामास्यं दर्शयितुं द्रष्टुं च न क्षमे, तद् दूरगा भूत। यः स्वपुत्रीवैधव्यमुपेक्ष्य प्रवृत्तः सोऽहं भवतीनां जामातुश्च किमास्यं दर्शयामि?'। ता व्याजह्रुः-'तात! मुधा

१ बाहुबलिम्। २ कर्मणः। ३ प्रायश्चित्तम्।

कोऽयं खेदः ?। वयं त्वयैव सम्पदां प्रौढिमारोपिताः। यदि त्वं छात्रपाठनादिषु धनव्ययं नाऽकरिष्यस्तद् नो दुस्तराः प्रतिज्ञासिन्धूः कोऽतारयिष्यत् ?। तत् तात ! नो विश्वोत्तमस्य पत्युर्दानाद् मोदस्व, विधेर्वशम् एकं स्खलितं कृत्वा किं खिद्यसे ?'। राजाऽऽह–'प्रजाः कुप्रजाः स्युः, परं पितरो हि कुत्सिता न, इति व्यत्यासयन्तीभिर्युष्माभिरहं तोषितोऽस्मि। तथापि जामातुर्लज्जे'। इति भूभुजा प्रोक्ते ता गत्वा तत्स्वरूपं सर्वमाख्याय पतिं प्रैषयन्। उदारचरितः स द्रागागत्य भूपतिम् आनत्य लज्जानम्राननस्य तस्य वैलक्ष्यं हर्तुमब्रवीत्–'राजन् ! कन्यात्रयी-राज्यदान-प्रौढि-प्रथामयोऽयं मयि त्वदुपकारो विधिप्रेरितखलोत्थिताद् एककादस्मात् स्खलितात् किं कदापि कलुषतां धत्ते ?। विज्ञा अपि भ्रान्त्या भवे के न स्खलन्ति ?। चित्तोपक्रमजं हि पापम् अनुतापाद्यैर्विलीयते, ऋषभपुत्रयोरन्योन्यघातोपक्रमजपापवत्। तद् राजन् ! मुधा किं ताम्यसि ? स्वकार्याणि कुरुष्व, त्वयि सुस्थिते सर्वाः प्रजाः सुस्थिताः स्युः'। तद्वचनैर्जातानन्दो नृपोऽवदत्–'वत्स ! त्वद्वाक्सुधावर्षाद् मम दुःखतापोऽगमत्। मत्समोऽविवेकी न, त्वत्समश्च भाग्यवान्नास्ति, तथापि अनर्थदं खलसंसर्गं मा कार्षीः'। कुमार 'ओम्' इत्युक्त्वा नृपं च नत्वा स्वधाम्न्यगात्। तत इच्छां विनाऽपि नृपः स्नान-पूजा-भुक्त्यादि अकरोत्, राज्यचिन्तादि अकुर्वन् स्वपापशुद्धिं चेच्छन् गुर्वागमं प्रतीक्षमाणोऽस्थात्। अथ भूपः सिंहस्य खराऽऽरोहणादिस्तेनरीत्या वधाय भटानादिदेश, तेऽपि तथैवोपाक्रमन्त। तदा कुमारस्तातदुःखसम्भवादिभिर्भूपं धीसखैर्विज्ञाप्य तम् अमूमुचत्। अन्येद्युः प्रधानैर्भृशं प्रेरितः श्रीजयानन्दः पितृव्यादिमिलनोत्कण्ठुलो गन्तुं धराधवम् आपप्रच्छे।

सोऽप्यूचे–'चेत्त्वं यास्यसि तद् मम प्राणैः समं व्रज, त्वां विना मम पापोद्वेजिता इव प्राणा न तिष्ठन्ति'। ततः कुमारो भीतोऽवक्–'त्वामसमाहितं मुक्त्वा न यास्यामि, त्वत्तः पित्रादयो न हि विशिष्यन्ते'। ततस्तं नत्वा स्वसौधे आगतः, दध्यौ च–'सम्प्रति चेद् यामि तदयं स्नेहाद् विशिष्य नवदुःखभाग् म्रियते। राज्येऽप्यस्याऽधुना स्पृहा तादृग् नैव विभाव्यते, परं मद्गुणवार्ताभिरेव समाहितस्तिष्ठति। तदधुना एनमधिकं खिद्यन्तं मोक्तुं नैवाऽर्हामि। सिंहसारस्तु राज्यार्थमेव एवं पापमकरोत्, पितृ राज्यस्य योग्यः पुत्रो भाति, अतः पराभाव्यं किमाददे ?। तदमुमेव प्रेषयामि, एवं कृते खलः सत्कारितो भवति, दूनश्चाऽयं मुदितो भविष्यति'। एवं ध्यात्वा सिंहमाचख्यौ–'भ्रातः! त्वं याहि, पैतृकीं राज्यश्रियं भुङ्क्ष्व, अहं तु तत्र निःस्पृहोऽधुना नैष्यामि'। इत्युक्त्वा तं व्यसृजत्, प्रधानानपि युक्तिभिः प्रज्ञाप्य आवर्ज्य च पितृभ्याऽर्हां विज्ञप्तिं समर्प्य व्यसृजत्। अथ ते कुमारऋद्धि-सत्कार-स्नेह-वाग्-वाचिकादिभिः प्रीताः सिंहयुता विजयपत्तने जग्मुः। तत्र नृपौ नत्वा कुमारस्य वाचिकानि तदनागमनहेतुं श्रीपतिनृपाग्रहं चाऽवदन्। ततश्च ताभ्यां सिंहसारो यथार्हमालाप्य मोदितः। अथ राजा प्रधानाऽर्पितविज्ञप्तिमवाचयत्। तथाहि–"स्वस्ति-श्रीजिनमानम्य विजयपुरे पूज्यमाराध्यं पितृव्यं पितृश्रीविजयादिपरिवारेण निषेव्यं श्रीजयाभिधं भूपालं लक्ष्मीपुराह्वात् पुरात् श्रीजयानन्दकुमारो भक्त्या साष्टाङ्गं प्रणम्य मौलौ विरचिताञ्जलिर्विधिना विनयनम्रो मुदाऽदो विज्ञपयति–पूज्यपादानां प्रणिधानानुभावतो मम श्रेयोऽस्ति, वः श्रेयो मम हृद्वारिधौ ऐन्दवं महोऽभवत्। अत्रत्यं कार्यं प्रसाद्यम्। अद्य भवतां लेखवारिदो विप्रयोगाऽग्नितापितं मां स्नेहाक्ति-

सुधावर्षेण सिक्त्वा उदजीवयत्। यच्चाऽग्रतोऽपि जीवामि तत्र खलु हृदयस्थितपूज्यपादपद्मशैत्याऽनुभावजः प्रभावः प्रगल्भते। मद्वियोगाऽक्षमं श्रीपतिनृपतिं प्रज्ञाप्य स्वल्पैरेव वासरैः पूज्यपादाञ्जान् प्रणंस्यामि। तावत् तत्स्थानमुद्दिश्य जातभाग्योदयः सिंहसारः कुमारोऽधुना गुणसम्पदे प्रहितोऽस्ति। सततं मम शिक्षा पित्रादीनां च नतिः प्रसाद्या, इति मङ्गलम्"। इति कुमारस्य विज्ञप्त्याऽनागमेन च बान्धवौ सपरिच्छदौ युगपद् हर्ष-विषादौ प्रापतुः। अथ भूभुजा ते प्रधानपुरुषाः पृष्टाः सन्तः कुमारस्य पद्मरथभूपालपुत्रीपाणिग्रहणादितो धीरोदात्तावदातयुक् चरित्रं, सिंहस्य च तादृग्दुःखादि यथा परिच्छदाद् ज्ञातं तथा जगुः। एतच्छ्रुत्वा तौ सपार्षद्यौ नृपौ चित्रा-ऽऽनन्दमयौ एकं प्रोच्चैः प्रशशंसतुः, अन्यं च मनसा निनिन्दतुः। अथ सम्मान्य ते विसृष्टाः सन्तः ससिंहाः स्वगृहाण्ययुः, भूपालावपि समयोचितकार्याणि चक्रतुः। अन्येद्युर्जयराड् दध्यौ–'मम तपोऽर्हं वयो याति, भ्राता च राज्यं न गृह्णाति, योग्यस्तु सुतो नाययौ। अथवा कुमारः स्वभुजोपार्जितश्रीयुग् राज्यार्थं कथमेति ? यतः सिंहः परोपार्जितं मांसं फेरुवद् न भुङ्क्ते। अथवा पश्चादपि स एवाऽत्र राजा भावी, ज्ञान्युक्तं विसंवादि न भवति, यतस्तस्योक्तं सम्प्रत्ययमस्ति। सिंहो राज्यार्थमेव प्रहितः, तत एवं सम्भाव्यते राज्यार्थमेव तेन कुमारेऽनुचितं कृतम्। सिंहोऽसकृद् मरणान्ताभिरापद्भिः प्रघट्टितोऽधुना किञ्चिद् अदोषो भावी, तदधुनाऽस्मै राज्यं ददे। तावदत्र अस्य सुशिक्षार्थं बान्धवं स्थापयामि, चेत् प्रजाऽन्यथको भावी तत् कुमारराड् न सोढा'। इति हृदि विचिन्त्य राजा सिंहं राज्ये न्यवीविशत्, भ्रातरं च प्राग्वदभ्यर्थ्य कियद्दिनमस्थापयत्। सिंहोऽपि राज्यसूत्रार्थं तं

पितृव्यमभ्यर्थ्याऽस्थापयत्, सोऽपि दाक्षिण्यात् सूनोश्च मिलनाशया तस्थौ । श्रीमान् जयनृपो वने गत्वा महाजटगुरोः पार्श्वे रत्नजटाभिधानस्तापसव्रती अभूत्। अथ श्रीपतिनृपो राज्यचिन्तापराङ्मुखो धर्मकर्मभिः कियन्तं कालं गमयामास । अन्येद्युर्वनपालस्तं प्रणम्यैवं व्यजिज्ञपत्—'स्वामिन् ! तवोद्याने धर्मप्रभसूरिः समागमत्' । राजा प्रागपि संवेगाऽञ्चितो गुर्वागमनं च क्षीरे शर्कराक्षेपवद् मत्वाऽस्मै पारितोपिकं ददे । ततः समग्रसामग्रीं कृत्वा महेन्द्रवद् गजारूढः कुमार-श्रेष्ठि-सामन्त-मन्त्र्यादिपरिवारितो धृतच्छत्रश्चलच्चारुचामरः सान्तःपुरो नागरैः सह नन्तुमगात् । दृष्टौ सत्यां गजादुत्तीर्णवान्, ततः पञ्चविधाऽभिगमादिकृत् त्रिः प्रदक्षिणीकृत्य गुरुं सपरिच्छदं नत्वा सपरिवारः सपौरो नृपो यथास्थानमुपाविशत्। गुरुर्धर्मलाभाशिषाऽऽनन्द्य धर्मम् आदिशत् । तथाहि—

"दायकं सकलसौख्यसम्पदा—मापदा भवभुवां विनायकम् ।
हे जना ! भजत धर्ममार्हतं, तेन चाऽऽशु शिववासमर्हत ॥ १ ॥

विद्विषां सुहृदां चाऽपि, विभागो यत्र नाप्यते । बाह्यानामान्तराणां वा, भवे तत्र कुतः सुखम् ? ॥ २ ॥
अन्तर्द्विषो हि मोहाद्या, जनकाद्याश्च तद्वशात् । भवेऽत्राऽन्येपु चैपु स्यु—स्तत्तान् विजहितोत्तमाः ! ॥ ३ ॥
संवेगाद्याश्च मित्राणि, सुगुर्वाद्याश्च तद्वशात् । भवेऽत्राऽन्येपु चैपु स्यु—स्तत्तान् भजत सत्तमाः ! ॥ ४ ॥
एवं दुःसमयोऽयं स्याद्, न भयाय भवो रिपुः । निर्ममस्त्यक्तसङ्गश्च, शिवशर्मणि लीयते" ॥ ५ ॥

१ संसारिणाम् । २ भवेपु । ३ त्यजत ।

ज्ञानत्रयनिधेर्गुरोरित्यादिदेशनां श्रुत्वा बहवो भव्याः प्रबुद्धा जिनधर्मं प्रपेदिरे, केचित् श्राद्धधर्मं, परे यतिधर्मम्, एके सम्यक्त्वम्, अन्ये तु कन्दाद्यभिग्रहान् भेजुः। भूपोऽत्यन्तसंवेगाद् दध्यौ—'ही! मया बाह्योऽपि द्विषन् सुहृच्च न ज्ञातस्तद् आन्तरौ कथं लक्ष्यौ?। ततः सर्वं बाह्या-ऽऽन्तरपरिग्रहं परित्यज्य जैनीं दीक्षां ग्रहीष्ये यद् अखिलशात्रवेणाऽहं विमुच्ये'। इति विचिन्त्य गुरुं साह—'राज्यसूत्रमाशु विधाय युष्माकम् अन्तिके प्रव्रजिष्यामि'। गुरुराह—'श्रेष्टकृद् भव'। ततोऽसौ गृहमागत्य राजवर्ग्यांश्च प्रबोध्य पुत्राऽभावात् कुमारेन्द्रं राज्ये बलाद् न्यवीविशत्। तं च शिक्षयित्वा तेन कुमारेण कृतनिष्क्रमणोत्सवो, मासं यावद् अमारिमुद्घोष्य, सङ्घं प्रपूज्य, चैत्येष्वष्टाह्निकापूजां कृत्वा, दीनांश्च प्रतर्प्य, सूरेर्वैराग्यैकमयैर्देशनावचनैः प्रबुद्धैः पञ्चशतै राजपुत्रैः सहितः, प्रबुद्धानां राज्ञीनां पञ्चशत्या समन्वितो, राज्य-दारादौ निर्ममो, विषयादिषु निःस्पृहो, हृदयोद्गतविवेकसूर्यग्रस्तमोहतमश्चयः, स्नानादिमङ्गलाचारपूर्वकं सर्वाङ्गभूषितो, गजारूढः, सितच्छत्र-चामरश्रेणिविराजितः, पदे पदे दानं ददद्, वाद्यनादभरिताम्बरः, प्रशंसामुखरैः सर्वस्वजनैः परिवृतो, मृगाक्षीभिर्मनोहरैर्धवलमङ्गलैर्गीयमानो, गजा-ऽश्व-भटकोटिभिः समन्वितो, बन्दिभिः पठ्यमानगुणः, समन्तात् संस्तुवज्जनकोटिभिर्वीक्ष्यमाणो, महासत्त्वचमत्कृतैर्गीर्वाणैः स्तूयमानो, गोत्रवृद्धनर-स्त्रीभिश्च आशीर्भिरभिनन्दितः श्रीपतिभूपाल उद्याने गत्वा सर्वान् क्षमयित्वा लोचं च विधाय गुरुं नत्वा व्यजिज्ञपत्—'हे भगवन्! अस्मानाशु भवाब्धेस्तारय'। अथ गुरुणा आगमोक्तविधिना भव्य-भव्यासहस्रयुक् स दीक्षितः, उपदेशतश्च शिक्षां ग्राहितः। श्रीजयानन्दभूपाद्या गुरुं तांश्च नव्यमुनीन् नत्वा तद्गुणस्त-

वैर्मुखरा यथास्थानं जग्मुः । अथ स मुनिः सिद्धान्तान् पठन्, द्वादशधा तपः सृजन्, गुरुणा च साकं विहरन् क्रमाद् गीतार्थोऽभूत् । अन्यदा गुरुस्त योग्यं मत्वा सूरिपदे न्यास्थत्, अस्मै च सहप्रव्रजितान् मुनीन् परिकरे ददौ । ततोऽयं सूरिर्भव्यान् प्रबोधयन् अभितो भुवि विहरति, योगप्रभावतश्च लब्धबहुलब्धिसमृद्धिभिर्जैनं शासनं प्रभावयन् उत्पन्नकेवलः क्रमात् शिवसुखं लेभे ।

अथ श्रीजयानन्दनृपतिर्विविधान् देशान् साधयन् नृपसेवितो राज्यसम्पदा वर्धते। प्रौढैश्वर्यः सोऽर्हद्धर्मं परमां प्रौढिमानयत्, भयाऽभावा-ल्पकरत्व-न्याय-दान-पालनादिभिश्च प्रजास्तथा सुखाकार्षीद् यथा ताः प्रजाः स्वपतिम् इन्द्रादप्यधिकं मन्यन्ते । अन्यदा उद्यानपालो राजानं नत्वा व्यज्ञपयत्–'स्वामिन् ! तव पितरौ अल्पपरिच्छदौ उद्याने प्राप्तौ स्तः'।इति श्रुत्वा आकस्मिकाऽनभ्रवृष्टिन्यायात् तदागमं मन्वानोऽसौ महद्धर्षोच्छ्वसत्तनुस्तस्मै दानं ददौ। ततस्तद्दर्शनोत्सुको भूपः पद्भ्यामचालीत्, तदा हि इभमश्वं परिच्छदं च न प्रत्यैक्षिष्ट । उद्याने गत्वा हर्षाश्रुभिः पादौ क्षालयन् पितरमनमत्, सोऽपि तमुत्थाप्य दृढमालिङ्ग्य मूर्ध्नि घ्रातवान् । जनन्यपि एवमेवाऽस्मै शतश आशिषो ददौ । परस्परं क्षेमप्रश्नादिभिः सर्वेऽप्यानन्दमापुः। तिस्रो वध्वोऽपि एतद् ज्ञात्वा सपरिच्छदा द्रुतमागत्य मुदा श्वशुरयोः पादान् सभक्ति अनमन्। ता गुणखानीः स्त्रियो वीक्ष्य तौ यम् आनन्दमापतुस्तस्य कोट्यंशमपि आशिषां शतैर्नाऽऽविश्चक्रतुः। अथ आगतसैन्यो भूपस्तातं सिन्धुरे आरोह्य, वधूभिः पर्युपास्याऽङ्घ्री मातरं तु सुखासनेऽधिरोह्य, पितरं स्वहस्तधृतच्छत्रं गौरवाद् महेन्द्रमिव पुरे निजे च सौधे प्रावेशयत्। ततस्तं सिंहासनेऽध्यास्य स्वयं पादपीठे स्थितस्तत्पादौ

उत्सङ्गे न्यस्य सभ्यान् भृशमरञ्जयत् । अथ कृतप्राभृतान् राजवर्ग्यान् परांश्च पौरान् सदालापा-ऽर्हदानाद्यैः सत्कृत्य विसृज्य च, अवसरे सपरिच्छदौ तात-सुतौ स्नान-जिनार्चा-भुक्त्यादि चक्रतुः । ततोऽवसरे सुतः पितरं स्नेह-भक्तितोऽप्राक्षीत्—'तात ! किमिति आकस्मिकोऽल्पर्द्धि-परिच्छद आगमः ?' । जनको दुःखाऽश्रुमिश्रदृक् स्माह—"हे वत्स ! शृणु, मम भ्राता सिंहाय राज्यं प्रदाय तापसोऽभवत्, तेनैव च सह गच्छन्तं मां सिंह आत्मनो राज्यसूत्रार्थं भक्ति-विनयाभ्यां भृशमभ्यर्थ्याऽस्थापयत् । स च वात्सल्यधारिणि मयि भक्तिं दर्शयते, मायाविनस्तस्य मनः कालेनाऽपि न ज्ञातम् । अन्येद्युर्माम् आलोचमिषाद् रह आजूहवत्, अहमपि विश्वासाद् एक एवाऽगमम् । स तु प्रागूरचितसामग्र्या उदायुधैर्भटैर्मां द्राग् बन्धयित्वा गुप्तावक्षिपत्, तत्रैव च तव मातरमपि अक्षैप्सीत् । कांश्चिद् मद्भक्तान् भटानपि पृथक् पृथग् विश्वास्य चारकेष्वचिक्षिपत्, केचित्तु नंष्ट्वा क्वाऽप्ययुः । ततः स ममाऽऽवासमलुलुण्टत्, देशमात्मसाचक्रे, अभितश्च भटै रक्ष्यमाणस्तिष्ठामि । स प्रजां मय्यनुरागिणीं विभाव्य स्वराज्यभ्रंशभीत्या तथाऽकरोत् । अथ सुरदत्तो वीरदत्तश्च मम सेवकौ । मयि तौ अत्यन्तभक्तौ तदा कथञ्चन नंष्ट्वा, मयि ऐकान्तिकीं भक्तिं दधानस्य सुहृदो धीरराजस्य सेवकस्य धाम्न्यस्थाताम्, तादृशां हि मैत्री काले परीक्ष्येत । ते तद्गृहाद् गुप्तिं यावत् सुरङ्गामदापयन् । ततस्तैः सप्रियोऽहं सुरङ्गया निशि नैपुण्याद् नीतः, स्वामिभक्तिर्हि सा या प्राणाद्यनपेक्षिणी । ततः प्रागेव कृतसामग्र्या वयं सर्वे नंष्ट्वाऽगमाम, यतो विषमा अपि सर्वाः क्रियाः सुसत्त्वैः साध्या भवन्ति । ततः सकुटुम्बैर्धीर-सुर-वीरैर्भटैः सङ्केतादन्यैरपि मिलितैः सह द्रुतं पूर्वसज्जितवाहादि-

सामग्र्याऽत्रैवाऽऽगमम् । प्रायः सर्वत्र मम भक्ताः सन्ति, अतः सुखेनैवागतः । अद्यापि केचिद् मम स्वजनादयो गुप्तिषु सन्ति, वत्स ! प्रभुस्त्वं तेषां सारां कर्तुमर्हसि" । इति श्रुत्वा कुमारः खेदा-ऽऽश्चर्य-प्रमोदभाग् ऊचे–"अहो ! उपकर्तर्यपि सिंहस्य दौर्जन्यम् । यतः—

"प्रायो हि पायिताम्भोऽपि, पितेवाऽऽराध्यते सता । असकृत् प्राणदातापि खलैर्वैरीव दृश्यते ॥ १ ॥

खलः सत्क्रियमाणोऽपि, ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति, वायसः कलहंसताम् ?" ॥ २ ॥

ततो हे पितः ! त्वदाज्ञैकवशे पुत्रे सति मा विषीद । धृतानां सत्वरं सारां साधु करिष्यामि, अपकर्तुः शिक्षां दास्यामि, उपकर्तॄणां च महासम्मानदानतः प्रसादं करिष्यामि" । इत्युक्त्वा तातमानन्द्य, त्रीन् धीर-सुर-वीरानाहूय तत्सत्त्व-स्वामिभक्त्यादिगुणान् वन्दिवत् तुष्टाव । सुकुटुम्बांस्तान् वस्त्रा-ऽलङ्करणादिभिः सत्कृत्य प्रत्येकं देशदानैश्चाऽपिप्रिणत् । यदुक्तम्—

"सुवर्णपुष्पां पृथिवी-मुच्चिन्वन्ति नरास्त्रयः । शूरश्च कृतविद्यश्च, यश्च जानाति सेवितुम्" ॥ १ ॥

ततस्ते तुष्टा विसृष्टाश्च राज्ञो भटैः सह गत्वा देशानात्मसात् कृत्वा तौ भूपौ पर्युपासते । श्रीजयानन्द-भूपोऽन्येषामपि पित्रा सहैयुषां ग्रासमदात् । अथ सिंहसारं निग्रहीतुं स्वांश्च मोचयितुं विजयपुरे गन्तुकाम एवं व्यचिन्तयत्–'दुष्टः सिंहो राज्यभ्रंशभिया पितर्यैवमचेष्टत । मयैवाऽसौ सम्प्रत्येव राज्ये स्थापितः, ततः कथं निगृह्णामि ? एवं हि द्रुतं दाना-ऽऽदानाभ्यां निष्फलः स्याम् । तद् लेखेन ज्ञापयित्वा स्वजनादिकान् मोचये, हरेरामिषं हृत्वा किं फेरुः स्थापयितुं शक्तः ? । चेत् स न मुञ्चेत् तत्तं निगृह्णन् दोष-

भाग् न स्वाम्, यतः क्षीरं विटालयन् स्वोऽपि श्वा किं न ताड्यते ?। इति ध्यात्वा लेखेन दूतमुखेन चैवम् अजिज्ञपत्–'मत्पितुर्यत्त्वया लुण्टितं तत्सर्वं प्रेष्यं, स्वजनादयश्च विमुच्य सत्कृत्य च द्राक् प्रहेयाः, नो चेत्त्वां निग्रहीष्यामि, युधि सज्जतया स्थेयम्'। सिंहसारस्तल्लेख-दूतोक्तं ज्ञात्वा भिया श्रीविजयस्य सर्वं स्वं स्वजनादि च सत्कृत्य सप्राभृतं सद्यः प्रैषीत्। विजयनृपस्य देशमपि तत्सात्कृत्वा विज्ञप्ति-दूताभ्यां तद् व्यजिज्ञपत्। तत्सर्वं दृष्ट्वा मत्वा च पिता-पुत्रौ अहृष्यताम्। ततः श्रीविजयः प्राच्यं स्वं देशं स्वजनादिभ्योऽदात्। अन्येद्युः पितृभ्यां सुतः प्रोचे–'वत्स ! विजयपत्तनाद् निर्गमादारभ्य स्ववृत्तमशेषं ब्रूहि'। अथ स्वं चरित्रं स्वयमविवक्षुरपि कुमारः पित्राज्ञोल्लङ्घनभीरुर्मूलतो यथातथमवक्। तच्च नानाप्रौढावदाताढ्यं बह्वाश्चर्यरसाञ्चितं निशम्य पितरौ तमानन्दमवापतुर्यस्तद्हृदयाम्भोधौ अमान् तद्वृत्तोक्तिप्रणालकैः पुरे देशे च उद्भ्रान्तः पृथिव्यामपि विस्तृतः। ततस्तत्र श्रीविजयो धरणीधवः पुत्रभक्त्या चमत्कृतः सर्वराजन्यैश्च सत्कृतः सुखमास्ते। श्रीजयानन्दभूपस्तु आनन्दितप्रजः स्वभुजाऽर्जितं ससाङ्गं राज्यं भुञ्जानो जयति, यस्य सर्वोत्कृष्टनयै-श्वर्यैर्धवलो रञ्जिताऽशेषभूतलो यशःपुञ्जो न्यक्कृताऽच्युताग्रजोऽभूत्। अन्यदा सुविनीतत्वात् स भक्त्या प्रीत्या च पूरित आग्रहात् सुमुहूर्ते निजं राज्यं स्वपित्रे व्यतरत्। उत्तमत्वाद् निरीहत्वाच्च गुणिनामग्रणीमणिः श्रीविजयभूपालः पुत्रैकप्रेम-दाक्षिण्याद्युल्लङ्घयितुमक्षमो राज्यस्याऽनिच्छयाऽपि तत् प्रपद्य, एकान्तवत्सलं श्रीजयानन्दं कुमारमानन्दात् परैः सर्वैः सर्वथाऽप्यनुलङ्घितशासनम् अखण्डं यौवराज्यं बलात् प्रत्यपादयत्। तौ समसिंहासनाऽऽसीनौ, समवेष-विभूषणौ, समानरूपसौन्दर्यौ, समनयतेजसौ,

भीम-कान्ताद्यैः सर्वैर्लोकोत्तरैर्गुणैः समौ, सर्वयशःश्रिया युक्तौ, कृतद्विरूपदेवेन्द्राविव चन्द्रा-र्काविव कृष्ण-कन्दर्पाविव च जनैर्युगपद् दृश्येते । अन्येद्युर्विजिगीषुत्वात् पितरि राज्यस्य चिन्तां न्यस्य युवराजचूडामणिर्देशसाधनाय निर्ययौ । शक्रजित्पराक्रमः श्रीजयानन्दो मध्यखण्डस्थान् बहून् भूपान् लीलयाऽसाधयत् । चक्रपुराधीशोऽतिविक्रमी चक्रसेनः, विपक्षचूर्णने दक्षो जयपुरनृपो जयी, जयन्तीनगरीशः शात्रवाऽन्तकृद् जयन्ताह्वः, पुरन्दरपुरस्वामी नरसिंहो भूपः, सूर्यपुरेशः शूरः, नन्दिपुरेन्द्रो नन्दः, भोगवतीभर्ता भीमः, कोशलेशः सुमङ्गलः, अन्येऽपि च पृथ्वीचन्द्र-कलाचन्द्र-कृपादयो भूभुजस्तेन साधिताः, स्वस्य च सेवका विहिताः । एवं भूयसो भूपालान् प्रसाध्य महासैन्याब्धिः स सोत्सवं स्वपुरे आगात्, भक्त्या च पितरं प्रणम्य सुमानसः सेवमानो राज्यचिन्तां स्वीकृत्य स्वं राज्यं समुन्नतिमापिपत् । ततोऽसौ नृपेषु राजराजेति विरुदं वहन् भुवि गीयमानगुणः परमां प्रसिद्धिं प्राप । श्रीविशालपुरेशाद्या राजानः क्रमात् तद्वृत्तश्रुतेरभिज्ञानैस्तं जामातरं विज्ञाय मुदं दधुः । अथ कुमारः श्वशुरेभ्योऽभिज्ञानगर्भान् लेखान् प्रेष्य पुरा परिणीता निजाः प्रिया आनाययत् । 'प्रभुत्वेनाऽप्ययं सेव्यः, ततः स्वाजन्यात् सेवितो वरम्' इति ध्यात्वा तेऽपि विहितोपदाः स्वस्वपुत्रीं समानीय आर्पिपन् । तथाहि—श्रीविशालपुरेशः श्रीविशालजयः सान्तःपुरोऽभ्येत्य मणिमञ्जरीं तनयां समार्पिपत्, हेमपुराद् हेमप्रभो नृपः सौभाग्यमञ्जरीम्, सान्तःपुरः पद्मरथो विजयसुन्दरीम्, तथा कमलप्रभभूपः कमलसुन्दरीमानैषीत् । श्रीजयानन्दस्ता आश्वास्य तद्योग्याऽऽवास-ग्रासैरपिप्रिणत् । ततः स कुमारनराधिपः स्वं राज्यं पितृसात् कृत्वा इष्टैः कला-विलासाद्यै रमणी-

युतो रमते। जामातृश्रीचमत्कृताः श्वशुरा सपरिवारास्ताभ्यां सत्क्रियमाणाः स्वर्निभेऽस्मिन् पुरे कियत्कालं तस्थुः।

अन्येद्युः श्रीजयो भूपः पित्रादिभिर्नृपैः सह सभ्यालिसुन्दरां बहिरास्थानीसभामध्यास्त। तत्र देशान्तरात् किञ्चिद्गायनपेटकमागात्। तत्र मधुरध्वनिर्मुख्यः सुकण्ठो गाताऽस्ति, तस्य रूपाऽतिरम्भा सर्वकलोत्तरा विशिष्य च सङ्गीतगानविचक्षणा प्रियाऽस्ति। सा तदा पद्मरथभूपालद्विकन्याचरिताऽनुगं गीतं कृत्वा भर्त्रा सह गातुं प्रचक्रमे। लघ्व्याः कन्याया भिल्लप्रदानादि, ज्यायस्यास्तु पुत्र्याः करग्रहादारभ्य गातृग्रहावधि चरितं जगौ। ततः सा प्राक्सुख-दुःखौघसंस्मृत्यार्ता रुरोद। तद्गीतरसभङ्गं वीक्ष्य सुकण्ठो जगौ—'प्रिये! त्वद्गीतगुणेन इच्छितदायका रञ्जिताः, दुःखिता इवाऽधुना कथं रोदिषि? पुनरीदृशोऽवसरो दुर्लभः'। तदा साऽपि रुदितं निरुध्य कथञ्चिद् गद्गदध्वनिर्गीतगानच्छलादेव जनचित्रकृदित्यगायत्—

"किहं[1] पउमपुरं किह पउमरहु, किह पिअडाभंगिण भिल्लगहु।
जयसुंदरि गायणघरिहिं गया, हह! गायइ धणकज्जि दइवहया" ॥ १ ॥

एतच्छ्रुत्वा पद्मा राज्ञी सविस्मया यावत्तां वीक्षते तावत् स्वां सुतामुपालक्षयत्। ततः सा 'वत्से! वत्से! कथं काऽसि?' इत्यादि ब्रुवती द्रुतं तामुपागात्, तदा साऽप्युत्थिता तत्पदोरपतत्। उभे अपि

१ क पद्मपुरं क पद्मरथः, क पित्राज्ञाभञ्जिन्या भिल्लगृहम्। जयसुन्दरी गायनगृहे गता, हह! गायति धनकार्ये दैवहता ॥ १ ॥

मिथः कण्ठयोर्विलग्य रुदतः। पद्मरथोऽपि राजा निजां सुतामुपलक्ष्य उपागम्य रोदिति स्म। तेषां रुदितैः सभा कारुण्यैकमयी जज्ञे। अथ श्रीविजयो भूपतिस्तानाकार्याऽप्राक्षीत्–'किमेतत् ?'। ततः पद्मरथो धैर्याद् रुदितं निरुध्याऽवदत्–"स्वामिन्! मम द्वे कन्ये अभूताम्, तयोः समस्तामार्पयम्। मच्चित्तप्रतिकूलार्थतत्पूर्त्यादिक्रुधा लघ्वीं कूटभिल्लाय प्रादाम्, इत्यादि तव प्रकटम्। स्वाऽभिप्रेतसमस्तार्थकथनादिना तुष्टितो जयसुन्दरीं नरसिंहभूपाङ्गजायाऽदाम्। अथ कियतो घस्रान् नरकुञ्जरजामाता स्थापितः, ततः सत्कृतः सप्रियः स्वे पुरन्दरपुरेऽगमत्। अधुना चैषा जयसुन्दरी गायन्ती उपालक्षि, गीतानुसारेण जाने सुता दुरवस्थामगात्। अस्या व्यक्तं वृत्तान्तं तु न वेद्मि, एषैव वक्ष्यति"। ततस्तातेन पृष्टा जयसुन्दरी स्ववृत्तमाख्यत्। तथाहि—"हे तात! तदा भर्त्रा समं श्वशुरकुलेऽहं प्राप्ता, मत्पतिश्च मदासक्तो भोगशर्मसु रमते। अन्यदा वसन्ततौं पुरात् क्रोशद्वयस्थे नन्दनोपमे कुसुमाकरनाम्नि क्रीडोद्याने रम्भास्तम्भालिबन्धुरान् वालुकभित्तिकान् कुसुमस्रग्भिः संछन्नान् विविधान् केलिगृहान् विधाय, कन्दर्पस्येव एषु गृहेषु मासद्वयं स्थातुमिच्छया सर्वाङ्गभोगसामग्र्या मया समं स प्रविवेश। दूरस्थैः सुभटैः रक्ष्यमाणश्चेटीगणैर्वृतो वारस्त्रीगीत-नाट्यादिलीनः सोऽन्वहं चिक्रीड। तस्य नारीकुञ्जरवद् नारीगणैः खेलतो भोगासक्तस्य यद्दैवादन्यथाऽजनि तच्छृणु–सहस्रकूटशैलेशो महासेनाह्वपल्लीनृपः किञ्चित्पुरं लुण्टयितुं भिल्लसैन्ययुगचलत्। हेरिकेभ्यस्तत्पुरं सुरक्षं विज्ञाय निष्फलफेरको वलमानस्तं कुमारं ज्ञात्वा वनमवेष्टयत्। त्वज्जामाता ससै-

न्यस्तान् नाहलान् निश्ययोधयत्, तैश्च सवलैर्भग्नः। ततोऽस्मिन् ससैन्ये नष्टे ते केलिगेहानलुण्टयन्, पल्लीशो मां गृहीत्वा ससैन्यः पल्लीमगात्, मां च विपण्णां स जगौ—'मयि प्रवले पल्लीशे पत्यौ यथारुचि क्रीड'। ततोऽहं शीलभ्रंशभिया त्र्यहमुपोपिताऽरौत्सम्। तदा स स्माह—'भुङ्क्ष्व, त्वां धनेन तव पत्ये दास्ये'। ततः किञ्चिज्ज्ञातसमाधाना भोजनादि व्यधाम्। भिल्लपतेः प्रिया तु सपत्न्याः शल्यमशङ्कत, ततः पर्वतादानीय सा औषध्याश्चूर्णं भोजनगं ददौ, तज्जलोदरिणी जाता, जीवितसंशयं च प्रापम्। पल्लीशो 'वैद्याद्यभावेन इयमत्र कल्या न भाविनी' इति ध्यात्वा, अन्यदा तत्राऽऽजग्मुषे सुकण्ठाय तद्गीतरञ्जितः स माम् उपचर्यायै प्रीतिदानधिया च ददौ। सोऽपि रूपलुब्धो नीरोगाशयाऽग्रहीत्, पद्मखण्डाह्वपत्तने च समागमत्। तस्मिन् सुमतिवैद्येन द्रव्यैर्माम् अचिकित्सयत्, स वैद्यो रोगमूलादि ज्ञात्वा विरेचाद्यैर्मां पटूं चक्रे। ततः सुकण्ठो मुदा मां प्रणयिनीं विदधौ, विशिष्य च गीतमध्यापयत्। अहं तु प्रागपि कलावती पत्या सह गायामि, अनर्गलं च धनं लभे। एवं भूपादीन् रञ्जयन् सुकण्ठो धनवानभूत्। अथ श्रीजयं भूपं प्रौढं वहुनृपान्वितं मत्वा वहुदिनैरवसरं लब्ध्वाऽद्य गानार्थमुपस्थिता। अत्र च तातादीन् दृष्ट्वा आत्मनो जिज्ञापयिषया स्वयं निर्मापितं स्वचरित्रात्मकं गीतमगायम्। अग्रतः सर्वं तव विदितम्। अथ विजयसुन्दरी या तादृग्भिल्लाय दत्ता सा कथमासीत् क चाऽस्ति ?"। पद्मरथ ऊचे—'स भिल्लो न, किन्तु नृपात्मजो निजभाग्यपरीक्षार्थं तादृग् रूपं व्यधात्। सोऽयं पूर्वं कृतविमलावदात-मद्रन्धादिर्जगज्जयी

१ भिल्लान्। २ नीरोगा।

श्रीविजयाङ्गजो राजेन्द्रः श्रीजयानन्दः । इयं च वामपार्श्वस्था भूपस्य मान्या सर्वसतीपूत्तमा तव स्वसा विजयसुन्दरी' । अथ तदा पद्मरथेनाऽङ्गुल्या दर्शितां तां यावज्जयसुन्दर्युपागमत् तावद् विजयसुन्दर्य-प्युत्थाय स्वसुः कण्ठलग्नाऽरुदत् । ततो रुदितं निरुध्य तां जयसुन्दर्याख्यत्—'स्वसः ! त्वं धन्याऽसि या शुद्धशीला श्रियः प्राप । देव-गुरु-धर्माणां माहात्म्योक्त्या त्वयैव तात्त्विकी समस्याऽपूरि, तत्फलं चाऽलम्भि । मया तु नास्तिकवादोपहतया पितृचाटूक्त्या यथा तथाऽपूरि, तद् विपत्पदमभूवम् । सर्वेऽपि राजादेः प्रसादा-ऽप्रसादाभ्यां न सुख-दुःखभाजः, किन्तु स्वपुण्य-पापाभ्याम्, अत्राऽऽवां निदर्शनम्' । एतच्छ्रुत्वा तयोश्च सर्वं वृत्तं निबुध्य श्रीजयो नृपो धर्मा-ऽधर्मनिदर्शनात् सभ्यान् अबूबुधत् । सर्वेऽपि जना विस्मिता आर्हतं धर्मं तुष्टुवुः । सुकण्ठायाऽर्थितं धनं दत्त्वा श्रीजयो जयसुन्दरीममूमुचत्, तत्पित्रे च तां पुत्रीं समर्प्य स्वगृहान्तर्विवेश । पिताऽपि शास्त्रोक्तविधिना विशोध्य तामस्थापयत् । ततोऽवसरे नरकुञ्जरं तत्पुरादाकार्य सोपालम्भं तस्मै नरेन्द्रो जयसुन्दरीं ददौ । सोऽपि श्वशुरादिभ्यो लज्जमानः प्रियान्वितो मुदा द्रुतं स्वे पुरन्दरपुरेऽगात् । मिथः सत्कारसंवृद्धप्रीतयोऽन्येऽपि पद्मरथादयो नृपा नरेन्द्रानुमताः स्वस्वपुरमगुः । अथ स्वं राज्यं पितृसात्कृत्वा निश्चिन्तः सप्रियः कुमारो धर्मकर्मकृत् स्वैरं क्रीडति । एवं धर्मशर्ममये काले नीयमानेऽन्यदा उद्यानपालक आगत्य इमौ नृपौ व्यजिज्ञपत्—'हे प्रभू ! यथा युवाभ्यां भूपाभ्यां वसुन्धरा तथा इष्ये-दक्षिणवाताभ्यां वनलक्ष्मीरलञ्चक्रे । हे स्वामिनौ ! अधुना वनश्रीर्भोग-क्रीडार्हतां धत्ते' ।

१ अगमन् । २ वसन्त-दक्षिणवायुभ्याम् ।

इति निशम्य श्रीविजयो भूपः सुतं व्याजहार–'परिणतवयसो वयं वनक्रीडां कर्तुं नैवाऽर्हामः, तद् वत्स ! सुरभिपावने वने क्रीडितुं याहि । त्वां विना हि श्रियां सागरा नागरा न खेलन्ति' । इति तातादेशमनुलङ्घ्यमवाप्य कुमारराट् सर्वसामग्र्या सान्तःपुर-परिच्छदो वनेऽगात्, पौरा अपि स्वस्वाऽर्हसामग्र्या तमन्वगुः । तत्र वने वेणु-वीणादीनि मृदङ्ग-पटहादीनि च लक्षशो वाद्यानि प्रतिपदं जनैर्वाद्यन्ते । गायना गायन्ति, नर्तका नृत्यन्ति, खेलकाश्च खेलैः खेलन्ति । युवानः खाद्यानि खादन्ति, पानकानि पिबन्ति, रतिकेलिषु च लगन्ति । केचन सपत्नीका रतिश्रान्ताः सुखनिद्रया निश्चिन्ता रम्भौकस्सु केलिगेहेषु च शेरते । केऽपि सप्रिया युवानः पौष्पैरलङ्कारैर्भान्ति । केचन युवानः पुष्पाण्युच्चिन्वन्ति । युवतयोऽपि 'नु एभिः पुष्पबाणो नोऽसमये मा वधीद्' इति प्रतिवल्लरि पुष्पाणि आच्छिन्दन्ति । कासाञ्चिद् उरोजेषु पतिन्यस्ताः कुसुमस्रजो भान्ति । अथ पुष्पगृहिकाभिर्दासीभी रम्भा-पुष्पगृहे कृते चारुणि कौसुमासने स्वयं मूर्त्यन्तरं प्राप्तो देवः कुसुमायुध इव नानापुष्पपरिष्कारैः सर्वाङ्गे समलङ्कृतो भूपतिरासीनः । स तिसृभिः प्रियाभिर्नवनवैर्नाट्य-गीत-नादकलारसै रज्यमानः कियत्कालं तस्थौ । अन्यैरपि विविधैः केलिरसैरप्सरोऽधिकनारीभिः सह नन्दने महेन्द्र इवेह क्रीडित्वा, पद्मिनीनां ससौरभ्ये परागैः पिञ्जराम्बुनि क्रीडासरसि सस्त्रीको जलकेलये जगाम । तत्र स प्रियाः स्वर्णशृङ्गीनीरैः सिञ्चन्नपि अम्बुजैश्चाऽऽवृण्वन्नपि कामोपतापिनीश्चक्रे । भूपनार्योऽञ्जलिजलैराच्छोट्य पद्मिनीपत्रैश्चाऽऽहत्य तं व्याकुलं वितन्वते । एवं ताभिः सह क्रीडित्वा, परस्परं क्रीडन्तीर्मुक्त्वा स पालेरलङ्कृतिरभूत् । अथ कश्चिद् भिल्लो व्याघ्रचर्माणि वसानः, कुण्डली-

कृतकार्मुको, रज्ज्वा बद्धं श्वानं दधत्, तूणीरोद्धासिपार्श्वको, मौलौ शिखिपिञ्छावृतस्तत्रैत्य भूपतिं प्राणमत् । राज्ञा पृष्टः—'कस्त्वम् ?' । स जगौ—"नरेन्द्र ! यमदुर्गाद्रौ चण्डसिंहाभिधो भिल्लाधिपोऽभवत्, तस्य सिंह-व्याघ्रौ द्वौ सुतौ । पितरि मृते तौ राज्यं विभज्य भुञ्जाते । अथ सिंहो बलोत्कटो व्याघ्रस्य राज्य-पत्न्यौ ललौ । ततः सोऽहं व्याघ्रो दुःखितो वनेष्वेको भ्राम्यन् अत्राऽऽगाम् । महीपते ! स मद्भ्राता सिंहः पुरर्द्धिदिदृक्षया कौतुकादत्रैवाऽऽसन्ने वनगह्वरे आगतः, निःशङ्कं च मत्पत्न्या सह रमते । 'दुर्बलस्य बलं राजा' इत्यहं त्वामुपागमम् । एष कुधीर्भटकोलाहलं श्रुत्वा क्वचिद् नङ्क्ष्यति, ततो राजन् ! चेत् शक्तोऽपि तद् एकाक्येव जवादेत्य मम प्रियां मोचय, दुष्टं च हत्वा राज्यं देहि, सन्तो हि निसर्गात् शरणागते तु विशिष्य वत्सला भवन्ति । यतः—

"विपदि परेषां सन्तः, समधिकतरमेव दधति सौजन्यम् । ग्रीष्मे भवन्ति तरवो, घनकोमलपल्लवच्छायाः" ॥ १ ॥

एतद् मनसि कृत्वा कुपितो भूपतिरवदत्—'रे रे ! तं दुष्टं दर्शय, यतो द्रुतं निगृह्णामि । मत्पृथिव्यामपि यो दुराशय एवमनीतिं करोति तं सौराज्यस्य कलङ्कदं क्षणमात्रं न क्षमे' । इत्युक्त्वा राजा तेन समं केनाऽप्यलक्षितः साऽसिरगात्, यतो दुर्गेऽपि कार्ये सात्त्विके नैव विचारः । निकुञ्जस्य मुखे गत्वा स भिल्लो नृपं व्याहरत्—'स इहैवाऽन्तर्वणमस्ति, परमग्रतोऽहमागच्छन् बिभेमि' । ततस्तं तत्रैव मुक्त्वा नृपो निकुञ्जे प्राविशत्, सर्वत्र च व्यलोकत, परं कञ्चन नैक्षत । ततः पश्चाद्व्यावृत्तस्तं भिल्लमपि नैक्षत । अथ भूपतिरिन्द्रजालं मत्वा पुरं प्रति यावदेति तावद् व्योम्नोऽवतीर्णः कोऽपि खेटो विमानान्निर्गत्य

भूपालं प्रणम्य विनयेन व्यजिज्ञपत्—"राजेन्द्र! हृदि विकल्पान् मा कार्षीः, भिल्लरूपादिमाययाऽत्र मयैव त्वमानिन्यिपे, प्रभो! तत्र हेतुं शृणु—वैताढ्ये दक्षिणश्रेण्यां पञ्चाशन्नगराग्रिमं रथनूपुरचक्रवालाह्वं पुरं वर्तते। तत्र प्रायो दक्षिणश्रेणिगैर्विद्याधरैर्मान्यः पवनवेगोऽहमीशः, मम वज्रवेगाह्वः सुतोऽस्ति। वज्रवेगः साधिताऽनेकविद्यः कृतकन्याकरग्रहो रम्ये हेमगिरिशृङ्गे हेमपुरं न्यास्थत्, तत्र बहुविद्याबलोन्मदः स्वैरं सपौरः सपरिवारः कैलासे धनदवत् क्रीडति। अथ योगिनीवासस्थानं योगिनीपीठसंज्ञितं जालन्धराभिधं पत्तनं रै-मणिगृहं रम्यमस्ति। तस्य स्वामिनी कामाक्षा तन्मध्ये भवने स्थिता योगिनीवृन्दैः पूज्याऽस्ति। तत्पुरः स्वर्ण-मणिमयं रम्यं पीठमास्ते, यत्राऽऽराधका एनां योगिनीं ध्यानेनाऽऽराध्यन्ति। तस्य परितश्चतसृष्वपि दिक्षु सपरीवारा महर्द्धयश्चतुःषष्टियोगिन्यो वसन्ति। तासां चेमानि नामानि—वाराही[1] वामनी[2] गरुडी[3] इन्द्राणी[4] आग्नेयी[5] याम्या[6] नैर्ऋती[7] वारुणी[8] वायव्या[9] सौम्या[10] ईशानी[11] ब्राह्मणी[12] वैष्णवी[13] माहेश्वरी[14] वैनायकी[15] शिवा[16] शिवदूती[17] चामुण्डी[18] जया[19] विजया[20] अजिता[21] अपराजिता[22] हरसिद्धिः[23] कालिका[24] चण्डा[25] सुचण्डा[26] कनकदन्ता[27] सुदन्ता[28] उमा[29] घण्टा[30] सुघण्टा[31] मांसप्रिया[32] आशापुरी[33] लोहिता[34] अम्बा[35] अस्थिभक्षी[36] नारायणी[37] नारसिंही[38] कौमारी[39] वानरती[40] अङ्गा[41] वङ्गा[42] दीर्घदंष्ट्रा[43] यमदंष्ट्रा[44] प्रभा[45] सुप्रभा[46] लम्बा[47] लम्बोष्ठी[48] भद्रा[49] सुभद्रा[50] काली[51] रौद्री[52] रौद्रमुखी[53] कराला[54] विकराला[55] साक्षी[56] विकटाक्षी[57] तारा[58] सुतारा[59] रजनीकरी[60] रञ्जना[61] श्वेता[62] भद्रकाली[63] क्षेमाकरी, एवं चतुःषष्टियोगिन्यः समाख्याताः, ताश्च कामरूपिकाः पूजिताः सदा वरदा भवेयुः। तासां हि अणिमा-लघिमै-श्वर्य-वशिता-गरिमादयो विविधाः शक्तयः, कोप-तोषादि च कर्म। दिव्यशक्तयस्ता

रम्याऽद्रि-वन-कासार-महासिन्धु-ह्रदादिषु च रमन्ते, क्रुद्धाः सत्यो नृलोके मरकाद्युपद्रवान् कुर्वते, तुष्टाश्चोपद्रवान् नाशयन्ति अनेकसम्पदश्च दधुः। तास्तादृग्रूप-क्रियो-क्त्याद्यैर्वैराकान् भापयन्ति, महतश्च मोदयन्ति, असौ हि तासां सदा क्रीडा। तासां योगिनीनां हेमगिरिशृङ्गं सदा क्रीडापदम्, तद् अज्ञात्वा मत्पुत्रस्तत्र पुरं न्यनेशयत्। ततस्ताः कुपिताः क्रूरमरकोपद्रवादिभिः सर्वान् जनान् भापयित्वा तत्पुरम् उदवासयन्। ततो वज्रवेगस्तद्वशीकारकारणम् इष्टसिद्धिदां ज्वालामालिनीं साधयितुमैच्छत्। सा च श्रीपर्वते महाज्वालादेवीदृशोः पुरो बिल्वलक्षस्य होमेन ध्यानैर्जापैश्च सिध्यति। वज्रवेगस्तत्र देवीगृहे गत्वा सर्वसामग्र्याऽन्वितो यथाविधि तां साधयितुमारेभे। तच्च विज्ञाय कुपिता योगिन्यः सप्तमे दिवसे तत्रागत्य प्रतिकूलैरुपसर्गैस्तमचुक्षुभन्, परं सत्त्ववान् स तैर्न क्षुब्धः। ततस्ताः प्रादुर्भूय निजानि दिव्यालङ्कृति-रूपाणि दर्शयन्त्योऽवदन्—'अहो! त्वं साहसिकोऽसि, ततो वयं तुभ्यं तुष्टास्त्वां पतीकृत्य रूप-लक्ष्मीः कृतार्थतां नेष्यामः। हे नाथ! दास्य इव त्वामुपासिष्यामहे, तद् नृरूपोऽपि सुदुर्लभान् दैवतान् भोगान् भुङ्क्ष्व। अतः परं तपो-ध्यानादिभिः क्लेशैः कृतैः किं?, इष्टमोदके हि प्राप्ते वल्लपाकाद्यैः कः क्लिश्यते?। हे नाथ! तदुत्थाय अस्माननुरागिणीर्द्रुतमालिङ्ग, अद्य यावत् क्षारस्यैवाऽम्बुनो रसमज्ञासीः, अधुना तु सौधं रसं जानीहि'। इत्युक्त्वा ताः कामोद्दीपनचेष्टिता मोहनं गीतं गायन्त्यः क्वणत्कङ्कण-नूपुरं नाट्यं व्यधुः। तांस्तान् ध्वनीन् श्रुत्वा तद्रूपाणि च निरूपयन् स क्षुब्धः स्मरपरवशो यावत् किञ्चिद्वक्ति तावद् मिथो हसन्तीभिस्ताभिर्बद्ध्वा स्वपत्तने निन्ये, मन्त्रैश्च निगडितः स केलीभिर्विडम्ब्यते। तद् मया जनैर्ज्ञात्वा नाना-

पूजा-स्तवादिभिस्तोष्यमाणा अपि ता इमं कथञ्चन न मुञ्चन्ति । अथोत्तरश्रेणिभूषणं पौराणां वल्लभं गगनवल्लभं पुरमस्ति, तत्र सर्वविद्याधरेश्वरश्चक्रायुधो राजाऽस्ति । स च ज्योतिष्केषु सूर्य इव, नगेषु मेरुरिव, पादपेषु कल्पद्रुरिव, मृगेषु च सिंह इव विद्याधरेषु वर्तते, विद्यै-श्वर्य-बलादिभिरस्य समोऽधिको वा विद्याभृत्सु न कोऽप्यस्ति, भूचरास्तु कियन्मात्राः ? । सोऽधुना उभयश्रेणिगैः सर्वैरपि विद्याधरैर्महेन्द्रो निर्जरैरिव सेव्यते । समर्थत्वात् स्वप्रभुत्वाच्चाऽहं तस्यैतत्कार्यं न्यवेदयम् । स मामुवाच–'अमुं मोचयिष्यामि' । किन्तु असकृद्विज्ञसोऽप्ययं नैव मोचयति, यतो महीयसः प्रमादित्वं बलवत्तरम् । तस्य सर्वत्र प्रभविष्णोः अत्र तु हेतुर्न ज्ञायते, अलक्ष्यशक्तेश्च को मादृशः शक्त्य-शक्ती वेद । अथ च मम सुरसुन्दरीव वज्रसुन्दरी सुताऽस्ति, सा च पुत्रस्याऽनुजा सर्वगुणोत्तरा जैनधर्मरुचिः काले सकलाः कला अचकलत् । तस्यां हि विशेषतो नाट्यकला सर्वोत्तमाऽभूत् । अन्यदा चक्रायुधो नृपस्तस्या गुणानशृणोत्, ततो दूतमुखेनैष प्रभुस्तां मामयाचत । अहं तु त्रिगुणाधिकवर्षत्व-बहुपत्नीकतादिभिरस्मै तां जीवितादपि इष्टां दातुं न ईहे । यदुक्तम्—

"वपुः शीलं कुलं वित्तं, वयो विद्या सनाथता । एतानि यस्य विद्यन्ते, तस्य देया निजा सुता ॥ १ ॥

मूर्ख-निर्धन-दूरस्थ—बहुभार्य-शिवार्थिनाम् । त्रिगुणाधिकवर्षाणां, चाऽपि देया न कन्यका" ॥ २ ॥

स भुवि प्रभुर्यथा तथा निषेद्धुं न शक्यः, इति विज्ञाय दूतमुखेनेति उत्तरं दत्तम्–'मम पुत्रो योगिनीभिर्धृतोऽस्ति, तेन दुःखेन भृशं दुःखितोऽहं विवाहादिकर्माणि न स्मरामि, ततः स्वामिन् ! तं मोचय,

यतः सर्वं साधु भवेत्' । दूतेनाऽपि गत्वा स विज्ञप्तः, परमुत्तरं नाऽदात् । अन्यदा कश्चिन्निमित्तविद् मम सभायामागात्, तं सापेक्षं फल-पुष्पादिढौकनैः सत्कृत्याऽप्राक्षम्–'हे निमित्तज्ञ! मम कार्यद्वयं वद, योगिनीभिर्धृतं मम सुतं को मोचयिष्यति ?, मम पुत्रीं च गुणैरनुरूपः को हस्ते करिष्यति ?' । सोऽप्यूचे–'द्वयमप्येतद् एक एव करिष्यति' । मयोचे–'स कथं लक्ष्यः ?' । निमित्तवित् स्माह—'पद्मरथं भूपं बद्धा यो धर्मं बोधयिष्यति, यश्च श्रीपतिभूपतेस्तिस्रः कनीः स्वकलागुणैर्निर्जित्य स्पर्धमानांश्च भटान् जित्वा परिणेता, स तव पुत्रं मोचयित्वा सुतां पाणौ कर्ता' । इति श्रुत्वाऽमन्दमानन्दं प्राप्तोऽहं तं गदिताशिषं फला-ऽलङ्कार-वस्त्राद्यैः सत्कृत्य व्यसाक्षम् । ततोऽहं प्रहितैर्नरैः सर्वतः शोधयित्वा ज्ञानिना प्रज्ञप्तैर्लक्षणैर्विज्ञाय त्वामुपागमम् । यदि तव पित्राद्या जानन्ति तत्त्वां न प्रेषयन्ति, इत्येकाक्येव त्वं भिल्लादिमाययाऽत्र मयाऽऽनिन्यिषे । ततो भूपते ! यदि शक्तोऽपि तद् मम पुत्रं मोचय, भवादृशां हि सृष्टिर्जगत उपकारार्थमेव वर्तते । यतः–नद्यो जलं वहन्ति न च पिबन्ति, वृक्षाः फलानि दधते न स्वदन्ति, क्षान्यो वसूनि प्रसुवते न तु भुञ्जते, सतां विभूतयः परोपकृत्यै भवन्ति । यतः—

"सन्तः परोपकाराय, स्वक्लेशं गणयन्ति न । कुर्युर्नोऽन्येषु किं छाया–मातपस्थाः स्वयं द्रुमाः ?" ॥ १ ॥

अहं भृशं दुःखितः, त्वं च परदुःखक्षयक्षमः, आवयोश्च योगोऽभवत्, तत् स्वोचितं कुरु" । एवं निशम्य उत्साहोत्कण्टकाऽङ्गभृद् नृपो दध्यौ–'अयं परोपकारस्याऽवसरो मम भाग्यादागमत् । यथा शूराणां रणः, तर्कविदां वादिसमागमः, निदेशिनां करोद्ग्राहादिषु स्वाम्यादेशः, दुर्भिक्षे क्षुधितानां सत्रागारनिमन्त्रणं,

भिषजां बृहद्गृहपतेराह्वानं, रोगिणां भिषक्प्राप्तिः, दुःस्थानां च निधिः, तथा महतां हि परोपकारस्य क्षण उत्सवायते । एकतः परोपकृतिजं पुण्यम्, अन्यतश्च सर्वपुण्यानि, तत्राऽऽद्यं तु विशिष्यते । सन्तो हि प्रायः परोपकारपुण्याऽन्नसंविभागमितंपचा भवन्ति, तद् एक एव करिष्यामि' । एवं विचिन्त्य भूपतिर्हर्षात्तं जगाद–'एकोऽपि परोपकृतिकर्मसु प्रभुरस्मि' । इत्युक्त्वा श्रीजयो भूपतिः खेटेन सह विमानमारुह्य श्रीनगेऽयासीत् । अथ पवनवेगः कश्चन खेटं सलेखं प्रेष्य श्रीजयानन्दस्य पित्रे धैर्यार्थं तत्रागमनादि न्यवेदयत् । ततः स खेटेशः श्रीजयानन्दं जगाद–'प्रभो ! योगिनीवशताकृते ज्वालामालिनीं विद्यामादाय तां साधय । सा हि मम क्रमागताऽस्ति, परं बहूपक्रमसाधनां तां तादृक्षसत्त्वाऽभावाद् न साधयितुम् ईशे' । ततः श्रीजयानन्दस्तस्मात् तां साधनाविधिसंयुक्तां विनयादिविधिनाऽलात् । ततः खेटं जगौ–'लक्षशो बिल्वहोमादि सावद्यं कः करिष्यति ?, विद्याः सत्त्वेन सिध्यन्ति, तत्तदेव साधनमस्तु' । अथ भूपः स्नानादि कृत्वा शुचिर्भूत्वा, साधर्मिकीधिया भक्त्या विविधं देवीमभ्यर्च्य, उपोषितोऽन्यमपि निःशेषविधिं कृत्वा, देवीदृशोः पुरः पूर्वाभिमुखो दर्भासने पद्मासनस्थितः, परमेष्ठिपदादिभिः स्वस्य रक्षां विधाय, क्षेत्राधिष्ठायकादीनां कायोत्सर्गान् कृत्वा, ध्यानलीनमनो विद्यां जपितुं प्रारेभे । अथ द्वितीयेऽह्नि एतद्विज्ञाय योगिन्य इहाऽऽगमन्, तद्विद्यासिद्धितश्च भाविस्ववशीकारशङ्कया तत्क्षोभार्थं प्रतिकूलोपसर्गैरुपचक्रमुः । तथाहि–शतशः सफूत्कारा महाकाया नागास्तं नरेन्द्रं वेष्टं वेष्टं सर्वतश्च दंशं दंशं निर्विण्णा भग्नदंष्ट्रा-ऽस्थिमणयोऽपासरन्, परं जैनरक्षानुभावतोऽस्य रोमाऽपि तैर्न बिभिदे । ततो गजेन्द्रा मुक्ताः, ते च रदैर्वि-

विषं विन्यधुः, पद्भिः करैश्च जघ्नुः, परं तं ध्यानान्नाऽचीचलन्। एवं घोररवास्तीक्ष्णदंष्ट्रा व्याघ्रा नखैरिमं घातं घातं निर्विण्णाः, न च तं रोम्णाऽप्यचुक्षुभन्। ततस्ता योगिन्यः प्रज्वलन्तं त्रटत्कारभयङ्करं ज्वालाकुलं धूमान्धितहरिद्गणं वह्निं विचक्रुः, तेन महातापेन सर्वतो ज्वलितमिवाऽभूत्, परं महीपतिर्मनागपि न ध्यानक्षतिं निन्ये। ततस्ता योगिन्यो घोररूपा भूत्वा, प्रज्वलद्भीष्मलोचना, नगगुहानिभै रौद्रैर्वक्त्रैः ज्वलनं वर्षन्त्यो, डमड्डमरुकध्वानैर्गिरिगुहा घोषयन्त्यः, सफूत्कारैरट्टाट्टहासैर्नभस्तटं स्फोटयन्त्यो, ज्वलद्धल-खड्ग-तोमर-मुद्गरान् नर्तयन्त्यः, पदाघातैर्मेदिनीं कम्पयन्त्यो नादयन्त्यश्च 'अरे रे मूढ! अस्मान् अनभ्यर्च्य किं विद्यां साधयसि ?, तदुत्तिष्ठ, द्रुतं नंष्ट्वा गच्छ, नो चेद् मरिष्यसि' इत्यादि प्रवदन्त्यस्तं हन्तुं प्रधाविरे। ता विविधैरस्त्रैर्जघ्नुः, परं जैनरक्षा-स्थिरध्यान-महासत्त्वाऽनुभावतो घाता न प्रबभूवुः। तादृशे हि देवोऽपि न प्रभविष्णुः, कियत्पुनस्ताः ?। एवं दिनत्रयं विविधानुपसर्गान् कृत्वाऽस्मिन् रोम्णाऽप्यक्षुब्धे खिन्नास्ता भृशं निर्वेदं प्रापुः। ततस्ता दिव्याङ्गनारूपाः सर्वाङ्गालङ्कृतियुता रूप-यौवनरम्याः पूर्णेन्दुवदनाः पद्मपत्राक्ष्यो गजगतयः कम्बुकण्ठ्यः पीनस्तनद्वया दिव्यवासांसि वसाना पीकवन्मधुरस्वराः सलीलं तमुपागमन्, मन्मनध्वानं चाऽभ्यधुः—"अहो स्वामिन्! चिरं जय जय, अहो! तव सत्त्वमद्भुतम्, अहो! धैर्यम्, अहो! शौर्यम्, अहो! तव गुणवैभवम्। सकारणान् एतानुपसर्गान् क्षमस्व, हेतुश्चाऽत्र रूप-यौवन-साहसैर्युक्तं नरं पतिं कृत्वा तद्वशा वयं भोगासक्ताः क्रीडामः। तत्त्वां सुरूपं युवानं च वीक्ष्य कृत्रिमैरुपसर्गैस्ते सत्त्वं परीक्षितम्, असात्त्विके हि वयं न रज्यामः। तदस्मान् कान्ताः स्वीकृत्य मनुजात्माऽपि सुदुर्लभान्

दैवतान् भोगान् भुङ्क्ष्व, स्वैरं च विष्टपे[1] क्रीड। ध्यान-तपो-जपैर्विद्यायाः सिद्धौ मा क्लेशिष्ठाः, यतोऽस्मासु कान्तासु सतीषु स्वयमेवैषा सिध्यति। अन्या अपि पाठसिद्धहिता विद्याः प्रदास्यामः, ताभिर्विश्वं वशीकृत्य चक्रिसमो नृपो भव। परा अपि यथारुचितं नारीः पाणौ कुरु, यतो वयं दूरादपि समस्तमिष्टमाकर्षामः। अस्मद्भोगानुभावतो जरा[2]ऽक्षग्लानि[3]रामयैश्च[4] नैष्यंति[5], बलक्षयश्च न भावी। युगपद् बहुभी रूपैरस्माभिः सह क्रीड, यत् शक्रस्यापि दुर्लभं तत् कामसौख्यमाप्स्यसि"। तासामित्यादयो जगन्मोहकिरो गिरो नृपे जलभृते कुम्भे जलक्षेपमनुचक्रुः। ततस्ता मिषैर्मुहुर्मुहुः स्तनो-रु-नाभ्यादि स्फोटयन्त्यो, अन्तराऽन्तरा च चुम्बना-ऽऽलिङ्गनादीनि कुर्वन्त्यो मृदङ्ग-पटहध्वान-वीणा-वंशादिनादतो नर्तितुं प्राक्रमन्त, एवं च मोहनमगायन्, तथाहि—

"अम्हें आवी चउसठि जोगिणी, नित विलसो नव नव भोगिणी।
हुअ काममहाज्वररोगिणी, रति न लहें तुम्ह वियोगिणी॥
इम गायइ रंगें कामिणी, नवजुव्वण नच्चइ[6] जोगिणी॥ १॥
अम्हें रंभा-गोरीअ अंगिणी, नर सोहगसुंदरी रंगिणी।
जगजोइ अ जोइणी लिंगिणी, सवि सुर-नर विजिउं रंगिणी॥ इम गायइ०॥ २॥
तव रूव-सुहागिहिं[7] राचति, इह आवि हरिसिइं नाचति।

१ जगति। २ वृद्धत्वम्। ३ इन्द्रियग्लानिः। ४ रोगः। ५ नाऽऽगमिष्यति। ६ नृत्यति। ७ रूप-सौभाग्याभ्याम्।

तुंह पियतम पांमी मलपती, नवि मूकुं कहमवि जीवती ॥ इम गायइ० ॥ ३ ॥
वर चंपक सोवन गोरडी, गुण गाती भांभर भोलडी ।
पयसेव करेस्युं तोरडी, अम्हें छइयें सोहग ओरडी ॥ इम गायइ० ॥ ४ ॥
अम्ह अंग सुगंधिहि महमहिं, दिसि पसरिअ परिमल जे वहिं ।
नवपउमिणी मालती केवडी, हिमवालुअ मृगमद चेवडी ॥ इम गायइ० ॥ ५ ॥
अम्ह पाइं नेऊर रणझणें, करे कंचण कंकण रणरणें ।
उरि मोतीहार सुलहलहें, तुम देखी हियडुं गहगहें ॥ इम गायइ० ॥ ६ ॥
अम्ह कानें कुंडल झलहलें, तनु मनमथकंडु भलहलें ।
अम्ह माथे झलकें राखडी, गलिं झवकत माणकपदकडी ॥ इम गायइ० ॥ ७ ॥
अतिसोहति निलवटितिलकडी, मणिमेहलि मोहइं कडितडी ।
भुजि अंगदजुअलि मणिजडी, अम्ह सांभल पिउडा ! वातडी ॥ इम गायइ० ॥ ८ ॥
अम्ह अंगुली दीपइं मुंद्रडी, तुम्ह विरहें नावे निंद्रडी, ।
मणी-सोनन खलकत चूडला, प्रिय पांमी पुण्यें सुअडला ॥ इम गायइ० ॥ ९ ॥
उतकंठें आवी वहेलडी, घणे लाडे प्रेमें घेलडी ।
रगें नाचुं लोडत वाहडी, तुम करिस हुं हाथे छांहडी ॥ इम गायइ० ॥ १० ॥

अम्हें कंथ! तुंम्हारी दासडी, सिर वहेस्युं तुम्हरी खासडी ।
तुम्ह लोपुं आण न लीहडी, ऊरि धरस्युं तोरी सीखडी ॥ इम गायइ० ॥ ११ ॥
अम्ह साहमुं जोइनइं सामिआ!, तें अलविं अम्हि सवि पाविआ ।
अम्हें देवहं देवीहं सामिणी, तुंह आवी सयंवर कामिणी ॥ इम गायइ० ॥ १२ ॥
उठि उठिनइं कंथ! करी कृपा, अम परणि न मेल्हि न हवि त्रपा ।
अम्हें तेवडि तेवडि बेनडी, सवि एकमनी सवि नान्हडी ॥ इम गायइ० ॥ १३ ॥
अम्हें कालविलंबण नवि सहुं, तुज आगल परमथ हवि कहुं ।
अम्ह जीव अने धरी हाथडी, कर तेडीने आपण साथडी ॥ इम गायइ० ॥ १४ ॥
सुरसुंदरी चंग सोहागिणी, कंथ कांय उवेखे सुरागिणी ।
अम्हें जीवियें सरणे तुज तणे, हवें पडिवज जोइणी इम भणे ॥ इम गायेइ० ॥ १५ ॥

इति विश्वमोहनैर्मृतस्यापि श्रीभुव उज्जीवनैर्हावभावादिभिः सर्वशक्तितो नर्तं नर्तं तथा गायं गायं तां निर्विदुः, परं तस्य तु रोमाऽपि नाऽचलत्, किं वज्रे टङ्का लगन्ति ?। ततः सप्तमेऽह्नि सूर्योदयेऽस्य

१ प्रतिपद्यस्व—स्वीकुरु । २ एतत् सुस्वरं कौतुकार्थिजनानां हितं कौतुकमात्राद् नृपशीलगुणद्रढिमख्यात्यै जिनधर्मदीप्तये च विहितं, परं विज्ञैः सभामपेक्ष्यैव वाच्यम्, न तु यथा तथा सर्वत्र । रागाश्चाऽत्र विचित्रा वसन्तादयस्तथा ढालाश्च वक्तव्याः । ( इति ग्रन्थकारः ) ३ कामस्य । ४ योगिन्यः । ५ निर्विण्णाः—खिन्नाः । ६ श्रीजयानन्दस्य ।

मूर्ध्नि पुष्पाणि वर्षन्ती, देहकिरणैरभितो दश दिशो भासयन्ती, आकाशं द्योतयन्त्या मूर्तया सिद्धविद्यया सह तुष्टा महाज्वाला देवी प्रादुरभूत्। तां महाज्वालां वीक्ष्य योगिन्यो नेशुः। देवी भूपं मधुरध्वानमभ्यधात्–'हे वत्स ! तव जगज्जितः शील-ध्यानस्थैर्याद् अहं तुष्टा, परं विधिं विना वरं दातुं न प्रभविष्णुः। तद् वत्स ! विधिं कुरुष्व चेद् मत्तो वरमीहसे'। भूपः प्रणम्य तामूचे–'स्वामिनि ! वद, को विधिः ?'। साऽप्याख्यत्–'मम प्रीत्यै एकस्य प्राणिनो मांसं देहि'। स ऊचे–'अहं जैनो निरागसं जन्तुं नैव हन्मि। चेद् आमिषेणैव तुष्यसि तत् स्वं छित्त्वाऽहं ददामि'। देव्युवाच–'एवं भवतु'। ततो भूपतिः खड्गेन यावदूरू छिनत्ति तावत्सा खड्गमाच्छिदत्, उवाच च–'जैन्या मम पलेन न प्रयोजनम्, अहं तव दया-सत्त्वा-ऽऽर्हतत्वानि पर्यैक्षिषि। साधर्मिकाय तुभ्यं तुष्टा इमां पाठसिद्धां विद्यां ददे, तद् योगिन्याद्याकर्षणाय आकर्षिणीं विद्यां लाहि'। तता भूपो मुदोत्थाय, भक्त्या देवीं प्रणम्य अर्घं च प्रदाय, विधिपूर्वकं विद्यामाददे। ततो भूपदत्तार्घा देवी दैवादित्रैधोपद्रवहारिणौ अङ्गदौ, सूर्यहासमसिं, रिपुचक्रतमोऽपहं चक्रं, शक्तिं च तस्मै दत्त्वा तिरोदधौ। अथ राज्ञाऽभ्यर्चिता प्रणता स्तुता च सा दिव्यमूर्तिर्ज्वालामालिनी विद्या जगाद–'हे वत्स ! शृणु, याऽहं सुकृच्छ्रैर्लक्षादिजप-होमाद्यैर्बहुनेहसा सिध्यामि साऽहं तव शीलगुणेन अल्पप्रयासेन सिद्धाऽस्मि। स हि शीलगुणो धर्मेष्वनुत्तरोऽस्ति, तेन सुरा आकृष्यन्ते, अखिलाश्च विद्याः सिध्यन्ति'। इत्युक्त्वा सा तस्य भूभुजस्तन्नाम् अविशत्, या संस्मृता विश्वमोहिनी इष्टान् सर्वाऽर्थान् ददाति। ततः श्रीजयानन्दो देवीमूर्तिमभ्यर्च्य सन्निहितांश्च सुरान् बल्याद्यैः प्रीणयित्वा देवतागृहाद् निरगात्।

अथ खेटराट् सपरिवारोऽभ्येत्य नत्वा च विद्यासुखसिद्ध्यादिकमप्राक्षीत् । भूपोऽपि यथातथमूचे । ततः सर्वैश्चमत्कृतैः स्तूयमानो गाम्भीर्यवारिधिः स जिनमभ्यर्च्य गुरूंश्च नत्वा, विद्याधरैः पक्कैरमृतोपमैराहारैरष्टमेऽह्नि विद्याधरयुक् तदाग्रहाद् विधिना पारणमकार्षीत् । पवनवेगोऽस्मै नररत्नाय सुमुहूर्ते परा अपि गगनगामिन्याद्या विद्या यथाविधि ददौ । भूपोऽपि शील-सत्त्वानुभावतस्ताः पाठसिद्धा मासादिसाध्या अपि यामादिभिरसाधयत् । अथ श्रीजयानन्दो भूपः पवनवेगयुग् जालन्धरे पत्तनेऽगमत् । तत्र पीठस्थो विद्यां स्मृत्वा सर्वा योगिनीराकृष्य जगौ–'रे रे ! पवनवेगस्य सुतं मुञ्चत, अन्यथा युष्मान् न मोक्ष्यामि' । ततोऽङ्गदानुभावेन ता अप्रभवन्त्यो जगुः–'स्वामिन् ! मोक्ष्यामः, अस्मान् मुञ्च' । तदा मुक्तास्तास्ततोऽगमन्, भग्ननिगडं च पवनात्मजं द्रुतमानीय तयोरुपदीचक्रुः । सोऽपि तत्पादेष्वपतत् । पवनवेगः सुतमालिङ्ग्य, योगिनीग्रहादारभ्य सर्वं भूपस्याऽऽनयनादिवृत्तान्तमाचख्यौ । जगौ च–'वत्स ! त्वं केनापि योगिनीग्रहान्न मोचितः, अयं तु राजराजस्तव मोचनाय प्राणानदात्' । एवं निशम्य वज्रवेगो मुदा नृपं तुष्टाव । अथ ते यावत् खे यान्ति तावद् योगिन्य ऊचिरे–'हे राजन् ! अस्माकं भाग्यैः प्राप्तवानसि, अतोऽद्य त्वमतिथिर्भव' । भूपोऽपि तत्प्रार्थनाभङ्गभिया ताभ्यां द्वाभ्यां समम् अस्थात् । योगिन्यस्तान् स्नेहेन स्नानादिविधिना सुधाहारान् भोजयित्वा गीत-नाट्यैरपिप्रिणन् । अथ निशि भूपं वाराह्या भवने तौ च खेटौ ब्राह्या भवने सुगन्ध्यतिमृदुस्पर्शदिव्यशय्यासु अशाययन् । ततस्ता गत्वा स्वामिन्याः कामाक्षाया हठात्स्वाकर्ष-खेटमोचनादिभवं तं पराभवं जगुः । साऽपि क्रुद्धाऽवादीत्–'अहं तं शीलाद् भ्रंशयित्वा

नियम्य च भवतीभ्योऽर्पयिष्ये, ततः स्वेप्सितं क्रियासुः। मम रूपदर्शनाद् हरि-ब्रह्मे-श-देवेन्द्रा अपि मुह्यन्ति, ततोऽस्य मनुष्यमात्रस्य मत्पुरः किं शीलम् ?'। एवमेता आश्वास्य विसृज्य च कामाक्षा विश्वैकमोहनं निजं दिव्यं रूपं प्रादुष्कृत्य नृपसमीपं ययौ। सा योगिनीवत् कृताऽनेकस्मरोज्जागरचेष्टिता भोगाय प्रार्थयन्ती तं सर्वरात्रमचुक्षुभत्, परं शीलामृताऽऽशितः स उच्छिष्टं भोज्यमिव तां नैच्छत्, जैनोक्तिभाविताः सन्तः किं परस्त्रीषु रज्यन्ति ?। ततः सा निर्विण्णा शीलचमत्कृता च तुष्टाऽस्मै प्रातर्वज्रसन्निभं लोहमुद्गरं ददौ। तथाऽक्षय्येषू तूणीरौ, वज्रपृष्ठं धनुः, आग्नेय-नागपाशादीनि अनेकशो दिव्यास्त्राणि, तथा यस्मिन् परिहिते शीता-ऽऽतप-जलक्लेद-वह्निदाह-व्रणादयः कुष्ठ-कण्डू-ज्वराद्याश्च न भवन्ति तत् सर्वाङ्गसुखदस्पर्शम् अभङ्गुरम् अनश्वरं सदोद्द्योतम् अम्लानस्तु नेपथ्यं ददौ। तथा मरकाद्युपद्रवहृन्मौलिं, ज्वराऽपहे कुण्डले, कुष्ठादिव्याधिहृत्कण्ठभूषां, गराऽपहां मुद्रां, शाकिनी-व्यन्तरादीनां दोषहारिणी केयूरे, घातादिव्रणपीडाघ्नान् माणिक्यकटकान्, सर्ववशीकारं हारं, सूत्रकृत्कटीसूत्रम्, एवं सप्रभावाः सर्वाङ्गालङ्कृतीः सा ददौ। तुष्टा देवाः किं न दद्युः ?। अथ नृपदत्ताऽर्घा सा तिरोदधे, गत्वा च योगिनीः प्रति ऊचे— 'भो भोः! सूपक्रमाऽप्यहं तं शीलाच्चालयितुं न क्षमे, तद् युष्माभिः स्वहितेच्छुभिर्विविधसत्कारैः स आराध्यः, यतः सत्क्षेत्रे बीजानीव ईदृग्गुणे सत्कारा द्राक् फलन्ति। ताभिः 'ओम्' इत्यङ्गीकृते कामाक्षा स्वपदं ययौ। अथ भूपः खेटाभ्यां सह क्षणं पीठमुपास्थित। योगिन्यः पुराऽप्यस्य शीलस्थेमाऽनुभूतितश्चमत्कृतास्तुष्टाश्च सम्भूय तमुपागमन्। ततः क्षमयित्वाऽस्मै शुद्धान्तललनोचिताः सर्वाः स्वाः स्वा

दिव्यनेपथ्या-ऽलङ्कृतीः पृथक् पृथग् ददुः, बह्वीरन्तर्धानादिशक्तीर्दिव्याऽऽयुधानि च ददुः। अथैता वज्रवेगेण पूजा-स्तोत्रा-ऽर्थनादिभिस्तोषिताः किञ्चिद्विमत्सरा राज्ञो वचसा दाक्षिण्याच्च तस्मै वज्रवेगाय हेमकूटगिरिं ददुः। ततस्ता दत्तार्घास्तिरोदधुः। योगिन्यस्तत् कुमारस्य चरित्रं सरसै रासकादिभिर्बद्धाऽद्रि-वनादिषु क्रीडन्त्यो गायन्ति। ताभ्योऽधीत्य खेचर्यः, ताभ्यश्चाऽधीत्य पृथिव्यङ्गना गायन्ति; एवं तच्चरित्रं भुवनेऽप्यहो! प्रसिद्धं जज्ञे। अथ त्रयोऽपि ते मुदिता हेमकूटाद्रिमाययुः, तत्र सुस्थिताशयाः प्राग्वद् हेमपुरम् अवासयन्। एवं शीलगुणेनाऽयं भूपतिर्विद्यौ-षधी-देवतासत्कारस्तवनान्यवाप, अतः सुधियोऽत्रामुत्र च सर्वसुखप्रदं तमेव दधताम्।

॥ इति श्रीतपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दराजर्षिकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे श्रीजयानन्दराज्याऽवाप्ति-विद्यासिद्धि-योगिनीदेवीप्रसाद-योगिनीवशीकार-दिव्यास्त्रादिसमृद्धिप्राप्तिनिदानशीलावदातवर्णननामा एकादशः सर्गः ॥

## अथ द्वादशः सर्गः।

विकटकर्मवनेषु मतङ्गजः, परमतव्रजवाजिषु कासरः।
मकरकेतुमतङ्गजकेसरी, जिनवरः सुव्रतोऽस्तु स वः श्रिये ॥ १ ॥

अथ श्रीजयानन्दभूपः स्वं कृतार्थं मन्यमानो निजे पुरे गन्तुं तं खेटपमापृच्छत। स दध्यौ–"अयम् उपकृत्य कृतार्थत्वात् प्रत्युपकारतो भीरुः कनीपाणिग्रहाय नैष्यति। यतः—

"इयमत्र सतामलौकिकी, महती काऽपि कठोरचित्तता।
उपकृत्य भवन्ति दूरतः, परतः प्रत्युपकारभीरवः" ॥ १ ॥

तद् उपायान्तरेणैव नेयः, ज्ञानिगिरा भाग्यैर्लब्धस्याऽस्य कनी देया, ईदृगन्यो विष्टपे नास्ति"। ततः स खेटपोऽवक्–'परोपकृतिकर्मणा कृतार्थोऽपि वैताढ्ये विविधाः सिद्धजिनार्चा नन्तुमर्हसि'। इति श्रुत्वा नृपो मुदा यावज्जिनान् नन्तुमुद्यतस्तावत् कश्चित् खेटो विमानादुत्तीर्य तं ननाम। श्रीजयोऽप्राक्षीत्–'भोः! कस्त्वम्?, किमिहागमः?'। स यावत्तदुत्तरं वक्ति तावत्पवनवेगोऽब्रवीत्–'अये खेटराड् वन्धो चन्द्रगते! चिराद् दृष्टोऽसि। सशोक इव किं लक्ष्यः?। दक्ष! अस्य भूपतेराचक्ष्व। अयं हि वीरः सर्वेषां दुःखहृत् प्रार्थिताऽर्थकृच्च'। इति श्रुत्वा स नृपं स्माह—

"प्रभो! मम वृत्तान्तं शृणु। तथाहि–वैताढ्ये दक्षिणश्रेण्याम् अहं चन्द्रपुराधिपश्चन्द्रगतिः खेटोऽस्मि। मम प्रिया चन्द्रमालाऽस्ति, यद्रूपेण निर्मदा गौरी विरूपाक्षेऽपि शम्भौ रज्यते, रम्भा कौशिकेऽपि भर्तरि रज्यते, लक्ष्मीश्च जनार्दनेऽपि रज्यते। तया साकं भोगान् भुञ्जानस्य मम चन्द्रसुन्दर्यभिधाना तनयाऽभवत्। सा क्रमात् सकलाः कला दध्रे, यौवनं च प्राप, परं स्वाऽनुरूपं वरं नाऽऽप, यतस्तद्रूपादिगुणैरनुरूपताम् इन्द्रोऽपि न धत्ते। इत्थं तस्या वरं वीक्षे, महीभृतां विद्याभृतां च कुमारा वीक्षिताः, परं तद्योग्यं न प्रापम्।

अन्यदा स्निग्धया प्रियया सह संसारसुखगृद्धो मानसे गत्वा अम्बुकेलिभिर्यावत् क्रीडामि तावत् कश्चित्सुरो विमानादवतीर्णवान्, स्नात्वा च रूपेणाऽतिसुराङ्गनां मत्पत्नीं वीक्ष्य दीप्तकामः स श्येनो वर्तिकामिव तां गृहीत्वा स्वविमाने आरुह्य जवाद् गगने जगाम। अहं क्रुधा आकृष्टाऽसिराक्रुश्यन् तमन्वधाविषम्। माम् आसन्नागतमालोक्य स क्रोधोद्धुरः सुरो द्रुतं विमानादागत्य मुष्टिना मूर्ध्न्यताडयत्, तद्घातव्यथितोऽहं मूर्च्छितो वाताद् विच्युतन्नालिकेरवत् क्वचित् सरसि पद्मिनीजाले न्यपतम्। ततो जलाऽब्ज-शीतवातैर्गतमूर्च्छो व्यलोकयं, परं क्वचिद् यातं तं सुराधमं नैक्षिषि। ततः प्रियावियोगार्तो विलक्षो बहु व्यलपं, गतचैतन्य इव च कथञ्चिद् धाम्नि अगाम्। अथ तत्स्वरूपं पृष्टोऽहं मन्त्र्यादीनां न्यवेदयं, ते च मामाश्वास्य पत्नीशुद्धये भटान् प्रैषयन्। तेऽपि भटा नानासरः-सिन्धु-वन-द्वीप-नगादिषु चिरं पत्नीं शोधयित्वा तदनवाप्सितो विलक्षा मम तत्स्वरूपं न्यवेदयन्, तच्छ्रुत्वाऽहं मूर्च्छितः। ततो मन्त्रिभिः सज्जितः, उपदेशैश्च बोधितः। 'अथ कदाचित् प्रभुर्विद्याबलैर्ज्ञात्वा मम प्रियां मोचयेत्' इत्याशावशगोऽन्येद्युर्विद्याधरेशितुश्चक्रायुधस्य स्वामिनः समीपे गत्वा दुःखार्तोऽहं तद् न्यवेदयं, परं समर्थोऽपि स किञ्चित् परित्राणं न चकार। पुंसां भाग्यानि फलन्ति, न तु स्वामिसेवादयः। यतः—

"तोषं नयेन्द्रमपि चक्रधरं भजस्व, मन्त्रान् प्रसाधय वशीकुरु चेटकादीन्।
दुर्गाण्यटाऽतिविकटांस्तर वारिराशीन्, भाग्यं विना न हि तथापि समीहिताप्तिः" ॥ १ ॥

ततोऽहं विलक्षः स्वपुरोद्याने यावदुपैमि तावत्तत्र चारणश्रमणं ज्ञानिनमैक्षिषि। तदा उल्लसच्चित्तो

मुदा तं नत्वा सपरिच्छद उपाविशम् । मुनिराशीःपूर्वकं धर्ममुपादिशत् । तथाहि—

"देवो जिनेन्द्रो गुरवश्चरित्रिणो, धर्मस्तदुक्तश्च दयादिपावनः ।
सुता विनीताः प्रणयी परिच्छदो, मनोऽनुगाः स्थूलललनाश्च पुण्यतः ॥ १ ॥
नीचैःकुले जनिरपारदरिद्रभावो, दौर्भाग्यमामयततिः कुकुटुम्बयोगः ।
वाग् निष्ठुरा वध-पराभव-दुर्यशांसि, प्रेष्ठैर्वियुक्तिरिति पापतरोः फलानि ॥ २ ॥
तस्मात् पापं परित्यज्य, धर्मे कार्या रतिर्बुधैः । इष्टार्थप्राप्तयेऽनिष्ट-वियुक्त्यै च सदाऽर्हते" ॥ ३ ॥

इति मुनेर्वाचमाकर्ण्याऽहमवोचम्–'हे भगवन् ! मम चित्ते पत्नीवियोगात्स्वास्थ्यं नास्ति, तद्विना च धर्मो न भवति । तद् ज्ञानिन् ! प्रसद्य वद, केन किं च मम प्रिया हृता ?, कुत्राऽस्ति ?, कथं च लप्स्ये ?, अथवा पुनर्न लब्धा ?। मम पुत्र्याः को वरोऽर्हः ?। त्वां च वीक्ष्य मुदा मम हृदयं किमुल्लसति ?। स्वामिन् ! इत्यादि सर्वं ब्रूहि, भाग्यतः प्राप्तोऽसि' । अथ मुनिर्जगाद—

"भद्र ! अस्माकं पूर्वभवादि शृणु, येन यत्सर्वं सहेतुकं पृष्टं तद् ज्ञास्यसि । तथाहि–अत्रैव भरते सिद्धपुरे जिनधर्मरतः पूर्णभद्राभिधानः श्रेष्ठ्यभवत् । तस्योभौ सुतौ नाम्ना कोशल-देशलौ बाल्येऽपि जैनधर्माढ्यौ सम्यक्त्वव्रतशालिनौ अभूताम् । अथ तत्र पुरे श्राद्धगुणाग्रणीर्गुणदत्तः श्रेष्ठ्यभूत्, अस्य गुणमाला प्रिया, सुता च गुणसुन्दरी बभूव । सा गुणसुन्दरी अतिरूपा कलाभिज्ञा बाल्यादपि देव-गुर्वादिभक्ति-

भृद् अर्हद्धर्माऽनुष्ठानैकरताऽभवत्। अन्यदा देवराजनृपस्य सागरः सचिवस्तां चैत्ये वीक्ष्य अनुरागतः श्रेष्ठिनं ययाचे, स तु मिथ्यादृशे तस्मै नियोगिने न दित्सति, यतस्ते प्रायः पापार्जितद्रव्या गत्वरश्रियः स्युः। अथ कोशलो वरश्राद्धसुता द्विधा गुणवतीं परिणिन्ये, ततस्तत्पिता पूर्णभद्रो विधिना दिवि अगात्। कियत्सु दिनेषु गतेषु कोशलो भ्रात्रे देशलाय गुणदत्तश्रेष्ठिनं तां गुणसुन्दरीं कनीं ययाचे। तदा गुणदत्तः साधर्मिकत्वाद्यैर्गुणैर्देशलाय स्वकनीं ददौ, तौ च जातोद्वाहौ सधर्मकौ प्रीत्या सुखायेते। तच्च विज्ञाय तां यथा यथा वीक्षते तथा तथा खिद्यमानोऽसौ रागी सचिवो देशले द्वेष्टि।

"अथ तत्र वैश्रमणो धनी श्राद्धः श्रेष्ठ्यभवत्, गुणशालिनस्तस्य धनो धनपतिर्धवलः सुयशाश्चेति चत्वारस्तनया बभूवुः। जातपाणिग्रहास्ते परिणामहिताऽर्थिना स्वयं धर्मं चिकीर्षुणा पित्रा यथार्हं विनियुक्ताः सादरं धनमर्जन्ति। अथैवं बहौ काले याते प्रान्ते धर्मवित् सुधीः श्रेष्ठी स्वजनान् आकार्य, मृत्यूचितं कार्यं कृत्वा, सप्तक्षेत्र्यां व्ययाय मुदा सप्तलक्षीं ददौ। ततः स सुतान् जगौ—'परस्परं सदा प्रीत्या वर्तितव्यम्। दैवात् कदाचिचेद् अप्रीत्या पृथक् पृथग् भूयते तदा गृहचतुष्कोण्याम् ईशान्यादिविदिक्क्रमाद् मया समभागधनाः कलशा निहिताः सन्ति, तान् क्रमादादाय पृथग् भाव्यं, न तु धनाय कलिः कार्यः, तं च कलिं कुर्वाणा इमे स्वजनैर्वार्याः'। एवं स सुधीस्तनयान् स्वजनांश्च दृढं प्रतिपाद्य विधिना व्रतमाराध्य स्वर्गसुखमासदत्। तनया अपि पितुर्गिरा प्रीत्या चिरं प्रावर्तन्त। अन्यदा दारैः प्रेरिता एते पृथग् बुभूषव ईशान्यादिक्रमात् स्वस्वनामाङ्कान् कलशान् भूमेः कृष्ट्वा व्यलोकन्त, तेषु ते क्रमाद् मृत्स्न-

ण्डम् अस्थीनि लेख्यकस्य कागदान् रै-मणींश्च निरैक्षिपत। ततः पूर्वे त्रयः खिन्ना व्यचिन्तयन्—'हहा! धर्मस्थेनाऽपि तातेन कथं वञ्चिताः स्मः?, सर्वां श्रीरेकत्र कृत्वाऽस्मै प्रेयसे कनीयसे आर्पि। ततोऽस्माद् हठादाच्छिद्य चत्वारोऽपि समैर्भागैर्विभज्य ग्रहीष्यामः, वञ्चना हि प्रमाणं न भवति'। ततस्ते तां विभक्त्यै लघुभ्रातरमयाचन्त, स तु पितुर्वाचा न दत्ते। ततस्तत्कलहं मत्वा तत्र स्वजनाः समुपागमन्, भ्रातरस्तान् चतुष्कुम्भीस्वरूपमजिज्ञपन्। तेऽपि एकतस्तेषां तातोक्तकारणे स्वं प्रतिभूत्वम्, अन्यतश्च ईदृक् स्वरूपं मत्वा संशयेऽपतन्। अथ तैर्विवादेऽभग्ने भ्रातरः स्वजनैः सह राजकुले गत्वा भूपं तत्स्वरूपं व्यजिज्ञपन्। भूपोऽपि स्वयम् अक्षम एकोनपञ्चशतीमितान् सागरादीन् धीसखान् न्यायं कर्तुमादिशत्। तेऽपि पटुबुद्ध्या विमृश्याऽपि तद्विधौ न शेकुः। ततो नृपः पुरे पटहेन इत्युदघोषयत्—'य एतं विवादं भनक्ति तं मन्त्रिणां धरि कुर्वे'। तच्छ्रुत्वा सुधीः कोशलः पटहं पस्पर्श। ततो राज्ञः पुरो गत्वा तान् भ्रातॄन् पप्रच्छ—'भो! ब्रूत, ताते जीवति कः कं व्यापारमादधौ?'। आद्योऽवोचत्—'अहं क्षेत्रधान्यादिव्यापृतिं व्यधाम्'। कोशलोऽप्राक्षीत्—'पितुः समये कियत् सस्यमभवत्?'। सोऽवक्—'सर्वाग्रतो लक्षमूटकप्रमितम्'। ततस्तद्विद एतस्य पञ्चदशलक्षमूल्यं चक्रुः। द्वितीयोऽवक्—'तुरगादीन् पशून् दश सहस्राणि अपणायं, तन्मूल्यं पञ्चदश लक्षा अभवन्'। तृतीयः स्माह—'अहं वृद्ध्यादिव्यवहारं व्यधाम्, अमुना च माण्डलिकेभ्यः पञ्चदश लक्षा लभ्याः'। तुरीयोऽवादीत्—'अहं तातेन कोशेऽधिकृतोऽभवम्, तस्यापि भागो मूल्यात् पञ्चदशैव लक्षा अभवन्'। अथ कोशलो नृपं स्माह—'यो यत्र कर्मणि दक्षस्तस्मै पिता सममेव अंशं तदनुगाः श्रियोऽ-

दात् । तथाहि–मृदा क्षेत्रसस्याद्यम् अदात्, अस्थिभिश्च तुष्पदान्, लेख्यकैर्लभ्यं धनं, तुर्यस्य च साक्षात् श्रियो ददौ, स हि कोशमात्राधिकारित्वात् कर्मादि न वेत्ति । तत् समेष्वपि भागेषु मुधा जडा विवदन्ते' । एवं ते भ्रातरो निशम्य तत्त्वं मत्वा प्रमोदिनः कौशलीं धियं प्रशंसन्तो नृपं नत्वा गृहे जग्मुः । ततः परस्परं प्रीतिं धीनिधौ च ताते भक्तिं वहमानाः स्वं स्वं भागमुपादाय यथासुखं प्रावर्तन्त । अथ भूपस्तद्बुद्ध्या चमत्कृतः कोशलं जगाद–'मुद्रां नय, एकोनपञ्चशतीधुरि अमात्यो भव' । स ऊचे–'श्राद्धधर्मोररीकृतौ खरकर्मतया मया नियोगादि प्रत्याख्यायि, अतो मुद्रां नाऽऽददे' । ततो मुद्रां विनाऽपि नृप इमं सर्वकार्येषु प्रष्टव्यं मन्त्रिमुख्यमकरोत्, असौ च गृहव्ययं दत्ते । अथ मन्त्रिणोऽस्मै ईर्ष्यन्ति, सागरमन्त्री तु विशेषतः, प्रायो हि एकद्रव्याभिलाषिणाम् ईर्ष्या भवति । अन्यदा मन्त्रिणो नृपं स्माहुः–'स्वामिन् ! देवगिरौ दुर्दमो रिपुमर्दनस्त्वाम् अवजानाति, तत्र कोशलः प्रेष्यताम्, यतः सन्ध्यादि कुरुते । एवं च ग्रासदानं फलति, बुद्धिश्च परीक्ष्यते' । ततो राज्ञा 'तदर्हं प्राभृतं देहि' इत्युक्ते सागरस्तद्देशेऽपूर्वं तद्भूपोपभोग्यं जात्याऽश्व-वस्त्राद्यैः सहितं कियत् प्राभृतं ददौ, तथा ईर्ष्यया कोशलवधार्थिनो मन्त्रिवर्गस्य साक्षमत्याद् अन्तर्धूलिभृतस्वर्णघटं दत्ततालं करण्डकं ददौ । अथ कोशल आर्जवाद् यथार्पितं सर्वं गृहीत्वा नृपाऽऽदेशवशंवदोऽचालीत्, देवगिरौ च गत्वा भूपस्याऽग्रे ढौकनममुञ्चत् । तद् गृहीत्वा क्षेमप्रश्नादिना मोदितः कोशलो जगौ–'त्वया सार्धं संधित्सता त्वयि च स्वमित्रेऽतिप्रीतिं बिभ्रता देवराजेन भूभुजा बहुमानत इदं

१ श्रावकधर्मस्य स्वीकारे । २ अवगणयति । ३ अन्तः धूल्या भृतः सुवर्णघटो यत्र, तम् । ४ रन्ध्रं कर्तुम् इच्छता ।

प्राभृतं प्रेषि, अतः परं तव चित्तं प्रमाणम्' । ततस्तत्पुरुषैस्तस्मिन् कुम्भे उद्घाटिते सति धूलिं दृष्ट्वा क्रुद्धो नृपः कोशलं प्रति जगाद–'रे ! उन्मत्तस्तव स्वामी ममाऽप्यवज्ञया उपहारपदे धूलीं प्रेषयन् मृत एव, न संशयः । त्वां तु सपरिच्छदं क्रोधरक्षोबलिं[1] कुर्वे, परं राजप्रधानत्वाद् अवध्योऽसि, किं करोमि ? । तत् त्वरितं गत्वा स्वप्रभोरिति वाचिकं ब्रूहि–त्वां दुर्मदं हन्तुं प्राप्त एव, तद् युद्धाय सज्जो भव' । कोशलो दध्यौ–'नीतिलङ्घनाद् विश्वस्तं मां धिक्, कुधियो मन्त्रिणो मद्वधायेति चक्रुः' । ततश्चतुर्बुद्धिनिधिर्द्राग्उत्पन्नधीः स हसन् जगौ–'हे नृप ! तवाऽहो भाग्यं यद् अनया धिया राज्यं धत्से !' । राजोचे–'रे ! किमेवं वदसि ?' । सोऽप्याख्यत्–'किमु हैमे घटे कोऽपि रजः क्षिपेत् ?, हे ईश ! किम् इयदपि न वेत्सि ?' । भूपोऽवदत्–'कोऽत्र हेतुः ?' । कोशल ऊचे–"स्वामिन् ! यदि प्रसन्नोऽसि तत् तत्त्वं वदामि । शृणु–अन्यदा सिद्धपुरे भूयान् मरकोपद्रव आसीत् । तता राज्ञा अन्धलरेल्याह्वा देवी प्रयत्नतोऽसाधि । तया तुष्टया चतुष्पथाद् वह्वी धूलिर्दत्ता, ऊचे च–'अनया कृतपुण्ड्राणां[2] मरकोपद्रवाः शाकिनी-व्यन्तराद्याश्च न प्रभविष्यन्ति' । नृपस्तस्याः पूजां कृत्वा धूलीमग्रहीत् । भूभुजा तया धूल्या स्वान्तःपुरादीनां पौराणां च पुण्ड्राणि कृत्वा सर्वेऽप्युपद्रवाः क्षयमनीयन्त । हे नृपसत्तम ! तेन राज्ञा कियत्येषा धूलिस्तवोपदीचक्रे, वस्तुनो हि मृगमदादिवद् गुणा मृग्याः[3], नाऽन्यत्" । ततो राजा भृशं प्रीतो लज्जितश्च तं जगाद–'भो भो ! ममैतद् राभसिकं त्वया क्वचिन्न प्रकाश्यम्' । ततो राजा तया धूल्या स्वस्य स्वान्तःपुरस्य च

---

१ क्रोधराक्षसस्य बलिदानम् । २ कृततिलकानाम् । ३ अन्वेषणीया,–शोध्या. ।

पुण्ड्रं चक्रे, परिच्छदायाऽपि तां मुदा अंशशो ददौ । तुष्टश्च कोशलं स्माह–'भो ! निजं प्रभुं ब्रूयाः–याव-ज्जीवम् आवयोरखण्डितैव प्रीतिर्जज्ञे, तत् सुहृदा निःशङ्कमुचितं कार्यं मुदा ज्ञाप्यम्' । ततः स नृपोऽप्राक्षीत्–'हे कोशल ! तव प्रभोराज्ञाशक्तिः कीदृशी ?' । कोशलः स्माह–'भूपते ! तां नु को वक्तुमीष्टे ययाऽऽज्ञया दत्तया द्विपेन्द्राद्याः पशवोऽपि स्तभ्यन्ते' । तावत् कलकलं श्रुत्वा राज्ञा नराः पृष्टाः, ते च उन्मूलितालानं नगरोपद्रवकारिणं गजं जगुः । राजा कोशलं प्राह–'यद्येतत् सत्यं वदसि तत् तव भूपाज्ञया गजं स्तम्भय, वाच्य-वाचकयोर्योगे क्रियैव योग्या, न संशयः' । इति भूभुजोक्ते सति सोऽपि भूपादिभिः सह गत्वा तं गजं रहो मन्त्रेण स्फुटं च स्वाम्याज्ञयाऽस्तभ्नात् । ततश्चमत्कृतो भूभृत् कोशलं प्रति व्याहार्षीत्–'त्वद्भूलिसमं मम दिव्यं वस्तु नास्तीति किं ददे ?' । इत्युक्त्वा भूभुजा नृपार्होपायनान्वितं तमेव गजमस्मै दत्त्वा वस्त्रा-ऽलङ्कृत्याद्यैश्च सत्कृत्य प्रेषितः सिद्धपुरसमीपं प्राप । अथ तद्भूलीप्राभृताऽर्पणभीरुभिर्मन्त्रिभिश्चरैस्तज्ज्ञात्वा तत्र संमुखमा-गत्य भृशं क्षमितः, प्रसादितः, स्वापराधाऽकथनं च प्रतिपादितः । कोशलस्तद् गजेन्द्राद्युपायनं पुरस्कृत्य भूपं प्राणमत् । स मुदा स्वागताद्यप्राक्षीत् । 'त्वन्महिम्ना स्वागतम्' इत्याद्युक्त्वा सर्वमपि यथावत् तम् उदन्तमजिज्ञपत्, धूलिवृत्तं तु नोक्तम् । भूपस्तस्मात्प्रौढोत्कटाद् नृपाद् एवं सन्धिं तथोपदाद्यं चाऽस-म्भाव्यं विभाव्य विस्मयानन्दमेदुरस्तुष्टस्तस्मै देशम् अदित्सत्[1], परं स श्राद्धपुङ्गवः पञ्चमाऽणुव्रते प्रत्या-ख्यातत्वाद् नाऽग्रहीत् । ततः कोशलः सत्कृतः सन् स्वधाम जगाम, भूपोऽस्य बह्वपि सस्य-स्नेहादि[2]

१ दातुम् ऐच्छत् । २ धान्य-घृतादि ।

प्रेषयति। अथ तेन निगूढमपि धूल्युदन्तं नृपः कुतश्चनाऽश्रौषीत्, पापं हि दुर्गन्धिवस्तुवत् स्फुटं भवत्येव। 'धूल्युपदयाऽप्येष सुधीस्तत्कार्यं व्यधाद् यत् सर्वकोशप्रदानेनाऽपि परैः कर्तुमशक्यम्, एष हि दीयमानं देशादि तु न गृह्णाति' इति ध्यायन्नृपस्तस्मिन् अधिकां प्रसत्तिं दधौ। ततो राज्ञा धूल्यर्पणाऽऽगमा सागरो मन्त्री दण्डितः। सोऽपि 'देशलेन किल भूपस्याग्रे मद्दोषः कथितः' इति ध्यात्वा प्रागपि स्त्रीजद्वेषस्तमधिकं द्वेष्टि, यतोऽधमाः स्वस्याऽपराधं परे आरोप्य तं क्षिपन्ति। अन्येद्युर्नृपः कोशलौकसि प्रीतिदानं दश सहस्राणि स्नेहकुम्भान् दश सहस्राणि च श्रीहेमटकान् प्रैषीत्। तान् व्रताद् द्विगुणान् ज्ञात्वा धीमान् व्रतभङ्गभीरुकः कोशलः कार्यौत्सुक्यात् क्वचिद् व्रजन् देशलं स्माह—'वत्स! पञ्च पञ्च सहस्राणि सद्यः पश्चात्प्रेषय, अथवा सद्यो धर्मे ददस्व, आवयोर्व्रतं मा भाङ्क्षीः'। इत्युक्त्वा तस्मिन् गते धर्मोऽदृढो लुब्धो देशलो दध्यौ—'इमे राजकुले प्रासाः पश्चात् पुनः कथं लभ्याः?'। एवं विमृश्य नियमाऽधिकांस्तान् भ्रातुः प्रत्ययहेतोः स्वेभ्यो न्यासं ददौ, लुब्धः स एवमसकृद् अकरोत्। इत्थं व्रतमतिचर्य देशल आयुः प्रपूर्य स्वल्पर्द्धिर्व्यन्तरो जज्ञे, ततो दरिद्रकुले द्विजः, ततश्च दुःस्थो वणिगभूत्। स तु धनाय क्लिश्यमानो बहूपायैरपि तद् न प्राप, अदो हि व्रतम्लानिफलम्। अथ कोशलो निरतिचारं श्राद्धधर्मं प्रपाल्य संविग्नो धर्मगुप्तगुरोः पार्श्वे व्रतमग्रहीत्। स च त्रियोगी शुद्धमष्टाङ्गं योगं चिरं प्रसाध्य सप्तमे कल्पे सप्तदशाऽब्ध्यायुर्महान् देवोऽभूत्। इति पञ्चमाणुव्रते आराद्धे विराद्धे च फलं श्रुत्वा इहाऽमुत्र च शर्मणे तत् सम्यगाराध्यम्। अथ देवोऽवधिना तं भ्रातरं दुःखितं ज्ञात्वा ऋद्धिं प्रदर्श्य भृशं संविग्नं दीक्षामजी-

ग्रहत् । सोऽपि चिरं तपस्तप्त्वा तत्रैव त्रिदशोऽभवत्, परस्परं हि धर्मानुरागतः सौभ्रात्रमेवं फलति । तौ देवौ प्राग्भवाऽभ्यासाद् मिथः स्निग्धौ महासुखौ जिनार्चा-तीर्थयात्रादिपुण्यानि चिरमसृजताम् । अथ कोशलामरो महासौख्यैरायुः प्रपूर्य च्युत्वा, पूर्वाऽवशिष्टपुण्येन वैताढ्ये मणिमन्दिरपुरे मणिधरविद्याधरभूपतेर्मणिमालाप्रियायाः कुक्षौ मणिशेखरस्तनयो जातः । सर्वविद्या-कलापात्रं स यौवने द्वात्रिंशतं रम्याः कन्याः परिणीय ताभिः सह भोगसुखं रमते । अथ स देशलदेवश्च्युत्वा त्वं चन्द्रगतिरभूः । या तव पूर्वभवे गुणसुन्दरी प्रेयस्यासीत् सा त्वन्मृतेरुद्विग्नाऽभूत्, प्रबुद्धा च व्रतमग्रहीत् । सा चिरं घोरं तपस्तप्त्वा तुर्ये देवलोके सुरोऽभवत् । ततः श्रेष्ठिकुले चन्द्रमुखाभिधः पुत्रोऽभवत्, स रूप-श्री-गुणसम्पन्नश्चिरं भोगान् बुभुजे । ततः स धर्मधीरगुरोः पार्श्वे धर्मं श्रुत्वा प्रबुद्धः सन् प्रव्रज्य, सिद्धान्तमधीत्य, विविधं च तपस्तप्त्वा पञ्चमे कल्पे देवोऽभूत् । ततः स च्युत्वा चन्द्रमाला तव प्रियाऽभवत्, पूर्वाभ्यासाद् युवयोर्भृशं स्नेहोऽभवत् । अथ द्विषन् मिथ्यादृगग्रणीः स सागरः सचिवो दुर्व्यापारमहारम्भात् प्रथमे नरकेऽगमत् । ततश्च्युत्वा स इभ-सारङ्ग-हयादिष्वसङ्ख्येषु भवेषु समुत्पद्य दरिद्राग्रणीर्द्विजो जज्ञे । स द्विजः पारिव्राज्यं प्रपद्य यथोत्पन्नस्तथा शृणु—वैताढ्यपर्वत-समुद्रासन्ना मनोहरा वनश्रेणिरस्ति । तत्र योजनत्रयाऽऽयाम-प्रथिमो-च्छ्रयराजितो बहुसुराणां क्रीडास्थानं वज्रकूटोऽद्रिरस्ति । तन्मध्ये सर्वं मणिमयं स्वभाभिर्निर्त्यालोकं सूर्ये-न्दुजित् क्रोशोच्चं तावदेव पृथु आयतं च भवनमस्ति, तच्च उन्नत्याम् अर्धं वनी-वापी-सरोरम्यं सर्वेन्द्रियसुखाकरं भुवि शैलोदरे आस्ते । मनुष्याऽगम्येऽस्मिन् भवने देवीचतुष्कादिपरिच्छदो नाम्ना वज्र-

मुखो व्यन्तरामरः प्रक्रीडन् वसति, अस्मिन् भवने सर्वेऽपि स्वामिनस्तत्रात्मैव सर्वदा भवन्ति । अथ स मन्त्रिजीवो द्विजः पारिव्राज्याऽनुभावेन तत्र भवने वज्रमुखो देवो जज्ञे । स च मानसे[1] क्रीडन् तव प्रियां वीक्ष्य पूर्वाऽभ्यस्तानुरागतोऽपजहे, यतो दृढसंस्कारबीजा रागाद्या जन्मान्तरेऽपि जन्तूननुव्रजन्ति, अथवा रागाद्याः सम्बन्धिनं दृष्ट्वा मेघं दृष्ट्वाऽलर्कविषवद् नवा इव पुनः समुल्लसन्ति । अथ स व्यन्तरदेवस्त्वां द्विपमाहत्य शीघ्रं स्वभवने प्राप्तः, तस्याश्च शतशश्चाटूनि सृजन् भोगाय प्रार्थयते । परं सा सती तमनिच्छन्ती कालक्षेपं कर्तुमुवाच–'विद्याकृते मासं यावद् मम ब्रह्मचर्यमस्ति, तावद् हठाचेद्[2] मम शीलं लोप्स्यसि ततो जिह्वां रदैश्छित्त्वा निःसन्देहं मरिष्यामि'। ततो भीतो देवो भोगाऽऽशंसु[3]र्मासं यावत् प्रतीक्षते, जैन्यः सत्यो हि किं त्रिदशैरपि शीलाच्चाल्यन्ते ?। अथ कोशलाऽमरजीवो मणिशेखरविद्याधरः सर्वाङ्गभोगसौख्येषु लीनो देववत् क्रीडति । अन्येद्युर्वने रन्तुं गतः, तत्र धर्मरविं गुरुं नत्वा संवेगसागरतरङ्गसदृशं धर्ममश्रौषीत् । स लघुकर्मत्वात् प्रबुद्धः सद्यो दीक्षामुपाददे, यतो धीरा रणेष्विव धर्मकार्येषु न विमृशन्ति। तत्प्रिया अपि सुव्रतागणिनीपार्श्वे प्राव्रजन् । अथ मणिशेखरमुनिः क्रमात् चत्वारि ज्ञानान्यवाप । हे खेटभूपते! सोऽहं स्त्रीवियोगार्तं त्वां ज्ञात्वा प्राग्भवस्नेहतोऽद्य प्रबोधयितुमत्राऽऽगाम् । भवान्तराभ्यासात् तव मयि अधिकः स्नेहोऽस्ति । अथ प्रबुध्यस्व, कामेभ्यो विरज्य व्रतमाचर । शुक्रदेवलोके स्फुरन्मणिगृहेषु देवीगणपरिवृतो निर्वस्य[4] अधुना मनुष्याऽशुचिपिण्डवर्ष्मसु कथं रतिं लभसे ?।

१ मानससरोवरे । २ भाषायाम् 'हडकाया कूतरानु झेर'। ३ भोगेच्छुः । ४ निवास कृत्वा ।

यतः—"न देवकामैः सुहितोऽर्णवोपमै–श्चिराय भुक्तैरपि यस्तृपार्तवत् ।
स विन्दुवद्भिर्नरभोगशर्मभिः, कथं त्वहो ! जङ्गमिताऽऽशितम्भवम्" ॥ १ ॥

इत्याकर्ण्याऽहमाचचक्षे–'मुने ! त्वं सुभ्रातृसदृशमकार्षीर्यत् कल्पवृक्षवद् दर्शनमदाः । तव गिरा प्रबुद्धोऽस्मि, परं परहृतां प्रियां प्राग्भवस्नेहत एवमेवाऽऽशु त्यक्तुं न क्षमे । ततस्तस्या वालनोपायं कन्यार्हं च वरं वद, येन कियत्कालं स्थित्वा कृतार्थो व्रतमाददे' । मुनिराचष्ट–'यः पवनवेगपुत्रं वज्रवेगं स्वशक्त्या योगिनीग्रहाद् मोचयिष्यति, स वलिसत्तमः प्रार्थितः सन् तव पत्नीं मोचयिता, स एव च भुवनोत्तरः कन्याया वरो भावी । तव चाऽद्यापि कियद् भोगफलं कर्माऽवशिष्यते, तद्भोगात् प्रव्रजेः, येन मुक्तिं सहैव यावः' ।

एवं श्रुत्वा जातिस्मरणं प्राप्य अनासक्तोऽपि प्रियां स्मरन् मुनिं नत्वा गेहेऽगमम् । मुनिरप्यन्यतो व्यहार्षीत् । अहं तदादि वज्रवेगस्य मोचकम् अन्विष्यन् खेटेभ्यस्त्वां मत्वाऽत्र स्वकार्यार्थमुपागमम्" ।

अथ कुमारराट् तत्प्रार्थनाभीरुर्द्राग् जगाद–"भो भोः ! कामकुम्भाद्या अचेतना अपि प्रार्थिता ददते । अद्याऽयं भाग्याद् द्वैध उत्सवः समुपस्थितः, एकः परोपकारः परो दुष्टविनिग्रहः । यतः–

"कार्यैर्नियोगी सल्लब्धै–र्लोभी व्यवहृतैर्वणिक् । वेश्या कामैर्नृपो द्रव्यै–र्द्विजोऽन्याऽन्नैः खलश्छलैः ॥ १ ॥
आढ्यरोगिचिकित्साभि–र्भिषक् स्त्री कलहैः पुनः । यथा तृप्यति नैवाऽन्यो–पकारैरुत्तमस्तथा" ॥ २ ॥

१ तृप्तः २ तृप्तिम् ।

किञ्च, यो भूपः स्वाऽऽयासभीरुत्वात् सुराणामपि दुर्नयं सहेत स किं भूपः ?, तत्र च प्रजाः किमाशाः ? । ततो यदि विजयात्मजोऽस्मि तदा तमद्रिं चूर्णयित्वा तं च देवताधमं जित्वा तव प्रियां वालयिष्यामि" । एवमुक्त्वा सात्त्विको नृपः पवनवेग-चन्द्रगत्यादिभिर्युतः सत्वरं वज्रकूटाद्रिशीर्षेऽगात् । उच्चैश्चोवाच—'रे देवाधम ! परस्त्रियं हृत्वा सर्पो हारस्रजं हृत्वा बिले इव किं पातालेऽविशः ? । यदि शक्तोऽसि तद् मम पुरो युद्धे सन्नद्धो भव, नो चेत् स्त्रियमर्पय, अन्यथाऽद्रिचूर्णनात् त्वां निग्रहीष्ये' । एवं त्रिरुक्तेऽपि यावत् कोऽप्यमरो न प्रादुरभवत् तावत् क्रोधोद्धुरो भूमान् नगं चूर्णयितुं लग्नः । तथाहि—कामाक्षादत्तवज्राभमुद्गरेण तच्छिला अभिनत्, भूरिश्रृङ्गाणि समूलांश्च महाद्रुमान् अभ्रंशयत् । विश्वोत्रासकरैरतिभीषणैः पतच्छिलौघ-श्रृङ्ग-द्रुनिर्घोषैः सर्वरोदसी प्रजगर्जतुः । झलज्झलितसमुद्रविन्नस्तपाठीनपाटकैरुच्छलज्जलकल्लोलैर्ज्योतिष्काः सर्वतः प्लुताः । ह्रदोन्मिश्रा महानद्य उन्मार्गगतजलोच्चया बभूवुः । पुर-ग्राम-खेटादीनि समन्ततोऽपुप्लुवन् । वातोद्धूतैः शिलाक्षोदैः सर्वा दिशो श्यामलिताः । तद्भूपप्रतापेन किल सूर्योऽपि जितो म्लानः । तद्गिरि-भङ्गेऽन्येऽपि गिरयो जातिदुःखाद् अथवा भिया वेपमाना निर्झराऽश्रुजलप्लवैररुदन् । अस्मिन् भूधरे चूर्ण्यमाने निजाधारक्षयाद् भाविभ्रंशदुःखभयात्किल भूरप्यकम्पत । भ्रष्टतच्छृङ्गनिर्घोषैर्घडघडत्करी भ्रश्यन्तीं पृथ्वीं शेषः फणासहस्रेण कष्टतो दधौ । पतद्ग्रावसंचूर्ण्यमानद्रुमवनराजितः सरावाः सिंह-शार्दू-ल-नागाद्या लक्षशोऽनशन् । तद्गुहाद्रुषु खेलन्तः किन्नर-व्यन्तरादयः शक्रमुक्ताऽशनिभ्रान्त्या 'हा हा!' इति राविणो नेशुः । योगिन्यो व्यन्तर-प्रेत-भूत-रक्षोऽङ्गनाश्च तन्निर्घोषैर्भिया कृताक्रन्दा नश्यन्त्यो जगद् अक्षो-

भयन् । एवं यामार्धेनाऽपि गिरिं चूर्णयन् स विद्या-भाग्य-बल-ब्रह्म[1]प्रौढो भूपतिः सुरालयसमीपम् अधोऽगमत् । अथाऽधो वज्रास्त्रो घोरनिर्घोषान् श्रुत्वा, आलयं च शीतेन जरन्तमिव कम्पमानं पतापतं वीक्ष्य, 'रे ! किमेतत् ?' इति सम्भ्रान्तो द्राग् विभङ्गज्ञानतो विलोक्य, 'एतत् कदापि नाऽभूद् न भावि वा' इति मत्वा क्रुधा प्राज्वलत् । ततः स सपरिवारोऽधावत्, तत्र च सत्वरमेत्य भीष्मरूपो ज्वलन्नेत्रो दिशो नादयन् जगाद—'रे रे ! किमकृथाः ?, मूर्ख ! अकाले किमु मुमूर्षसि ? । त्वया ग्रावरूपोऽयं शैलोऽभञ्जि, अहं तु त्वदन्तको[2]ऽस्मि' । कुमारनृपतिः स्माह—'रे मूर्ख ! आखु[3]रौपधीं हृत्वा बिले इव परस्त्रियं हृत्वा प्रविष्टः किं छुटिष्यसि ? । रे अधमदेव ! मया साम्प्रतं राजन्वतीं[4] भुवं किं न वेत्सि यदेवम् अन्यायं चेष्टसे ? । तत् चन्द्रगतेः पत्नीं द्रुतमर्पय, अथवा म्रियस्व । अद्रिभङ्गेऽपि मम मुद्गरस्तव चूर्णने कुण्ठो नास्ति' । ततोऽधिकक्रुधा सुरः प्रोचे—'रे मनुष्यडिम्भ[5] ! मृत एव, त्वं मत्पार्श्वाद् मृगः सिंहाद् मृगीमिव तां मुमोचयिषु[6]रागतोऽसि' । इत्युक्त्वा मुद्गरमुत्पाट्य भूपतिं हन्तुमधावत् । पवनवेगाद्यास्तु भीता नृपपृष्ठेऽविशन् ! । भूपोऽपि तस्य सुरस्य परिच्छदं सद्यो विद्यया स्तब्ध्वा वज्रमुद्गरमुत्पाट्य द्रुतं तं प्रत्यधावत । तौ योधौ मुद्गराघातनिर्घोषप्रस्फुटन्नभश्चिरं परस्परं मुद्गरामुद्गरि युयुधाते । अथ भूपेन स्वमुद्गरेण देवमुद्गरे चूर्णिते सति सुरो ज्वलन्तमसिमुद्यम्य क्रोधतोऽधावत, राजा सूर्यहासेन तमसिं रम्भास्तम्भमिव लीलया खण्डशश्चक्रे, यतो वक्रे हि धीरे किं सुरः ? । ततो गदा-त्रिशूलाद्यैर्विविधैर्दि-

१ ब्रह्म—ब्रह्मचर्यम् । २ तव नाशकः । ३ मूषकः । ४ सुराजवतीम् । ५ नरशिशो ! । ६ मोचयितुम् इच्छुः ।

न्यालैरहिपाशाद्यैश्च तौ युध्येते स्म, परं सर्वत्र नृपो जयी बभूव। यत्र परमार्हते सम्यक्त्वं शीलं च भवति तत्र शक्रोऽपि न प्रभविष्णुः, तादृशः सुरस्तु किम् ?। ततः सुरस्तरुणा नृपं मौलौ कीर्णैस्तरुकुसुमैस्तस्मिन् पुष्पवृष्टिं सृजन्निव दृढं जघान, नृपोऽपि तरुभिस्तस्याऽनेकशस्तरून् पिपेष। ततस्तौ भटौ महाशिलाभिश्चिरमयुध्येताम्, नृपो मुष्टि-शिलाभिस्तच्छिलास्तथाऽचूर्णयद् यथा तस्य दुर्धियो मुखे मौलौ च तद्धूलिरपतत्। अथ वज्रवक्त्रो निर्वेदाद् अखिलान्यपि अस्त्राणि हित्वा मदतो नृपं मुष्टामुष्टि योद्धुमारास्त। ततो मुष्ट्याघातैर्निर्घोषभीषणं युध्यमानौ भटौ पृथिवी-वृक्ष-पर्वताद्यैः समं परितोऽकम्पेताम्। तयोर्गर्जतोराशा गर्जन्ति, पततोरगाः पतन्ति, उत्पततोश्च सकौतुका दिवि देवा उत्पतन्ति। मिथोऽनुभ्राम्यतोस्तयोरीक्षणान्यपि अनुभ्राम्यन्ति, शूरेषु ह्यनुवृत्तिं के सुधियो न बिभ्रते ?। एवं चिरं युद्धा नृपस्तं श्रान्तं दुर्नयं सुरं पादयोरादाय क्रुधा मौलिं परितोऽभ्रामयत्, शिलातले च वस्त्रं रजकवद् दृढम् आस्फाल्य तद्धृदि पादं दत्त्वा जगदेकजित् स जगाद–'रे रे! अद्यापि चेत् किञ्चित्तव बलमस्ति तत् कुरु अन्यथा तु इष्टं स्मर, नो चेत् तां स्त्रियमर्पय'। तदा स आक्रन्दन्नवदत्–'हे जगन्मल्ल! मां विमुञ्च, तव दासोऽस्मि, सदा सकलां त्वदाज्ञां करिष्यामि'। ततः कृपालुर्धराधिपस्तं कृपापात्रममुञ्चत्, देवैरस्मिन् पुष्पवृष्टियुग् जयजयारावश्चक्रे। अथ स सुरो द्रुतं गत्वा तां स्त्रियं समानीय नृपाय उपायनीचक्रे, नत्वा च स्वागोऽचिक्षमत्। सुरस्य परिवारोऽपि मुक्तः सन् नृपं प्राणमत्। पवनवेगाद्या मुत्सारावीणं व्यधुः। अथ देवः श्रीजयानन्दनृपं जगाद–'त्वत्समो विक्रमी नयी दयालुश्च सुरा-ऽसुर-नरेष्वपि न ह्यस्ति। अहं केनापि

न विजितः, त्वया तु लीलया जिग्ये, कृपया च मुक्तः, तत् तव किं प्रदाय कृतार्थः स्याम् ?'। नृपस्तं व्याहार्षीत्—'मया किञ्चिन्न मार्ग्यते, परम् अनन्तभवदुःखनिबन्धनं मिथ्यात्वादि त्यज। मिथ्यात्वारम्भजैः पापैस्त्वं नारकादिभवेषु यथा यथा दुःखराशीन् अन्वभूस्तथा शृणु'। ततो यथा चन्द्रगतिर्मुनिगिरा ज्ञात्वा प्रोचे तथा सर्वं तच्चरितं नृपस्तद्धितायाऽवदत्। सुरस्तदाकर्ण्य कृच्छ्रमयान् निजभवान् स्मृत्वा, दुःखभीच्छिदे विशुद्धं धर्मं जिज्ञासुरप्राक्षीत्। नृपस्तं देव-गुरु-धर्माणां तत्त्वमजिज्ञपत्। सोऽपि तद्गिरा प्रबुद्धः सन् सम्यक्त्वं देव-गुर्वादिपूजां च प्रत्यपद्यत। ततः स नृपं जगौ—"धर्मबोधप्रदस्य तव कथमप्यनृणो न स्याम्। यतः—

"बोधिदानात् परं दानं, नास्त्येव दत्तया यया। सर्वसौख्यश्रियां पात्रं, भवेत् शिवपदावधि" ॥ १ ॥

तथापि बोधिदातुस्तव स्वाऽनुरूपं ददामि"। इत्युक्त्वा देवस्तस्मै नृरत्नाय चिन्तामणिं ददौ। तथा यथा स्मृतया स्वस्य परेषां च यादृग् रूपमिष्यते तादृक् स्यात्, स्वस्य बहून्यपि रूपाणि स्युः, तां कामितरूपां विद्यां ससाधनविधिं ददौ। भूपोऽपि विधिना तद् द्वयमादाय तं सुरं मुदाऽस्तवीत्—'हे सुरराज! त्वं धन्योऽसि यः पर्[1]योपितमत्यजः, स्वल्पादप्युपदेशतश्च बोधिरत्नं प्राप्तोऽसि'। एवं स्तुत्वा राज्ञा क्षमितः, चन्द्रगतिमैत्रीं च कारितः। ततो दत्तार्घः सुरः सपरिच्छदस्तिरोऽभूत्। नृपस्तां चन्द्रमालां चन्द्रगतये आर्पिपत्। ततः स हृष्टः स्माह—'हे नाथ! एहि, मत्कर्नीं पाणौ कुरु' इत्युक्तः श्रीजयानन्दभूपश्चन्द्रगतिं विसृष्टवान्। सोऽपि नृपादिकान् नत्वा व्रजन् पवनवेगेन कर्ण[2]जाहं जगे—'मित्र! मत्कनी-

१ परस्त्रियम्। २ कर्णमूलम्।

पाणिग्रहे स्वां कन्यामानयेः'। ततश्चन्द्रगतिर्भूपं नत्वा सप्रियः स्वगृहेऽगमत्। तत्र तं नृपोदन्तं श्रुत्वा सर्वे महोत्सवांश्चक्रुः। अथ श्रीजयानन्दमहीशक्रः पितुर्धृतये विज्ञप्तिकां योगिनीदत्ताऽलङ्कृत्यादि च खेचरैः प्रैषीत्। ततः स पवनवेगाद्यैर्युतो वैताढ्यमूर्ध्नि गत्वा रोमाञ्चिततनुर्मुदा चैत्यान्यवन्दत। ततः पवनवेगेन गाढमभ्यर्थ्य दाक्षिण्याब्धिर्भूपतिः सगौरवं निजपुरेऽस्थापि। अथ चन्द्रगतिखेटेन रह आनीतया चन्द्रसुन्दर्याऽन्वितां स्वसुतां वज्रसुन्दरीं पवनवेगेन भृशमभ्यर्थ्य सुलग्ने चक्रायुधभयाद् अल्पविस्तृति परिणायितः, तौ च पाणिपीडने तस्मै गजा-ऽश्वादि ददतुः। अथ पवनवेगस्य शत्रुमर्दनी विद्याऽस्ति, तस्या दुःसाध्यत्वात् साधने न प्रभूष्णुः। ततः पवनवेगो 'भाग्य-शील-सत्त्व-गुणोत्तर एप साधयिता' इति विचिन्त्य तस्मै तां विद्यां ससाधनविधिं ददौ। तेनाऽर्पिते मणिसौधे नृपः सवधूद्वयोऽस्थात्। 'चक्रायुधेन सह चेत् सङ्ग्रामः स्यात् तदा ससैन्योऽप्यापतेः' इत्युक्त्वा पवनवेगश्चन्द्रगतिं तदास्पदे प्रैषीत्। जैनधर्मानुभावतः स त्रिदशजैत्रविक्रमः श्रीजयानन्दो नृपः खेचरीविरचिते वनास्पदे सवधूद्वयः खेलति। पञ्चमव्रतविशुद्धितः कोशलः शिवसुखावधिश्रियमभ्यगात्। श्रीजयोऽपि परदारनिःस्पृहः प्रतिपदं सम्पदः समश्नुते। इति श्रीजैनधर्मजं फलमुच्चकैरवेत्य हे उत्तमा! इह श्रीजैनधर्मे यतध्वम्।

इति तपागच्छाधिराज-श्रीमुनिसुन्दरसूरिविरचितात् पद्यबन्धश्रीजयानन्दमहाराजाधिराजकेवलिचरित्रात् पं० पद्मविजयगणिनोद्धृते गद्यबन्धे पञ्चमव्रतनिरतिचार-सातिचारपालनविषये कोशल-देशलनिदर्शनगर्भवज्रकूटगिरिचूर्णन-वज्रमुखसुरविजय-तच्चिन्तामणिमहाविद्याप्रदान-वज्रसुन्दरीचन्द्रसुन्दरीपाणिग्रहणवर्णनो नाम द्वादशः सर्गः ॥

# अथ त्रयोदशः सर्गः ।

वन्दे श्रीजिननामकं सुरपतिस्तोमैः सदा सेवितं,
रागाद्यान्तरशत्रुवर्गहनने योऽभूत् समर्थो नृणाम् ।
यस्य ज्ञानमनन्तकं त्रिजगतां सन्देहसंहारकं,
तं सीमन्धरनामकं च वचनं सर्वैर्गुणैः शोभितम् ॥ १ ॥

अथान्यदा पवनवेगेन सह अष्टौ खेचराधिपा आगत्य श्रीजयानन्दभूपतिं नेमुः । क्षेमप्रश्नादिमुदितेषु तेषु आसनेष्वासीनेषु पवनवेगस्तत्स्वरूपं भूपायोचे—"भोगपुरं वज्रपुरं रत्नपुरं मणिधामपुरं वीरपुरं रत्नालयपुरं कनककूटपुरं तथा गिरिचूडपुरम्, एभिः पुरैर्वैताढ्ये दक्षिणश्रेणिरलङ्कृताऽस्ति । एतेषां पुराणां क्रमतः स्वामिन एते भोगरतिश्चन्द्रबाहुर्महाबाहुश्चन्द्रवेगो रविप्रभो रत्नचूडस्तडिद्वेगश्चन्द्राभश्चेति नामतः सन्ति। अमीषां सर्वाग्रेण द्वात्रिंशत् पुत्रिकाः सन्ति, ताश्च एकैकशश्चतस्रश्चतस्रो भिन्नमातृका वर्तन्ते। ताः कन्या दैवात् प्रायशो वयो-रूप-कला-गुणैः समानाः क्रीडा-विद्या-कलापाठान् सहैव विदधत्यो मिथः प्रेमवशेन ऐकपत्यं प्रतिजज्ञिरे । अथ चक्रायुधनराधिपस्ताः स्त्रीषु सर्वोत्तमा ज्ञात्वाऽन्यदा स्वपुत्रेभ्यो दूतैस्तत्पितॄन् अयाचत । ते उत्तरं व्यधुः—'लभ्यदेयादिमेलं विलोक्य तत्रागत्य नृपोऽस्माभिर्विज्ञपयिष्यते' ।

ततस्तेऽष्टौ मिथः सुहृदो भोगरतेः पुरे एकत्र सम्भूय परिणामहितावहमेवं व्यमृशन्—'यदि चक्रायुधस्य कस्मैचिद् एकस्मै सूनवेऽखिलाः कन्या दीयन्ते तदा परे सुता ईर्ष्यिष्यन्ति, कन्याश्च पृथक् पृथक् पतीन् नेच्छन्ति । अस्य कुले सर्वथाऽप्यदाने तु अयमस्मान् राज्य-जीवितसन्देहं नयति, तदत्र सङ्कटे किं कार्यम् ?' । एवं तेषां विमृशतां तत्र निमित्तविद् आगात् । तदा तैः सोऽत्र विषमे कार्ये गतिमप्रच्छि । सोऽपि निमित्तैर्विज्ञाय जगौ—'भोः ! चक्रायुधस्य राज्यं स्वल्पाहम् एवाऽस्ति, तत् तस्मात् किं विभीथ ?' । पुनस्तैः पृष्टम्—'तस्य राज्यं मृत्युना शत्रुणा वा हरिष्यते ?' । स ज्ञान्यूचे—'अस्य पराभवं शत्रोर्वीक्षे' । इदम् असम्भाव्यं श्रुत्वा तेऽप्राक्षुः—'अस्य नु द्विषन् कः ?' । ज्ञानी जगौ—'यो योगिनीग्रहाद् वज्रवेगं मोचयेत्, यश्च वज्रकूटाद्रिं संचूर्ण्य वज्रमुखं सुरं जित्वा चन्द्रगतेः पत्नीं वालयेत्, स तज्जयी । भोः ! स्वाः कनीस्तस्मै एव योग्यवराय प्रदेयास्त, स हि विश्वम्भरोपमो विश्वम्भरिर्भावी' । इति श्रुत्वा मुदा तं द्राक् सत्कृत्य विसृज्य च, चन्द्रगतिं पृष्ट्वाऽत्र च त्वां ज्ञात्वा स्वार्थसिद्धये आगुः । तत् कनीनां पाणिग्रहेणैतान् कृतार्थय, इमे च तं पाणिग्रहं चक्रायुधभीत्या रहः कारयितुमिच्छवः सन्ति" । तेऽपि जगुः—'कनीः परिणेतुमस्माकं पुरे एहि, हे वाञ्छितप्रद ! अस्माकं प्रार्थनां मा भाङ्क्षीः' । श्रीजयः स्माह—'यावद् वैष्णचक्रायुधनृपाद् भयं न हरे तावद् रह उद्वाहे को रसः ?, तस्मात् प्रतीक्षध्वम्' । एवं निगद्य भूभुजा विसृष्टानेतान् पवनवेगखगेशः कर्णजाहं जगाद—'सोऽनीकैः सर्वैः सम्भूय चक्रभृद्रणे आगन्तव्यम्' । तदा

---

१ स्वल्पदिनम् । २ आशिषि युष्मत्पुरुषे बहुवचनम् । ३ विष्णुसदृशः । ४ युष्माकम् । ५ सैन्यसहितैः ।

ते 'ओम्' इति प्रतिपद्य हृष्टाः स्वं स्वं पुरं ययुः। ततः पवनवेगानुमतो नृपः सिद्धकूटेऽगात्, तत्र च सुर-विद्याधराभ्यां दत्ते द्वे विद्ये श्रीसिद्धप्रतिमापुरः साधयितुं प्रारेभे। ये वहुभिः कृच्छ्रैर्बहुना कालेन सिध्यतस्ते अपि द्वे विद्ये तस्य भाग्याद् अल्पवासरैः सिद्धे। ततः स सिद्धविद्यो विद्याधरगणैर्वृतः पवनवेगस्य पुरं प्राप। तत्र स्वैरं सभान्तर्वा सौधान्तर्वा निषीदति, अथवा सप्रियो यथासुखं क्रीडन्नास्ते। अथ द्वितीयदिवसे विद्याधरेशे पवनवेगे समासीने सति चक्रायुधनृपस्य दूतो मितपरिच्छद आगात्। खेटेशस्तमभ्युत्थाय कनकासने आसयत्, क्षेमप्रश्नादिना चाऽऽनन्द्य आगमनकारणमप्राक्षीत्। स स्माह–'भोः! खेटचक्री त्वामाज्ञापयति–स्वकनीं वज्रसुन्दरीं मम स्वयंवरां प्रहिणु'। एवं निशम्य क्षुभितोऽपि पवनवेगः साहसमवलम्ब्य ऊचे–'इति चेद्, इयत् किं विलम्बितम्?, यतः पुत्रमोचनादुपकारिणा श्रीजयेन सा सप्रतिज्ञं मया दत्ता पुराऽपि परिणिन्ये। मया हि प्रभुर्बह्वपि विज्ञप्तः, परं मत्पुत्रं नाऽमूमुचत्, ततोऽनन्यगतिकत्वेन पुत्रमोचयित्रे सुताम् अददाम्'। दूतोऽब्रवीत्–'ऊढामपि ह्यमूं कनीवेषेण प्रेषय, अन्यथा बलिनि भर्तरि क्रुद्धे सति तव त्वज्जामातुश्च का गतिः?'। खेटोऽवादीत्–'प्राणान्तेऽप्येवं गर्हितं न करोमि, एवं हि विद्याधरकुलं सोऽपि च प्रभुर्लज्जते। तस्मादिदं स्वरूपं प्रभोः साक्षा विज्ञपय, अहमपि तत्प्रसादनयुक्तीर्विमृशामि'। अथ दूते गते सति पवनवेगः सचिवैः समं पर्यालोच्य वाक्पटुं पण्डितं प्रधानैः सह तत्पुरे प्रैषीत्। अथ ते गत्वा दूतोक्त्या कुपितं खेटचक्रिणं नेमुः। ततः पण्डितो व्याजहार—

"जय प्रभो ! विश्वपते ! कुलीन–धुर्येन्द्रजैत्राऽद्भुतबाहुवीर्य ! ।
त्वं सर्वदुर्नीतितमोऽर्क-नीति–वल्लीवनाऽम्भोधरराजराजः ॥ १ ॥

खेट-किन्नर-सुरा-ऽसुरयुग्मै—र्गीयते कनकशैलवनेषु ।
या निरङ्कविधुरोचिरिमां किं, स्त्रीकृते मलिनयन्नसि कीर्तिम् ? ॥ २ ॥

आसते लवणिमाऽद्भुतरूपाः, कोटिशोऽधिभुवनं कुलकन्याः ।
ता यथेच्छमुपयम्य रमेथा, मुञ्च कीर्तिहननीं परनारीम् ॥ ३ ॥

बुद्धदेव-गुरु-धर्मसुतत्त्वः, शुद्धवंशजनितोऽवनिशक्र ! ।
लज्जसे कुलकलङ्ककरीं किं, नैव तामभिलपन्नपरोढाम् ? ॥ ४ ॥

हा ! धिगस्तु मदनं कँदनं श्री—ज्ञान-धर्म-धृति-कीर्ति-सुखानाम् ।
धीर्दधाति कुपथे पदमेवं, यद्वशाद् भुवनवीर ! तवाऽपि ॥ ५ ॥

तद् हे धीमन् ! अस्मिन् निजपत्तौ स्वां धियं प्रसत्तिमधुरां धर, हे भक्तवत्सल ! अमुष्य सकारणजातम् एकमपराधं मर्षय" । इत्यादिसम्यगुपदेशोक्तैर्मधुरैस्तद्वचोभरैः किञ्चित् शान्तप्रकोपाग्निः खेटचक्री तं जगाद—"मध्यं वयः प्राप्तोऽहं तां स्त्रियं कामादेव न याचे, परम् आज्ञाया भङ्गं तु न सहे, यतः स हि अशस्त्रः प्रभावधः । ततो राज्य-जीवितवाञ्छया पवनवेगो, जिजीविषुश्च जामाता एतद् मदाज्ञसं करोतु–इयं वज्र-

१ निष्कलङ्कचन्द्रकान्तिः । २ इमां कीर्तिम्, इत्य वयः । ३ बुद्धानि-ज्ञातानि देवगुरुधर्मरूपाणि सुतत्त्वानि येन सः । ४ नाशनम् ।

सुन्दरी 'चक्रायुधस्य दासी' इति वर्णमालाङ्किते मत्पुत्र्याः कङ्कणे सदा परिधत्ताम्, तस्य जामाता 'चक्रायुधस्य दास्याः पतिः' इत्यक्षराङ्कितं मदर्पितं मौलिं मौलौ धत्ताम्, अत्र च वज्रसुन्दरी आगत्य मम पुत्रीं चक्रसुन्दरीं नाट्यमध्याप्य मद्दत्तकङ्कणा यातु। अन्यथा राज्य-जीवितसौख्यानि न भविष्यन्ति। अतः परम् अधिकं मा वादीः, आज्ञाधनोऽहं तद् न सहे"। ततः स पण्डितस्तानि च प्रधानानि तद्गिरः श्रुत्वाऽनन्यगतिकत्वात् प्रपद्य स्वपुरेऽविशन्, इमं च चक्रायुधस्य सर्वं वृत्तान्तं पवनवेगाय श्रीजयनृपाय च न्यवेदयन्। ततः पवनवेगः श्रीजयानन्दभूपतिर्मन्त्रिणश्च रहः कार्यगोचरं विचारं चक्रुः। श्रीजयानन्दनृपोऽवोचत्—'चक्रायुधोक्तं सर्वं प्रपद्यध्वम्। वज्रसुन्दरी कियन्तं कालं गोप्या, अहं तस्या रूपं कृत्वा किय द्योषितपरिच्छद उपचक्रायुधं गत्वा तत्कनीमध्यापयिष्यामि, अन्यदपि यथोचितं सर्वं साधु करिष्यामि!। अहमत्रैव मिलिष्यामि, कैरपि चिन्ता न कार्या'। एवं निर्णीय ते यावत् स्वं स्वं पदं गच्छन्ति तावत् खेटचक्रिणः प्रधानपुरुषा आगताः। पवनवेगो यथार्हं प्रतिपत्त्या तान् अप्रीणात्। ते पवनवेगं जगुः—'चक्रभृत् त्वामादिशति यद् मया आज्ञप्तं तत्सर्वं यद्येव प्रतिपद्यते तर्हि मत्कनीनाट्याऽध्यापनाय वज्रसुन्दरी प्रेष्यताम्। नो चेद् अहमागत एव, युद्धे सन्नह्यत, राज्यानि वा त्यक्त्वा यात, यतो युष्माकम् अन्या गतिर्नास्ति'। पवनवेगस्तानूचे—'को हि स्वाम्याज्ञां नो मन्यते ?। सामग्रीं कृत्वा वज्रसुन्दरीं प्रेषयिष्यामि, तस्माद् अद्य प्रतीक्षध्वम्'। इत्युक्त्वा भोजनादिना युक्तिं कृत्वा कृतानन्दान् तानुत्तारके प्रैषीत्। अथ श्रीजयराजो नक्तं परीक्षापूर्वकं शस्त्र-शास्त्रकलाभिज्ञान् वीराङ्गद-महाबाहु-सुघोष-सुमुखा-

दिकान् पञ्चशतीमितान् यूनो भटान् विद्यया स्त्रीरूपान् समानसदलङ्कृतीन् चक्रे, स्वयं च वज्रसुन्दर्या रूपं सालङ्कृति व्यधात्, चिन्तामणिरत्नानुभावाद् अलङ्कारादि दुर्लभं न भवति । अथ प्रातः पवनवेगो वज्रसुन्दरीं गोपयित्वा प्रधानपुरुषाध्यक्षं मायापुत्रीं समादिशत्–'वत्से ! तत्पुत्र्या नाट्यशिक्षणाद् अस्माकं नाथं प्रीणय'। साऽपि 'मम तातादेशः प्रमाणम्' इत्युक्त्वा सपरिच्छदा विमानमारुरोह । तत्र तेऽखिला नाट्यसामग्रीं स्फुटं, शस्त्राणि च गुप्तमाददिरे। अथ प्रधानानां वधूनां च विमानौ चेलतुः, तत्क्षणाच्च खेटचक्रिणः पुरोद्याने प्रापतुः । ततः प्रधानपुरुषास्तास्तत्रैव संस्थाप्य द्रुतं गत्वा मुदा तासामागमनं राज्ञो न्यवेदयन् । सोऽप्यानन्दितस्तदाहूत्यै दासीवर्गं प्रैषीत् । मायानार्यः क्वचिन्नगे गह्वरेऽस्त्राणि जुगुपुः, दासीभिश्चाहूता भूभुजः पुर आययुः । सा वज्रसुन्दरी लज्जयाऽधोमुखी तस्थौ । अथ नृपोऽचिन्तयत्–'विधाता नु अप्सरसो घाटं घाटम् अभ्यासपाटवे जाते विज्ञानसीमानमिमां प्रयत्नतः ससर्ज, एतद्रूपानुसारेणाऽस्यां कला अपि भाविन्यः' इति निश्चाय तां नाट्यकृते आदिशत् । साऽपि ताभिः स्त्रीभिः समं गीत-वाद्यमनोहरमद्भुतं नाट्यं तथा चक्रे यथा सर्वेऽपि नृपादयोऽप्रीयन्त । ताः समानसर्वाङ्गनेपथ्या-ऽलङ्कृतीर्विलोक्य विस्मितो नृपो बहुमानतो ग्रास-दास्यादिसामग्रीं दत्त्वा, अधीतये सुतां समर्प्य स्वार्पितावासे प्रैषीत् । तत्र सा वज्रसुन्दरी सपरीवारा तिष्ठन्ती आत्मसरूपां चक्रसुन्दरीं नाट्यमध्यापयति, सा विनीता सुभगा सर्वगुणा प्रज्ञाऽस्तभारती मञ्जुभाषिणी तस्यां प्रीतिं दधती अधीते । स मायानारीपरिच्छदः श्रीजयानन्दकुमारस्य योगिनीबद्धं चरित्रं गीतैर्गायति, तच्च प्रौढावदातसंबद्धं श्रुत्वा कनी कुमारेऽनुरज्यन्ती अन्यदा

ताः सखीः पप्रच्छ–'अयं श्रीजयानन्दः को यः सदा युष्माभिर्गीयते ?, चक्री वा तत्समो वा ?, यतः परेषु ह्यमी अवदाता न सम्भवन्ति'। ता जगुः–'केलिशैलेषु गायतो योगिनीगणात् श्रुत्वा एतद्गीतं पठितं, तं[2] तु सम्यग् नैव विद्मः, परं गुणैः स वज्रसुन्दर्या वरः संभाव्यते, अधुना भरते ज्ञानी तं सर्वोत्तमं जगाद'। ततश्चक्रसुन्दरी कला-प्रकृति-सौजन्यादिभिर्भृशं रञ्जिता वज्रसुन्दर्याः स्वसृत्व-सहवासिते ऐच्छत्। दध्यौ च—'तानि मम भाग्यानि भवेयुर्यैरीदृग्गुणः पतिर्भवेत्, एषा च स्वसा सन्निहिता भवेत्। परं वज्रसुन्दर्या हठपाणिग्रहात् तं द्विषन् पिता कथं तस्मै मां दत्ते ?, तद् ध्रुवं ममाऽभाग्यानि'। अथाऽन्यदा इति चिन्तातुरां तां वीक्ष्य ताः स्त्रियो जगुः–'वत्से ! स्त्रीरम्भानृपुरन्दरं तं पतीयसि[3] ?'। सा जगाद—'या पाणिना चन्द्रं ग्रहीतुमिच्छति सा उपहासपदं स्यात्, तद् असाध्ये किं वदामि ?'। ता ऊचुः–'वज्रसुन्दर्याः किञ्चिदसाध्यं नास्ति, सा यथैवं कलाभिर्जगज्जैत्री तथा विक्रमादपि। परं वयं तव मनःस्थैर्यं सम्यग् न जानीमहे, स्त्रीकटाक्ष इव प्रायो योषितां हि हृदयं चपलं भवति। को हि सुधीश्चलाचलचित्तार्थं विषमे यतते ?'।सा जगाद–'स्तनाऽऽसङ्गादिव मम हृदयं दृढमेव। यथा निःस्वो निधौ, रोगी पीयूषे, सतृट् सज्जले, तथाऽस्मिन् विश्वोत्तरे वरे कथं भोगार्थं नाऽऽद्रिये ?'। ता जगुः–'चेदिति तत्त्वं तदा द्रुतं सज्जीभव। साऽपि स्वौ[4]ऽऽकल्पग्रहणादिना सज्जीभूय आगमत्। ततस्ताः सर्वमेतद् मायावज्रसुन्दरीं न्यवेदयन्।

१ पञ्चम्येकवचनम्। २ श्रीजयानन्दम्। ३ पतिमिच्छसि। ४ स्ववेषा-ऽऽभूषणादिग्रहणादिना।

## श्रीजयानन्दभूपाल-चक्रायुधखेचरेश्वरयोर्युद्धम् ।

वज्रसुन्दर्यपि महाविमाने कृते ताः स्त्रियस्तां च चक्रसुन्दरीम् आरोह्य खं ययौ, राजसौधोपरि च स्थित्वा प्रोच्चकैर्जुघोष—'भो राजराज! भो वीरमानिनः खेटाः! श्रूयताम्, एतां चक्रायुधसुताम् अहं श्रीजयानन्दकुमारायाऽपहृत्य व्रजामि, यो वली स मोचयतु, अहं छलकृद् नैव वाच्या'। इत्युक्त्वा पुरसीम्न्यगात्, कतिचिच्च स्त्रीः प्रेष्य गोपिताऽस्त्राणि आनीनयत्। अथ चक्री एतद् ज्ञात्वा विस्मित', 'अहो! नार्यपि विक्रमं दुर्नयं च कुरुते' इति वदंश्च कनीं पश्चाद् वालयितुं बहून् भटान् प्रैषीत्। अथ भूपादिष्टास्ते युयुधिरे, परं ताभिर्मायास्त्रीभिर्भग्नाः पश्चादपासरन्। स्त्रीभ्यो भङ्गं व्रीडयाऽवदतस्तान् शोणितप्लुतान्[1] वीक्ष्य चक्री विस्मय-क्रोधाभ्यां सद्यो महद् वलं प्रैषीत्। तस्मिन् सैन्ये विमानस्था हस्तिस्था वाजिस्थाश्च पत्तयो महाभटाश्च महाऽऽयुधैः स्त्रीभिः सहाऽयुध्यन्त। अथ भटस्त्रियो भग्ना वीक्ष्य ता रक्षितुं कुमारस्त्री विविधायुधैः खेटसेनया सह योद्धुं डुढौके। सा विमानान् पर्पटानिव गदयाऽचूर्णयत्, सनिपादिनो गजान् गण्डशैलानिवाऽलोठयत्, रथान् भ्राम्यतो गरुडानिव अभ्रेऽभ्रामयत्, पत्तीन् चञ्चापुरुषानिव लीलया भूमौ अपातयत्, एवं स्त्रीरूपेण कुमारेण हस्तिना रम्भाखण्डमिव हिमेन चाऽब्जिनीवनमिव खेटवलं क्षणाद् अभञ्जि। ततस्ते स्रवेदस्राः[2] कुमारस्त्रीप्रतापाद् मानं मुक्त्वाऽसून्[3] गृहीत्वा नश्य-

---

१ रुधिरव्याप्तान्। २ स्रवद्रुधिराः। ३ प्राणान्।

न्तो द्रुतं पुरेऽविशन् । स्त्रीभ्यो भङ्गिया खेटपतेर्मुखमपि दर्शयितुमक्षमस्य तत्सैन्यस्य स्वरूपं चरैर्निवेदितम् । अथ खेद-ह्री-विस्मय-क्रोधव्याकुलः खेचरेश्वरः सुतांप्रत्याजिहीर्षया युद्धे स्वयं समुत्तस्थौ । 'क्षुण्णाऽनेकवीरभटा मम वाणाः स्त्रीषु पतन्तः खलु त्रपन्ते, अहमपि च त्रपे' इत्यालोच्य स पुनरुपाविशत् । अथ श्रीजयानन्दभूपतेराज्ञां विनाऽपि मायास्त्रीभिराहूतः पवनवेगः खेटराट् सानीकस्तत्रागात् । तदाहूताश्च ते भोगरत्यादयोऽष्टौ नृपाः, चन्द्रगतिभूपः, तेषां च सौहृदादिसम्बन्धाद् अपरेऽपि खेटराजास्तत्र रयादाययुः । पवनवेगो दक्षिणश्रेण्यां प्रायो बहूनां खेचरभूभुजां मान्योऽभूत्, ततस्तदाहूत्याऽमी अमिलन् । समग्रयुद्धसामग्र्या सैन्यैः गिरिं प्लावयतो वाद्यैश्च दिशो नादयतस्तान् नभोगेन्द्रान् विलोक्य, चक्रायुधपुरे समस्ता जनता झषस्थिते शनाविव अत्राणा भिया महान्तं क्षोभं लेभे । तथाहि—भीषणस्वनाः काहलास्त्रटत् त्रटत् प्रवाद्यन्ते, घोरैर्बुम्बारवैर्मुखरा भटाः साऽस्त्रा धावन्ति, भयकोलाहलाऽऽकीर्णमुखाः कातरा नश्यन्ति, भिया त्रस्तास्तरलाक्ष्यः कटिस्थिताऽर्भकाः क्रन्दन्ति, त्रासप्रोन्मूलिताऽऽलाना गजा उच्छृङ्खला भ्राम्यन्ति, भीषणं हेषमाणा हयाः पातितसादिनो बभूवुः, भाङ्कृतैर्भीष्मा गावस्त्रोटितरज्जवो भ्राम्यन्ति, उत्कटाक्ष्य उच्चमुख्यश्च महिष्यो भयविह्वला नश्यन्ति, प्रतिरथ्यं त्रसद्भिः पशुव्रजैः पादाघातकम्प्रोर्वीकैः भीरुस्त्री-पुरुषा-ऽर्भकाः प्रपात्यन्ते, कम्प्राङ्ग्यो जलहारिण्यः स्फुटं घटान् स्फोटयन्ति, स्त्रियाऽङ्गेभ्यो भ्रश्यन्त्याभरणान्यपि न जानन्ति, ललनानां त्रुट्यद्धाराच्युता मुक्ताः किल कुमारेन्द्रे आगच्छति सति स्वस्ति-

१ पुत्रीं प्रत्याहर्तुमिच्छया । ससैन्यः । ३ नभोगा—विद्याधरास्तेषामिन्द्रान् ईश्वरान् । ४ जनसमूहः ।५ चञ्चलनेत्राः—स्त्रियः ।

कपूतंगे पुञ्जीभवन्ति । केऽप्याख्यान्ति–'अहो ! स्त्रियोऽप्येतन्नगरं क्षोभयन्ति'। अन्ये वदन्ति–'अमूः स्त्रियो न, स्त्रीरूपाः सुभटा वर्तन्ते'। केऽप्याहुः–'खेचरेन्द्रो लोकपालो वा कश्चिदायातो, यतः सकटकश्चक्रायुधो द्विषन् अन्यस्य न गम्यः'। केऽपि ब्रुवते–' इमे मुग्धा जना मुधा किं बिभ्यति ?, यतश्चक्रभृतः पुरः किं वीरा, किं द्विषः किं चाऽनीकानि ?'। एवं पुरक्षोभं परचक्रागमं च मत्वा क्रुद्धश्चक्रायुधः प्रोचे–'रे ! एते सुभटाः के ?'। ततश्चराः पवनवेगादीन् नामग्राहं जगुः । चक्री दध्यौ "स्वस्य पुरेऽप्यहो ! अहं क्षोभं प्रेक्षे । अहो ! रण्डाऽपि मम सैन्यमभनक्, पुरं च भापयते । शत्रवः सीमानम् आक्रामन्, इति जीवितं धिक् माम । अथवा चिराद् मम दोर्दण्डकण्डूः प्रयाता, इत्युत्सवः, एभिर्द्विपदिन्धनैर्मम प्रतापाग्निर्दीप्यताम् । ये सुभटंमन्या नारीं पुरस्कृत्य 'सुभटा वयम्' इति मन्यमाना योत्स्यन्ते तैः किं ममापि रणकौतुकं पूरयितुं शक्यम् ?। तथाप्येतान् अनात्मज्ञान् मे प्रजा भापयतो द्विकप्रायान् त्रासयामि, कर्मणा न लज्जयामि"। इति चिन्तयित्वा चमूं सज्जीकर्तुं भेरीमवीवदत्, तन्नादेन सर्वे भटा रणकर्मणे ससज्जुः। अथ चक्रायुधो यावत् पूर्वाह्णेः श्रृङ्गं रविरिव मत्तेभमारोढुं समुत्तस्थौ तावद् मूर्धतो मुकुटोऽपतत्, दन्ती शयादिव नीतिच्छेदं युगपच्चक्रे, अभिमुखं क्षुतं जज्ञे, वस्त्रेण पादोऽस्खलत्, तावच्चामरधारिण्याः कराच्चामरः प्रापतत्, अनिदानेऽपि च छत्रदण्डः पतन् अकम्पत । एतानि वीक्ष्य सचिवाः खेदराजं व्यजिज्ञपन्—'स्वामिन्! एभिरशकुनै रणयात्रा न युज्यते, अस्माकं विज्ञप्तिमवधारय, एकशश्च आसनम् अध्यास्स्व'।

१ इन्द्रः । २ नीरसुभटाः । ३ काकमायार् । ४ मूनण नीहार च ।

खेटेन्द्रोऽपि तथा चक्रे, हितं हि को न मन्यते ?। अथ सचिवा जगदुः—"प्रभो! वीरगणाकुलं पुरा च काऽप्यभग्नं तव सैन्यं यया द्राग् लीलयाऽभाजि साऽरीणाम् अधृतिकारिणी नारी कथं सम्भवेत्?, परिवारेऽपि च किम् अङ्गनाऽऽधाराः स्त्रियो भटायन्ते?। ते पवनवेगाद्या भोगरत्यादयश्च भटंमन्या महाभूपा कथं नारीमनुसरन्ति ?। ततोऽयं ध्रुवं सुरीगेयगुणो वज्रसुन्दर्या वरस्तवाऽभिभूतिवाक्क्रुद्धः श्रीजयानन्दकुमारः। स च तव 'स्त्रिया जित' इति ख्यात्या दुर्यशः प्रदित्सुर्विद्यया सपरिवारः स्त्रीवपुराकृतिर्भूत्वा इहागत्य वीराहँ चेष्टते, यतः को हि समर्थः क्षत्रजस्ताद्दग्मौलि-कङ्कणवाहनं सहेत ?। अविचार्य दर्पोक्तं हि वचो दुरुदर्कं भवति, राजन्! वयं चिह्नैर्बुद्धिभिश्चैवं जानीमहे। अस्याऽत्रदातास्तु एवं जनगीतिषु श्रूयन्ते—'अनेन धी-विक्रमैः श्रीविशालजयो नृपोऽरञ्जि, अनेन गिरिमालिन्यादयो देव्यो वशीकृताः, येन कोलरूपो गिरिचूडसुरो लीलया जिग्ये, यः कल्पौषधीदानैरनेकशो दैवतैरार्चि, येन बलीयसा मलयमालोऽपि क्षेत्रपालो जितः, पुनर्येन विप्ररूपेण भटकोटियुक् कोलः पद्मरथो बद्ध्वा प्रबोधाय कपीकृत्य विडम्बितः, यः क्रीडावामनरूपो भूत्वा राजकुमारकान् जित्वा श्रीपतिराजस्य कलाजिताः कनीः परिणिन्ये, यो वीरेन्द्रो योगिनीवृन्दैरक्षोभितो महाविद्यां प्रसाध्य ताभ्यो योगिनीभ्यो हठाद् वज्रवेगम् अमूमुचत्, यस्मै महाज्वाला कामाक्षा योगिन्यश्च परीक्षया तुष्टा भक्तितो दिव्यास्त्राणि शक्तीश्च ददुः, यः सात्त्विकाग्रणीर्वज्रकूटगिरिं भङ्क्त्वा वज्रमुखाऽमरं च जित्वा चन्द्रगतेः प्रियां प्रत्याहार्षीत्' हे नराधीश! सोऽयं जगत्त्रयीमल्लो नारीरूपोऽपि दुर्जय इति विद्धि। ततः प्रभो! प्रसाद्यं तं मा प्रकोपय। सुता

अन्यस्याऽपि दातव्या, ईदृक् तु वरो न लभ्यः । ततः स्वामिन् ! तां मौलि-कङ्कणवार्तां विस्मार्य अस्मै सुतां प्रदेहि । पवनवेगेन स्वार्थाय सम्प्रार्थनम् आनीतः सोऽयं कन्यां परिणीय त्वयि स्नेहभाग् स्वराज्ये याता, एवं च पुराऽपि तव सेवकाः पवनवेगादयो विशिष्य त्वय्येव एकान्तरागिणो भविष्यन्ति । ततोऽवसरे नीतिं भजन् निरातङ्कं राज्यं भुङ्क्ष्व, राज्ञां हि श्वापदस्येव एकान्ततः शौर्यं न हितम्" । इति मन्त्रिगिरः श्रुत्वा खेचरेश्वरो जगाद—"भो ! यूयं मयि अनिष्टाऽऽशङ्किनस्तत्र स्नेहः कारणम् । परनार्या हठाऽऽदत्तां[1] निजां तनयां चेत् सहे तदा स्वाऽपत्यान्यपि अरक्षतो मम को महिमा ?। इयं विद्याकलोन्मदा पवनवेगस्य तुच्छा सुता इत्यचेष्टत !, यतः स्त्रीणां पारिणामिकी धीः कुतः ?। अथवा श्रीजयोऽस्तु, तथापि मम तस्माद् भयं नास्ति, यतो नृपाशाद्[2] बिभ्यतो मम खेटचक्रिता कीदृशी ?। यदि तेन कीटकप्राया नृ-देवाः कीटिका-निभाश्च देव्यो जितास्तत् किं ममाऽप्यस्त्राणि अकुण्ठयत् ?। यदि तेन शिलाकुट्टाकवत् कतिचिच्छिला भग्नाः, इयता मम दिव्यास्त्रततेः सोढा इति नाऽनुमीयते। भरतार्धनिवासिषु नृपेषु खेटेषु देवेषु असुरेषु च मदाज्ञालङ्घनोन्मदः किं कोऽपि दृष्टः श्रुतो वा ?। मम दोष्णोर्बलं विद्याबलं दिव्यास्त्रजं च बलम् किं काऽपि न्यूनम् अभिभूतं वा अद्राष्ट यद् मां द्विषो[3] भापयथ ?। विरिञ्चिर्वा[4] विरोचनो[5] वा पाकारिर्वा[6] मुरारिर्वा[7] चेत् सज्जास्तदा तानप्यहं जयामि, तर्हि चिरं मत्सेवकीभूय ये पवनवेगाद्या द्विषो नारीमनुसृतास्तान् मच्चक्रं कथं सहेत ?। ततो लीलयाऽप्येतान् त्रासयन् मृगान् हरिवद्वा निघ्नन् साक्षादहं द्रष्टव्यः, सतां हि

१ हठेन गृहीताम् । २ कुत्सितमनुष्यात् । ३ शत्रोः । ४ ब्रह्मा । ५ सूर्यः । ६ इन्द्रः । ७ कृष्णः ।

यागाडम्बरो न युक्तः"। अथ सचिवाः प्रोचिवांसः—"स्वामिन्! यदीदं तत्त्वं तदा निजान् खेचरान् ससैन्यानाकारय, तेजस्व्यपि असहायो द्विपद्भिरभिभूयते, एक एव हि आकाशे भ्रमन् सूर्यो राहुणा ग्रस्यते। अथवाऽल्पपरिच्छदश्चन्द्रो राहुणा ग्रस्यते, न तु द्वितीयादिषु तिथिषु भूरिपरिवारः"। अथ विद्या-बलगर्विष्ठो नृपो वक्रोष्ठिकां कृत्वा निःसहायजयार्थ्यपि तद्वचो मान्यत्वाद् मेने। ततो 'रणसामग्रीं विधाय तृतीयेऽह्नि योत्स्यते, तावत् सज्जाः प्रतीक्षध्वम्' इति द्विपामाज्ञापयत्।

अथाऽयं दूतैर्युगपद् उभयश्रेणिगान्नृपान् आजूहत्, तेऽपि स्वाम्यर्थतत्पराः ससैन्या एयुः*। ते खेटराजं प्रणम्य तस्य च शिक्षां संश्रुत्य तेन सत्कृता साऽनीका मुदा रणे समनात्सुः+। अथ सङ्केतितदिनेऽभिषेण-†यितुम् उत्सुकः खेटेन्द्रः स्नान-देवार्चा-भुक्त्याद्यं सुक्षणेऽकरोत्। ततोऽयं खेटचक्रभृद् मङ्गलाचारान् विधाय युद्धार्हसर्वसामग्र्या मदोन्मत्तं गजमारोहत्, सच्छत्रश्चामरैर्वीज्यमानो विविधायुधपूरितैश्च सन्नद्धस्यन्दनैर्युक्तो गृहाद् निरगात्। चक्रवेगो[1] महावेगो[2] वीराङ्गदो[3] महाबलः[4] सुषेणः[5] सुमुख[6] आनन्दो[7] धीरसेनो[8] दृढायुधः[9] चन्द्रसेनो[10] महासेनो[11] वज्राननो[12] महायुधः[13] सुधीरो[14] भानु[15]र्भूवीरः[16] शूरवीरो[17] रविप्रभो[18] वज्राक्षो[19] वज्रमाली[20] सिंह[21]श्चन्द्रमुखो[22]ऽशनि[23]र्महाबाहु[24]र्महावीर्य[25]श्चन्द्राभ[26]श्चन्द्रकेतनः[27], इत्यादिनामभिः ख्याता अस्य चक्रधरस्य द्वादश सहस्राणि कुमारा जगदद्भुतविक्रमा विविधायुधा गजा-ऽश्व-रथ-शार्दूल-वराहा-ऽहि-मृगादिषु विचित्रेषु प्रौढेषु वाहनेषु समारोढुमुद्यतास्तेजस्विनः किरणा भास्वन्तमिव अभित इमं भूपं परिवव्रुः। प्रलयाऽम्भो-

* आजग्मुः। + सन्नद्धा अभूवन्। † सेनया अभिमुखम्—सम्मुखं यातुम्।

घरध्यानतिरस्कारधुरन्धरा युगपद् भूरितूर्याणां स्वना नभसि प्रसस्रुः। तत्पुरवास्तव्या अन्यपुरागताश्च सुभटा अहंपूर्विकायुजो युद्धे सर्वे निर्ययु[1]। वीराणां मातरः प्रणयिन्यश्च जयहेतवे देवेभ्य उपयाचितलक्षाणि प्रतिशुश्रुवुः। मातरः स्वसारः स्नेहलाश्च प्रिया वीराणां विजयश्रिये विचित्राणि मङ्गलानि व्यधुः। शूराणां भालेषु मातरो भाग्यश्रियां रेखा इव माङ्गल्यतिलकान् चक्रुः। काऽप्यम्बा रणे यियासुं स्वपुत्रं मङ्गलानि विधाय मुदश्रुभिस्तत्पादौ स्नपयन्ती स्माह–'अहं वीरपुत्री वीरपत्नी वीरस्वसा चाऽस्मि, वत्स! तथा युध्यस्व यथा वीरप्रसूरपि स्याम्'। काऽपि स्वसा उवाच–'भ्रातः! अहं वीरस्य पत्नी पुत्री स्नुषा[2] प्रसूश्चा[3]ऽस्मि, अद्य दिष्ट्या वीरस्वसाऽपि भूयासम्'। रणाय गच्छता भर्त्रा श्लिष्टा काऽपि तं प्रत्याह—"हे ईश! 'प्राणेभ्योऽपि प्रियाऽसि' इति यदवोचस्तत् सत्यमेव भावि, यतः सङ्गरे प्राणत्यागेऽपि अहं वह्न्यध्वना आगत्य द्राक् त्वां स्वर्गेऽपि भजे"। काचित् स्माह–'नाथ! मम भोगा असपत्ना अभवन्, अथ तु जयलक्ष्म्या अप्सरोभिर्वा ससपत्नता भवित्री'। काऽप्यवादीत्–'प्रिय! मम स्नेहाद् रणेऽलसो मा भूः, यतो जये प्राणक्षये वाऽहं सन्निहितैवाऽस्मि'। 'यामि' इत्युक्ते काचित् प्रियमूचे–'प्राणेश्वर! किमनृतं भाषसे?, यतो मम हृदो न कदाचिद् निर्यातो न च निर्यास्यसि'। काऽप्यब्रवीत्–'अप्सरसो मत्तो नाऽधिका हिताः, जयश्रीस्तु विश्वस्तुत्याऽधिका, तत्तां सं[4]मां भजेः'। काऽप्यचक्–'हे नाथ! कीर्तिरप्सरसो वा मत्तः केन गुणेनाऽधिका यत् तदर्थी मां त्यक्त्वा रणे यासि?'। काचित् पत्याश्लिष्टा जगौ–'अधुना तु

१ अहं पूर्वं इति जल्पो यस्या क्रियाया सा अहंपूर्विका, तत्क्रियायुक्ताः। २ पुत्रवधूः। ३ माता। ४ मया सह।

स्नेहं दर्शयसे, परं जयलक्ष्म्याऽप्सरोभिर्वा धृतो माऽनुपलक्षयेः'। काचित्पुनरित्यजल्पत्—'प्रिय ! कुम्भिकुम्भस्थलोद्भिन्नमौक्तिकानि आनयेः, यथा तैस्तव जये स्वस्तिकान् कुर्वे'। वीरा इत्यादिवादिनीः स्त्रीः कथञ्चन संस्थाप्य, यश एव पुरस्कृत्य महोत्साहा विनिर्ययुः। अथ भटकोटिसमन्वितोऽरिद्रुमाऽनलश्चण्डवेगः सेनानीः सिंहयुक्तेन रथेन निरगात्। वज्रकण्ठस्तडिद्वेगो भानुकेतुर्महाभुजो नरवीरः कलाचन्द्रः कोशलः पवनोऽङ्गदो हरिवीरो महाकीर्तिः सुयशा नन्दनः पृथुर्वेलवीरः कृतान्तास्यो धूमकेतुः सुभीषणो धूमाक्षाद्याश्च परोलक्षाः खेटेन्द्रा भटाः कातरैर्दुर्लक्षा गजयुक्तै रथैर्विनिर्ययुः। मदनः कोसरः कामकेतुर्भीमो महायशाः प्रतापस्तपनोऽक्षोभो रमणः कामनन्दनः, इत्यादयो लक्षशो नृपा वीराणामपि भापनं कुर्वाणाः सिंहयुक्तै रथैर्द्राग् निर्ययुः। प्रह्लादश्चपलश्चण्डवेगः शत्रुन्दमोऽङ्कुशो गदाधरो महापाणिः सुवक्त्रो वज्रकेतनः, एतेऽन्ये च परोलक्षा महौजसः प्रतिवीरान् तृणीयन्तो नृपा व्याघ्रयुक्तै रथैर्निरीयुः। सागरः क्रोधनो भीष्मो वज्रायुधः शतायुधो रणचन्द्रो महाशूरः सुतेजाः कुलिशायुधः पूर्णचन्द्रो महास्त्रः, इत्यादयो लक्षसङ्ख्या वाजियुक्तैर्महारथैः प्रागूरणोत्साहोच्छूनतनु निरगुः। बलः कामाङ्कुरो धूममाली सिंहः शतायुधो वज्रमाली महाचक्रो विजयश्चक्रधारी दुरन्तो दुर्धरः, इत्यादयो महामानाः खेटेन्द्राः सपरिच्छदा विमानेषु समारूढा निरयरुः। गजसिंहो गजानन्दो गजदेवो गजप्रभो गजवीरो गजप्रीतिर्गजकेलिर्गजध्वजो गजवेगो गजक्षेमो गजसेनो गजाननो गजविक्रममुख्याश्च लक्षशो गजवाहना निर्गताः। हयवेगो महावाजिर्महाश्वो हयवाहनो हयवीरो हयानन्दो हयसारो हयोदयोऽश्ववीरोऽश्वसेनोऽश्वानन्दोऽश्व-

विक्रमो हयसेनो हयाख्यः, इत्यादयो हयारूढा लक्षशो निर्गताः। सिंहः सिंहगतिः सिंहविक्रमः सिंहवाहनः सिंहवीरो महासिंहः सिंहाख्यः सिंहकेसरी सिंहकेतुः सिंहमाली नृसिंहः सिंहकेतनः सिंहसेनादयश्च सिंहवाहना आजौ प्राचलन्। व्याघ्रमाली महाव्याघ्रो व्याघ्रास्यो व्याघ्रविक्रमो व्याघ्रसेनः, इत्याद्या व्याघ्रवाहनाः प्रचेलुः। शार्दूलो हरिशार्दूलः शार्दूलानन्दः शार्दूलकेतनः शार्दूलविक्रमाद्याश्च शार्दूलवाहनाश्चेलुः। केचिद् वराहवाहनाः, केचित् पन्नगवाहनाः, केचिद् लुलायवाहनाः*, केचिच्च शरभवाहना निर्ययुः। एवं विविधैर्वाहनैर्विचित्राऽऽयुध-केतवो रणोत्सुकाः कोटिशः खेटाः पत्तयश्च प्रचेलुः। एवं खेटकोटिभिः परिवृतः स चक्रायुधः खेटेश्वरो मदावेशाद् जातान्यशकुनानि अवगणयन्, सैन्यकोलाहलैर्वाद्यनादैश्च दिशो गर्जयन् शत्रुचक्रं प्रति प्राचलत्। सोऽयं द्रुतम् उत्साहादागत्य नीतिवित् स्वपुरसीमनि कुमारकटकाऽदूरासन्ने तस्थौ। अथ खेटचक्रिणं चक्रायुधं सचक्रमायातं निबुध्य श्रीजयस्यापि कटके खेचरा अमिलन्। खेटचक्रिणः कटके सहस्रम् अक्षौहिण्यो मिलिताः, कुमारभूपतेस्तु सैन्ये शतमेवाऽक्षौहिण्यः समेयुः। अक्षौहिणीप्रमाणं चेदम्—

"स्यात् सेनाऽक्षौहिणी नाम, खां-ऽगा-ऽष्टै-क-द्विकैर्गजैः २१८७०। ¶रथैश्चैभ्यो †हयैस्त्रिघ्नैः, +पञ्चघ्नैश्च पदातिभिः" ॥१

सेनाकलकलत्रस्तयानयुग्यहयः किल भानुमान् गगनमार्गं मुक्त्वा पश्चिमाम्भोधौ अपतत्। अथ नारीरूपः कुमारः खेटनृपाणामनुमत्या पवनवेगपुत्रं वज्रवेगं सेनान्यं न्यास्थत्। सैन्ययुग्मेऽपि धीराः शस्त्रपूजो-

* महिषवाहना.। ¶ २१८७० रथैः। † रथेभ्यस्त्रिगुणैर्हयैः–६५६१०। + रथेभ्यः पञ्चगुणैः पदातिभिः–१०९३५०।

त्सवाद्यैः शस्त्रिणां च कथादिभिरस्त्रजागरां जजागरुः । सङ्ग्रामे जयस्य साधनेषु शस्त्राण्येव प्रधानत्वं बिभ्रति, अतस्तानि चक्रादीनि शस्त्राणि पट्टेषु न्यवीविशन् । तथाहि—[1]चक्रं [2]खड्गो [3]धनु[4]र्वज्रं [5]त्रिशूलं [6]कुन्त[7]स्तोमरो [8]मक्षिका [9]परशुः [10]शक्ति[11]र्भिण्डमालो [12]भल्लिका [13]क्षुरिका [14]मुसलं [15]सीर[16]स्तरवा[17]रिर्गदा [18]घनो [19]मुष्टिः [20]पट्टिसो [21]दुःस्फोटो [22]मुद्गरः [23]करवालिका [24]कणपः [25]कम्पनः [26]पाशो [27]गुलिका [28]लुण्टिः [29]शङ्कुः [30]ग्रहो [31]गोफणः [32]कुद्दालः [33]कर्तरी [34]करपत्रिका [35]बूसो [36]यष्टिश्च, इति षट्त्रिंशदस्त्राणि भटाः शुचिभिर्वारिभिरसिस्नपन्, ततश्चन्दनैरालिप्य चारुपुष्पैरभ्यर्च्य तत्पुरो धूपोत्क्षेपं नदद्वाद्यं गीत-नाट्यादि व्यधुः । कङ्कटा-ऽस्त्र-शिरस्त्राणानां पत्तीनां गज-रथा-ऽश्व-व्याघ्रादीनां च यानानां संस्कारावैर्निशाऽगात् । शूराणां रणकौतुकं द्रष्टुं सूर्य उदयाद्रिशिराऽभ्यगात् । [1]भेरी [2]मर्दलः [3]कंसालो [4]मृदङ्ग[5]स्तलिमो [6]भम्भा [7]ढक्का [8]हुडुक्को [9]झल्लरी [10]शङ्खः [11]काहलः [12]पटहः [13]खरमुखी [14]पोगः [15]डमरुकः [16]करटः [17]यानको [18]भानक[19]स्त्र्यम्बको [20]दर्दरीको [21]निस्वानः, इमानि अनेकशो रणतूर्याणि द्वयोरपि विरूथिन्योर्निनेदुः । तदा सागराश्चुक्षुभुः, दिग्गजास्त्रेसुः, महाशैला वेपिरे, नागराड् अपि शेषो भुवो भ्रंशभिया चकम्पे, कच्छपोऽपि निजं पृष्ठं दृढीकृत्य पृथिवीं बभार, सर्वा गिरिकन्दरा निनेदुः, नभः पुस्फोटेव पृथिवी च सर्वतोऽस्त्रंसतेवाऽभवत्, क्रूराः शार्दूल-शरभादयो दरीषु विविशुः, महोरगा भीता जवाद्दूरं पातालेषु विविशुः, वन्यमहिषास्त्रस्ताः सर्वतो वनद्रून् अभाङ्क्षुः, व्यन्तरादिसुराश्च रणदिदृक्षया दूराद् आगुः । तेन स्फूर्जता नादेन उभयोरप्यनीकयोर्भटाः स्फीतोत्साहोच्छ्वसद्देहाः सङ्ग्रामाय ससज्जुः । भटा दन्तिनां दन्तेषु सर्वतोधारान् खड्गान् ववन्धुः, केषाञ्चिद् दन्तानेव लोहैरशस्त्रयन्, केचिद् वज्रभास्वरसन्नाहकरटिनां करैः

मुद्गरान् कुन्त-भल्लादिकांश्च ग्राहयामासुः । गजानां पार्श्वयोर्बद्धलोहपञ्जरमध्यगा धनुर्भृतो वीरा वटशाखासु उरगा इव तस्थुः । सन्नद्धैः पृष्ठगैर्मिण्ठैः सिन्धुराः शीर्षासीनगरुत्मतां सपक्षभूधराणां श्रियं दधुः । प्रक्षरोपेताः सन्नद्धाऽऽरूढसादिनः क्वणत्किङ्किणयो वाजिनः सगोविन्दसुपर्णतां बभुः । चपलाः प्रोच्छलन्तश्च प्रक्षरिता हयाः किल नलिनीदलसेवालावृता वार्द्धर्वूर्मय इव बभुः । केचित् शकुनमानिनः सन्नाह्यमानान् ऊर्जस्विगर्जितान् गजान् हेषमाणांश्च वाजिन आनर्चुः । केचिद् भटा जयश्रिया विलासाय क्रीडागेहानिव रथान् चर्मभिर्वर्मभिश्च दृढीचक्रुः । केचित् सारथिभ्यः स्वाऽधिकदृढान् सन्नाहान् ददुः, यतो रथिनां युद्धे त्वमी जयप्रतिभुवो भवन्ति । केचित् शीर्षेषु न्यस्तशिरस्त्राणाः कङ्कटोत्कटा यमेन स्वसम्बन्धिन आयसाः सुभटाः प्रेषिता इव विरेजिरे । केषाञ्चिद् वीराणां वपुःप्रमाणेनैव कृतेष्वपि वर्मसु सङ्गरोत्साहोच्छ्वासितानि वपूंषि न ममुः । केचिद् वीरपुङ्गवा द्रुतं रणोत्साहात् सन्नद्धाः प्रतीक्षमाणास्तावत् शस्त्रैर्मित्राणि अशिश्रमन् । केचित् खेचरपुङ्गवाः सिंह-शार्दूल-सर्प-किरि-भल्लूकादीनि वाहनानि अदर्शयन् । योधा विचित्राङ्कान् ध्वजस्तम्भान् 'महाभटा' इति स्वं ज्ञापयितुं यानेषु अदद्रढन् । वीरा भटा बहुविधैः शस्त्रै रथानपूरयन्, यतो रणाऽध्वनि व्रजतां हि सुभटानां तान्येवाऽक्षयशम्बलम् । अथवा रथ-कासर-वेसरान् शस्त्रैः पूर्णानसज्जयन् । वीरा दानवीरत्वमप्याप्तुं कङ्कटाद्यैरुष्ट्रान् अपूपुरन् । केऽपि वीरा अनुगैरर्प्यमाणानपि कङ्कटान् अजहुः, यतस्तैर्हि स्वस्य रङ्गे वीराधिवीरत्वं कलङ्क्यते । केचित् पाद-नख-मुष्ट्यादीन्येव शस्त्राणि मन्यमानाः शोभायै प्राग्धृतान्यपि शस्त्राणि गर्वाद् अजहुः । केऽपि 'प्रतिवीरान् तेषामेव शस्त्रैर्हनिष्यामः'

इति वीरव्रतोन्मदाः शस्त्राणि नव ललुः[1]। कैश्चिद् 'अत्रुटद्व्रणतृष्णानां तृष्णान्तरं मा भूद्' इति जलपूर्ण[2]लुलाया जङ्गमाः प्रपा[3] इव सज्जिताः। महायोधा आरोहितान् गज-वाजि-रथादिकान् अनुचालयितुं सज्जीचक्रिरे। केचिद् योद्धृभिः स्वयमक्षुधिताः सन्तो मृत्योर्नु क्षुधं हन्तुं खाद्य-स्वाद्यादिभिः शकटानसज्जयन्। केचिद् भटा औषधीभूतशोणीकान् वृषानसज्जयन्, सन्तो हि कार्योत्सुका अपि औचित्यं स्मरन्त्येव। "नटानामिव तेषां विविधैरायुधश्रमैः किं ये रणे द्विषां पृष्ठं कुलस्य चाऽयशो ददते। सङ्ग्रामसदृशं तीर्थं नास्ति यत्र जीवतां श्रीर्यशः, मृतानां च द्रुतं स्वःसुखम्, इत्युभयत्रापि सत्फलम्। अपि च, दीपः क्षणं विद्योतते, भानुर्दिने, चन्द्रो निशि, परं सङ्ग्रामपराक्रमजा कीर्तिर्युगान्तस्थायिनी स्यात्। एभिः उत्साह-वीरत्व-स्वामिभक्ति-प्रजाहितैर्युष्माकं विघ्नान् देवा निवारयिष्यन्ति, जयांश्च दास्यन्ति"। इति वैतालिकप्रोक्तैराशीः-शकुनादिभिर्द्विगुणोत्साहशक्तयो योधा युधि औत्सुकायन्त, तांश्च वैतालिकान् वीरा इष्टैर्दानैरपिप्रिणन्।

अथ नृपस्त्रीकटके रणोद्यतान् महाकीर्तीन् कांश्चिद्भटान् नामग्राहं कीर्तयामि—वज्रवेगसेनान्याद्या रणैकरसिका वीराः सिंहयुक्तरथस्थिताः सहस्रशः समेनात्सुः। अखर्वबलगर्विष्ठाश्चन्द्रोदयादयः खेटा व्याघ्रयुक्तरथासीना मुदा सङ्गरे सन्नेहुः[4]। पवनवेगाद्याः खेटा द्विपद्भटान् तृणीयन्तो गजयुक्तै रथैर्द्रुतं रणकृत्याय ससज्जुः। भोगरत्यादयो नृपाः शस्त्रपूर्णेषु हययुक्तरथेषु आसीना रणोत्सुका अभूवन्। चन्द्र-

१ जगृहुः। २ जलैः पूर्णा लुलाया—महिषाः। ३ जलशालाः। ४ सन्नद्धा अभूवन्।

गत्यादयः सपरिच्छदा भूभुजः साभिमाना रणोत्सुका विमानेषु समारोहन् । श्रीधरः श्रीपतिः कौन्तो अरिंजयो दत्तो विक्रमो नन्द आनन्दो नरव्याघ्रो जयोऽजितोऽपराजितो मणिचूडोऽचलाद्याश्च सन्नद्धगजवाहना महोत्सवाय इव रणाय मुदा समवर्मयन्। तथा श्रीकान्त-श्रीधरादयः सहस्रलक्षसङ्ख्याः खेचरेश्वराः संवर्मिता गज वाजि-हरि-व्याघ्र-शार्दूल-महिषादिकान् यथौचित्यं प्रत्येकं समारुक्षन् ।

अथ श्रीजयः कुमारेन्द्रः स्त्रीरूपो द्विपो मोहयन् स्नात्वा भक्तितो जिनमभ्यर्च्य स्तुत्वा नत्वा च परमेष्ठिनमस्कारं स्मृत्वा ध्यानलीनहृत् सर्वतो मणिभास्वरं वज्रसन्नाहं पर्यधात् । तस्याऽङ्गे उच्छ्वसिषु वर्म गाढतां प्राप्तं किल हैमरत्नगन्तरं शुशुभे । शिरसि लोहनद्धमणिदीप्रं शिरस्त्रम् अधात्, तच्च सविद्युन्मेघैर्धृतं मेरुशृङ्गमिवाऽभात् । द्वयोः पार्श्वयोरक्षय्यशरतूणीरौ अबध्नात्, सव्येन च पाणिना वज्रपृष्ठं धनुराददे । एवं युद्धार्हसामग्र्या स राजकुञ्जरः सज्जितम् अञ्जनागिरिसदृशं मत्तसिन्धुरमारोहत् । स सन्नाहितगजारूढैः सन्नद्धैः पञ्चशतीसङ्ख्यैः स्त्रीरूपैः शूरपुङ्गवैर्ययौ । अथाऽस्य भटकोटिभृत् कटकः सङ्ग्रामाय सज्जीभूतः समन्तादागत्य तं च परिवृत्य तस्थौ । विचित्रवाहनस्थेन विविधाऽऽयुध-केतुना तेन सैन्येन वृतोऽयं कुमारनृपोऽशुभत् । गजदन्ताऽचलादिभिः संयुक्तोऽयं सर्वतः परिवेष्टितो भद्रशालवनेन मेरुरिवाऽशुभत् । अथ चक्रायुधः खेटचक्री जिनार्चां नतीः स्तुतीश्च विधिना चक्रे, परमेष्ठिनं चाऽस्मार्षीत् । स मणिदीप्रसशीर्षण्यसन्नहाऽऽवृतशरीरः खेटचक्री तारावृतो राहुच्छायाऽन्तःस्थः सूर्य इवाऽभात्। तूणीरद्वयरोचिष्णुपार्श्वः कोदण्डभृत्करश्चक्रायुधो युद्धार्हं सज्जितं श्वेतगजम् इन्द्रवदारोहत् । तं सन्नद्धा बहुवाहनाः कुमारा

मध्यं महाजम्बूतरुं वलयगा जम्ब्व इव परिवव्रुः । स कुमाराणां सहस्रैर्लक्षशो वीरैः सङ्ग्रामसज्जेन च चतुरङ्गेण सैन्येन सर्वतो वृत इभ-वाज्यादिजलजन्तुकल्लोलमालिना समुद्रेण इव वेष्टितो जम्बूद्वीपमध्यगतमेरुवद् बभ्राजे । तौ सन्नद्धौ स्वस्वसैन्यमध्यस्थौ नृप-खेटेन्द्रौ वनावृतौ धातकीखण्डमेरू इव रेजाते । ततः कल्पद्रुवद् अर्थिभ्यः प्रार्थितं दानं ददतौ, खरांशुवत् सर्वतेजस्विनां तेजो विलुम्पन्तौ, कल्पान्तसमयाऽर्कवद् दुर्निरीक्ष्योग्रमूर्ती, दूरतोऽपि स्वान् भटान् स्निग्धदृष्ट्या पश्यन्तौ, महौजस्कौ, मृगेन्द्रवत् प्रतिवीरांस्तृणीयन्तौ, दृश्योः उल्कानिभा दारुणा रुचः शत्रुषु क्षिपन्तौ, सच्छत्र-चामरौ, स्वस्वसैन्यान्तर्गतौ तौ कुमारनृप-खेटेन्द्रौ अन्योन्याभिमुखं प्रचेलतुः । तयोर्द्वयोरेवं सङ्केतोऽभवत्—'अयुध्यमाने, मुक्ताऽस्त्रे, दीने, नश्यति, पेतुषि च नैव प्रहर्तव्यम्' । अथ स्वस्वस्वामिनोराज्ञया समपङ्क्तिस्थितौ कटकौ दुर्धरैर्वाद्यनिर्घोषैः प्रेरितौ, मुद्गराभैः करिक्रमैराहत्य क्ष्मां स्फोटयन्तौ, वाजिक्रमगदाहतैर्वाढं निर्घोषयन्तौ, भूरिभारेण सहस्रं फणिराट्फणास्तुदन्तौ, कठिनपृष्ठं कच्छपं प्राणसंशयं नयन्तौ, वराहस्य सुदृढामपि दाढां बाढं रुजन्तौ, कदाप्यप्रासं परस्परसङ्गमजं सुखं प्राप्तुं पूर्वा-ऽपरार्णवौ इव अन्योन्यमधावेताम् । युद्धौत्सुक्याद् अहंपूर्विकया विस्फुर्य वहिर्भूत्वाऽग्रतो यातस्तद्भटान् प्रतीहारा न्यवारयन् । सैन्योद्धता द्विपदान्ध्यप्रदाः सुभटा इव पांसवः पूर्वरणौत्सुक्यादिव प्रौचैरग्रतश्चेलुः । वराह-हरि-शार्दूल-करि-व्याघ्रा-ऽश्व-सर्प-कपि-सारङ्ग-मयूर-मेष-द्रुमादिभिर्विविधैः केतुभिर्दूरेऽपि उपलक्ष्योपलक्ष्य सुभटाः स्फुटं नामग्राहं प्रतिभटान्

१ सूर्यवत् । २ पृथ्वीम् । ३ पीडयन्तौ । ४ अहं पूर्वम् अहं पूर्वमिति युद्धम् अहं पूर्विका, तया ।

अवृण्वन् । प्रोषैस्तान् आह्वयमानान् चिरप्रासान् वान्धवानिव उभयेऽप्यसैन्याः सोत्कण्ठं मिथोऽमिलन् । अथ परस्परं सपक्षाः पर्वता इव गजाः, तार्क्ष्या इव तार्क्ष्या मिथः सङ्ग्रामाय मिमिलुः । तथा युग्यैर्गज-व्याघ्र-तुरगाद्यैर्मिथः समाः सिंह-शार्दूल-किरि-व्याघ्रादिवाहना भूविमाना इव रथा, द्रुतं व्योमगमाश्च महानासा इव विमाना द्वयोरपि सैन्ययोर्मिथः सङ्ग्रामाय मिमिलुः । तदा भम्भा-भेरी-ढक्का-हुडुक्क-काहलादिको रणतूर्यगणः पृथ्वीकम्पनैः, अभ्ररफोटकैः, दिक्प्रतिस्वनैः, अचलादीनां चलकैः, गिरिगह्वरनादिभिश्च दुर्धरैर्भैरवैर्नादैरनदत् । ततो वीरा विविधायुधैरौत्सुक्याद् मांसानि भक्षयितुं क्षुधिताः प्रेता इव योद्धुं ढुढौकिरे । 'अस्माकं स्वामिनाम् एते सङ्ग्रामे विघ्नं मा कार्षुः' इतीव महेभा मदवारिभिः पांशून् अशमयन् । योधयानेषु अनिलौघैश्चलाचला ध्वजा निजस्वामिरणशौर्यप्रमोदिनो नृत्यन्तीव भान्ति । वाद्यलक्षोद्भवोऽतिनिर्घोषः परस्परं भटकोटीनामाह्वानैः, गर्जितोर्जितैः, उत्कटभुजास्फोटैः, हासैः, थूत्कारैः, हक्कनादिभिः, क्रोधा-ऽमर्षदुर्धर्षभीषणैर्मिथो युध्यमानैः सिंह-व्याघ्रादिभिर्मुक्तैः स्फुटैः सिंहनादादिभिः, कोटिशो गजगर्जाभिः, दुर्धरैर्हयहेषितैः, रथचक्राणां चीत्कारैः, खड्गादिशस्त्रसाट्कृतैः, धनुरास्फालनशब्दैः, जयसांराविणोच्चयैः, द्रष्टृणाम् अट्टहासौघैः, सहर्षकरतालिकैः, दिग्-गिरिगुहास्फूर्जद्विस्तृतैः प्रतिनादैः, त्रस्यद्वनपशुव्रातानां भीषणैराक्रन्दरवैश्च स्फार्यमानो ब्रह्माण्डस्फोटसदृशो रोदसोरुदरम्भरिर्जगतः क्षोभं विदधे; स च रणेक्षाकौतुकार्थिनाम् आह्वानं कुर्वाण इव भासते । "रे! आगच्छ आगच्छ, तिष्ठ तिष्ठ, हे

१ गरुडा । २ अश्वाः । ३ धूलीः । ४ वर्धमानः । ५ आकाश-पृथिव्योः ।

वीर ! युध्यस्व, नश्य नश्य, रे मूढ ! हतो हतः, तिष्ठन् असि ?, आयुधं त्यज त्यज, वक्त्रे तृणं दधद् जीव जीव, रे मूढ ! गिरा किं माद्यसि[1] ? पाणिभ्यां पराक्रमं दर्शय, रे ! शत्रौ विशन् लज्जसे ?, अद्य ध्रुवं तवाऽन्तको रुष्टः" इत्यादयो दारुणाः शब्दाः भटे भटे प्रावर्तन्त । सुभटाः परस्परं विचित्राणि शस्त्राणि उत्पातसमयाऽम्भोदाः समन्ततः करकानिव ववृषुः । महावीराः प्रसरद्धारा नव्या धाराधरा इव समन्ततो बाणधोरणीः प्रासीसरन्[2] । चमूद्वयाद् विचित्राणि शस्त्राणि आकाशे वातोद्धूतवनात् पक्षिवृन्दानीव समन्तात् समुत्पेतुः, तानि पुनरभ्रे भ्रान्त्वा पतत्रिणः[3] फलितेषु वृक्षेष्विव वीरशरीरेषु प्रपेतुः । क्वचिद् बाणमयः, कुत्रचित् खड्गमयः, क्वचित् कुन्त-गदा-चक्रमयः, क्वचित् शूल-शक्तिमयः, क्वचिच्च मुष्टि-मुद्गरौघमयः, एवं विविधैरायुधैरयं रणो दारुणो जज्ञे । शात्रवायुधैस्ताडिताः पत्तयः क्षणात् पेतुः, ते च भुवि लुलन्तो वीराणां केलिकन्दुका अदृश्यन्त । क्वचित् पतितैर्गजैर्हयैश्च पुञ्जीभूतै रणोर्वी दुःसञ्चरा जज्ञे । क्वचित् शीर्षैः, क्वचिद् हस्तैः, क्वचिच्च पादादिभिः सा रणभूमिर्विधिसूत्रभृतो मनुष्यघाटशाला इवाऽभवत् । क्वचिद्भटा ध्वजैर्दूराद् अरीन् उपलक्ष्य हन्तुं जलकान्ताः समुद्रमिव सेनां स्फोटयन्तोऽविशन् । सा पृथ्वी भग्नै रथदलैः कृतकुसुमप्रकरा इव हस्तिकुम्भोत्थमौक्तिकस्वस्तिकाऽङ्किता शुशुभे । रणे रणकौतुकवीक्षार्थं मिलिता व्यन्तरादयो वीरसंस्तवैर्मुखरा अभित आकाशे भ्रेमुः । क्षेत्रपाला डमरुकडमत्कारैः भृताम्बरा[4] ऊर्ध्वं प्रचण्डदोर्दण्डा ननृतुः । शाकिनी-डाकिनी-काकिन्योऽपि कौतुकोत्ताला: केलिकिलकि-

१ मदं करोषि । २ प्रसारयन्ति स्म । ३ पक्षिणः । ४ पूरितगगनाः ।

लोल्वणा अनृत्यन्। चित्ररूपिण्यो योगिन्यः प्रोत्तालकरतालिकाः कौतुकोत्तानेक्षणा हर्षाद् रासकान् अदद्धः। राक्षसीयुता राक्षसा भक्ष्यासिद्दर्पेण विकटैरट्टहासौघैः स्फुटद्गिरि-नभस्तटं भ्रेमुः। रुधिरा-ऽऽमिषगृध्नवो गृध्राः सत्रागारनिभानिव वीरान् प्रदक्षिणीकृत्य सर्वतो बभ्रमुः। वीराणां जयेषु विस्मयस्मेरा देवता मुदा पुष्पवर्षाणि कुर्वाणा नानावाद्यानि अवीवदन्। दयाम्बुधिः कुमारेन्द्रः पुराऽपि यान् सङ्ग्रामे भ्रमं भ्रमं शस्त्रा-ऽऽर्तिमपाकर्तुं खेटान् आदिशत्, ते सुभटान् हयादींश्च शस्त्रशल्यितान् दर्शं दर्शं तदर्पितौषधीनीरैर्द्वयोः सैन्ययोरसज्जयन्। वीरास्तिर्यञ्चश्च पतितास्तैर्नीरैः सज्जिताः सन्तः पुनर्द्विगुणोत्साहा भृशं युयुधिरे, यतो ये क्रोधा-ऽभिमानाद्या दोषाः प्रतिजन्म अभ्यस्तास्ते प्राणान्तेऽपि न विरमन्ति, इति भवं धिक्। अपि च, तेषां यद् युद्धे साहसं तत् सर्वजन्तुषु सुलभं, चेत्तद् अर्हद्धर्मे भवेत् तदा कानि कर्माणि कश्च भवः ?। तत्र रणे केचिद् अक्षक्षयं, केचिद् मृत्युं, केचिच्च पराभवं प्रापुः, तत्र खलु अशुभानुभावो हेतुः। केचिच्च घोरेऽपि रणे जायमानेऽक्षताङ्गा हतद्विपो जयं प्रापुः, तत्र खलु शुभानुभावो हेतुः। वीराः पूर्वोत्पन्न-वीराणां यशांसि लिप्सवो जयगृध्नवः स्वामिग्रासाऽनृणीभाव-कुलोद्द्योतांश्च विधित्सवः क्रोधा-ऽमर्षा-ऽभिमानादिवशात् तिरस्कृतशत्रवो विविधायुधदुर्धरा युयुधिरे। केचिद् भटाः ससारथीन् योधान् हत्वा कृपया च हयान् मुक्त्वा तद्रथैरेव प्रतिभटान् जग्मुः। केचिद् भटा मदाद् अनात्तशस्त्राः कराभ्यां द्विपः पादयोर्गृहीत्वा अन्योन्यमास्फाल्य जघ्नीयाञ्चक्रिरे। पत्तयः कुक्कुटा इव उत्पतन्तः पतन्तश्च अन्योन्यं बाणैर्निहता उभयेऽपि पृथिव्यामपतन्। मदनिर्झरिणो गजा भटैर्गर्वाद् व्योम्नि निक्षिप्ता इतस्ततो वारिदा

इव बभुः । केचिद् भटा गदाद्यस्त्रै रथान् भङ्क्त्वा तच्चक्रैर्द्विषो निघ्नन्तो बहुचक्रास्त्राश्चक्रिण इव बभ्राजिरे । भुजगर्वोद्धुरैर्वीरैर्नभसि उच्छालिता गजाः शैलशृङ्गवत् पतन्तो रथ-पत्ति-वाजि-वृषभादीनि अपिंषन् । एवं घोरे महारणे प्रवर्तमाने कुमारनृपसैनिकाः खेटनृपचक्रिणोऽग्रसैनिकान् द्राग् अभाङ्क्षुः । खेचरचक्रिणश्चमूः समुद्रवेलेव चटन्ती कियतीं भुवं संप्लाव्य रिपूर्दस्ता[1] अपासरत् । ततः कुमारकटके समन्ताद् जैत्रतूर्याण्यवाद्यन्त, जयप्राप्तिप्रमोदिनश्च भटाः सांराविणं चक्रुः । निजाह्वासुहृदां शूराणां रणे पराभवं द्रष्टुमसमर्थः शूरः[2] पश्चिमाम्भोधौ न्यपतत् । ततो वीराः स्वस्वसेनाधिपाज्ञया सङ्ग्रामं मुक्त्वा विहङ्गमा नीडानिव स्वान् स्वान् उत्तारकान् ईयुः[3] । अथ कुमारेन्द्रः कृपया कण्ठगतप्राणानपि पत्ति-गजा-ऽश्वादिकान् शस्त्रघातनिपीडितान् भूमौ पतितान् अपतितांश्च पुरुषैः सम्यक् संशोध्य, चिह्नैश्च जीवतो विज्ञाय, स्वपरविभागाऽभावतो द्वयोरपि सैन्ययोः स्वौषधीजलसेकतः सर्वान् उज्जीवयाञ्चक्रे, इयं हि महतां दया, अदश्च महतां चरित्रम् । एवं रणोर्वीं संशोध्य खेचरचक्रिणे च प्रचुरं स्वौषधीवारि प्रेष्य, परोपकृतिकर्मठः कुमारेन्द्रः सपरिच्छदो हर्षितबन्दिभिः पठ्यमानजयोत्कर्षगुणः स्वोत्तारकेऽगमत् । कटके रणजैत्राणां भटानां वृद्धस्त्रीभिः प्रमोदतो मङ्गलानि व्यधीयन्त । चक्रायुधनरेन्द्रोऽपि रणभूमिकां संशोध्य सपरिवारो निजोत्तारके जगाम । स निजविद्याजलेन नृपदत्तवारिणा च सशल्यान् निजान् जीवतो निखिलान्

१ शत्रुभिर्ध्वस्ता । २ सूर्यः । ३ जग्मुः ।

सज्जयामास। अथ सैन्यद्वयेऽपि रणश्रान्ता भटा निशि सुखेन निद्रां चक्रुः, गजाद्याश्च कृताहारा यथोचितं निद्रां चक्रुः।

॥ इति श्रीजयानन्दकेवलिचरित्रे चक्रायुधखेटचक्रवर्तियुद्धाधिकारे सामान्यतो युद्धरूपं प्रथमदिनयुद्धम् ॥

अथ निद्रा भटान् समालिङ्ग्य सुखं विलसन्ती निशासीम्नि सपत्न्या इव रणचिन्तया निरासे। 'अद्यापि रणकौतुकचेतसां वीराणां कथं विघ्नं कुर्वे?' इति यामिनी अक्षीयत। सूर्योऽपि 'के भग्नाः?, के मृताः?, के नष्टाः?, के वा जयं प्राप्ताः?' इति वीक्षितुमिव उदयाचलमारोहत्। द्वयोरपि चम्वोः प्राग्वद् रणतूर्याणि नेदुः, ते उभे अपि युद्धे प्रौढोत्साहैः ससज्जतुः। उभौ अपि कटकौ अग्रस्थितस्वसेनान्यौ मध्यस्थिताऽऽत्मनायकौ च प्राग्वद् मिलितौ युद्धमकार्ष्टाम्। वीरमुक्ताः शरा अभितो नभो व्याप्नुवन्त उत्पातसमयोत्पन्नाः सपक्षाः पन्नगा इव रेजुः। केषाञ्चिद् वीरधुर्याणां पङ्क्तिगान् रिपून् भित्त्वा गच्छतोऽपि बाणान् शैलशृङ्गाण्येवाऽचिस्खलन्। व्योम्नि, भुवि, अभितो दिक्षु, वृक्षेषु, पर्वतशिरसि च व्याप्तैर्भटबाणोत्करैर्विश्वं तन्मयमासीत्। केचिद् एकशस्त्रघ्नता भटा द्विषां गदा-मुद्गर-चक्रादीन्यप्यस्त्राणि बाणैरेवाऽच्छिदन्। केचिद् बहुशस्त्रच्छिदोद्विग्नाः शूराः क्रुधा शरैर्द्विषां शस्त्राऽऽदान-मोक्षक्षमान् करानेवाऽच्छिदन्। केचिद् वीरबाणैर्व्याकुलिता अस्त्रं मोक्तुं ग्रहीतुं वा नाऽशाशकुः, अतो मुखेषु तृणानि अलुः। केचिद् एकेनापि बाणेन समपङ्क्तिस्थितान् गज-वाज्यादीन् अच्युतः सप्ततालानिव विव्यधुः। केचित्तु शूरा बाणान् मुञ्चत एवाऽरीन् शरैस्तत्कार्मुकाणि छित्त्वा उद्गृणतः

१ यङ्लुगन्तशक्धातोर्ह्यस्तन्याम्। २ अगृह्णन्। ३ कृष्णः। ४ कथयतः।

खलान् वदनाऽऽहत्येव न्यपेधन् । कैश्चिद् वीरधुरन्धरैः कलया मुक्तैर्बाणैर्द्विपो हत्वाऽऽकाशे गतैर्भिया कष्टात् सुरा नेशुः । वीरबाणैश्छिन्नाः सुभटमौलयो देवस्त्रीणां मुखेन्दून् ग्रसितुं राहव इव व्योम्नि प्रययुः । रणे वपुर्लग्नैर्वीरबाणैरुत्पतन्तो भटाः कृतपक्षाः सशरीराः स्वर्गं यियासव इव रेजिरे । वीरमुक्तैर्वपुर्लग्नैः शरैर्महागजाः समन्तोद्गतदुर्वाकाश्चलाचलाः पर्वता इव रेजुः । वीरबाणहता रुधिरस्राविणो गजा गैरिकोन्मिश्रैर्निर्झरैः पर्वता इव भ्राजमानाः पेतुः । पूर्वभङ्गोद्भवाऽमर्षवशात् खेचरचक्रिणो योधा विविधायुधवर्षिणस्तथा योद्धुं लग्ना यथा कुमारनृपस्य सैन्याः समन्ततो भग्नाः, समुद्रस्य वेलया हता नदीवेगा इव चाऽपासरन्। तांश्च अपसरतो वीक्ष्य क्रुधोद्धुरा भोगरत्याद्या अष्टौ खेटपा सुहृदः ससैन्या युद्धाय उत्तस्थुः । ते वीरा अमर्षात् तथा शरधोरणीर्व्यमुञ्चन्त यथा महतामपि चमत्कारं चक्रुः । निरन्तरैर्वीरमुक्तैः शरासारैर्द्विपां बलं गर्जद्भिर्मेघैराकाशमिव समन्ततस्तिरश्चक्रे । सुभटबाणा द्विपां वर्म भित्त्वा सतां मिथ्यात्वदुस्तन्द्रां छित्त्वा गुरुगिर इव हृत्सु अविशन् । केचिद् वीरेषवः शत्रूणां दृशां पार्श्वे दुर्धियां गुरुगिर इव एकया श्रुत्याऽविशन्, अन्यया च निरीयुः । केचित्तु भटेषवः पराक्रमेण मुक्ता अपि वीराऽरीणां सद्भिः खलानामिव रोमाऽपि नाऽभिन्दन् । ते भोगरत्यादयः शरैर्दिशोऽप्याच्छादयामासुः । तेषु शरैर्युध्यमानेषु केषाञ्चिद् विद्विषां मदैः सह रथानां भङ्ग आसीत्, केषाञ्चित् प्रबलैर्भुजैः सह केतवः पेतुः, केषाञ्चित् पितृमनोरथैः समं शिरांसि पेतुः, केषाञ्चित् सत्त्वैः समं दृढान्यपि कार्मुकाणि अध्वंसन्त, केषाञ्चन शत्रूणां सारथयः प्राणैः सह पलायन्त, केषाञ्चिद् विक्रमैः साकं शस्त्राणि खण्डश आसन्, अन्येषां पार्श्वानि

हृदयैः समं शून्यान्यासन्, केषाञ्चिद् जिगीषया सह शस्त्राण्यपतन्, केचित्तु व्रीडा-यशो-वीरव्रतादिभिः समं नेशुः। एवं युध्यमानैर्भोगरत्याद्यैरुपद्रुतं चक्रिणो बलं धर्मेभ्योऽभव्य इवाऽपासरत्। स्वबलं अपसरद् वीक्ष्य चक्रिणश्चमूपतिश्चण्डवेगः सिंहयुक्तरथोद्धुरो भटकोटिभिः समन्वितो निजं सैन्यं संधीरयन् रणभूमिमुपस्थितः, भोगरत्यादिभिश्च समं युद्धायाऽढौकत। तथा मदन-तपन-भीम-प्रतापा-ऽक्षोभ-कासर-रमणाद्याश्च सिंहयुग्यरथा युद्धेऽलगन्। सर्वगैर्वाणैः सेनान्यां युध्यमाने सति भूपतेर्बलमकम्पत। तेन सेनान्या [3]शितैः शरैः केऽपि द्विपो हृदि, केऽपि मुखे, केऽपि नाभौ, केऽपि करयोः, केऽपि च पादयोर्जघ्निरे। ततो भोगरतिः सुभटः सेनापतिम् अरौत्सीत्, चन्द्रबाहु-महाबाहू तपनसंयुक्तं मदनं, चन्द्रवेगो भीमं, चन्द्रचूडः प्रतापं, रत्नचूडोऽक्षोभं, तडिद्वेगः कासरं, चन्द्राभश्च रमणं रणौत्सुक्याद् आह्वास्त। एवं परेऽपि वीरवरा मिथो रणेऽढौकन्त। भटबाणभुजङ्गमा वीरप्राणाऽनिलान् पीत्वा प्राप्तबला द्विषो दंशं दंशं निश्चेतनान् चक्रुः। भोगरतिः शरैः सेनान्यश्चण्डवेगस्य चापं सद्गुरुः सूपदेशैर्भव्यस्य मिथ्यात्ववद् अच्छिदत्, सोऽपि नवं धनुर्लात्वा भोगरतेश्चापमच्छैत्सीत्। ततो भोगरतिर्नव्येन धनुषा तामसाऽस्त्रममुञ्चत, तदा सेनापतिः स्फुरद्दिनकराऽस्त्रेण तदन्धकारम् अनीकं च अनीनशत्, बाणैश्च वैरिणम् अस्तृणात्। तद्बाणैर्व्याकुलः सन् भोगरतिर्जलधराऽऽयुधं व्यमुचत्, चमूपतिरपि पवनास्त्रेण तद् व्यघट्टयत्। ततो भोगरतेः धनुरच्छिदत्, कङ्कटम् अभैत्सीत्, तं च शरैर्जर्जरयित्वा नागपाशैरबध्नात्। ततः सेनापतिश्चण्डवेगो

१ जेतुमिच्छया। २ सेनापतिः। ३ तीक्ष्णैः। ४ रुद्धवान्। ५ ग्रन्थकारेण सर्गारम्भेऽस्य 'रविप्रभ' इति नाम दत्तम्।

यावत्तं गृह्णाति तावद् जयानन्दनृपचमूपतिर्वज्रवेगः शरैरमुं हृदयेऽताडयत् । तद्बाणव्यथितः सोऽपि भोगरतिं मुक्त्वा क्रुधा वज्रवेगेण समं योद्धुमधावत । तदा द्वयोरपि सेनान्योः शराशरि वितन्वतोः जयश्रीः 'कं वृणोमि ?' इति संशयाद् अन्तरालेऽस्थात् ।

अथ श्रान्तं चन्द्रबाहुं मदनो धनुरादि च्छित्त्वा निरायुधं चक्रे, तं च नागपाशैर्बबन्ध । ततश्चन्द्रबाहुग्रहोद्यतः स चन्द्रगतिना रुद्धः, तदा मदनश्चन्द्रगतिना समं क्रोधादसङ्ग्रामयत । तपनः शरपीडितं महाबाहुं बबन्ध, तं च गृह्णानः स चन्द्रोदयमहीभुजाऽरोधि । तयार्घोरः सङ्ग्रामः प्रववृधे, यं पश्यन्तः सुरा अपि बिभ्युः प्रशशंसुश्च । अथ भीमपराक्रमो भीमश्चन्द्रवेगमवभ्रात्, तथैव प्रतापोऽपि चन्द्रचूडमवभ्रात् । तयोर्ग्रहोद्यतौ तौ चण्ड-भीष्माभ्याम् अरुत्सातातम्, तेषां च रणः प्रावर्तत । तथा रत्नचूड-तडिद्वेग-चन्द्राभानपि दैवतः क्रमाद् अक्षोभः कासरो रमणश्चाऽवभ्रात्, ततस्तान् गृह्णतोऽमून् चित्रवीर्य-महावीर्य-भद्रवीराः शरासारान् कुर्वन्तो न्यषेधन् । एवं कर्मवशाद् अष्टावपि तान् सुहृदः शत्रुभिर्बद्धान् पवनवेगो द्राग् लात्वा राज्ञ आर्पयत् । सोऽपि गारुडविद्यया तेषां नागपाशान् छित्त्वा औषधीवारिभिः सज्जितांश्चक्रे । तेऽष्टावपि भूपतिकरस्पर्शाऽनुभावात् पूर्वाऽधिकबलो-त्साह-तेजो-धैर्यादिसम्पदो लेभिरे, यतश्चण्डांशुकरस्पर्शाद् ग्रावाणोऽपि किं न ज्वलन्ति ? । पूर्वपराभवाऽमर्षात् ते पुनर्युधेऽधावन्त । अथ सेनान्यौ युद्धपरौ दृष्ट्वा द्वयोरपि पताकिन्योः सर्वसैनिका विशिष्य सङ्ग्रामे प्रावर्तन्त । वीराणां दूरपातिनो बाणाः स्वस्वामिशौर्यगुणान् ज्योतिषां गदितुमिव व्योम्नि प्रसस्रुः । केषाञ्चन शिलीमुखाश्चन्द्रादीनां करान् भास्करकरा

इव परबाणान् निराचक्रुः । केषाञ्चिद् बाणाः खेटकैः[1] स्खलिता अल्पसत्त्वानां विघ्नैर्धर्मकर्ममनोरथा इव मोघतां[2] प्रापुः । केचिद् बाणैर्द्विषां खेटक-कङ्कटान् अच्छिन्दन्, 'तच्छेदे हि ते सुजया भवन्ति' इति नु विचार्य एवं चक्रुः, यथा आसन्नसिद्धिका विवेकादिमहाशस्त्रैः कर्मरिपून् जेतुं पूर्वं मिथ्यात्व-लोभादीन् छिन्दन्ति। द्वयोः सेनान्योर्युद्धे बाणमयं नभोऽभूत्। अथ चण्डवेगो वज्रवेगस्य चाप शरैरच्छिदत्, सोऽप्यन्यद् आदाय शितैः शरैश्चण्डवेगस्य धनुरभाङ्क्षीत्। ततो दर्पोद्धुरश्चण्डवेगो नवं धनुर्लात्वा क्षुरप्रैर्वज्रवेगस्य स्यन्दनं रयाद् अभिदत्, ततः सारथिं सिंहौ च पञ्चत्वं प्रापयत्। अथ वज्रवेगो यावद् अभिनवं रथं गृह्णाति तावत् क्रोधान्धश्चण्डवेगश्छलात् शरेण उरस्यताडयत्, तदा स मूर्च्छाविह्वलोऽभवत्। अथ चण्डवेगो यावत्तम् अपरेषुणा हन्ति तावद् अकस्मात्तत्र भोगरतिर्भूपः समागत्य प्राक्पराभववैरेण चण्डवेगं भिन्दिपालाभिधेन शस्त्रेण मूर्ध्नि अहन्, ततोऽसौ मूर्च्छितोऽपतत्। अथ यावत्तं भोगरतिर्गृह्णाति तावत् खेचरचक्रिणः सुतो मणिमाली समेत्य, चक्रायुधदत्तविद्याऽम्बुसेकतश्चमूपतिं सज्जीकृतवान् । ततो भोगरतिर्वज्रवेगं राज्ञ आर्पयत्, नृपोऽपि महौषधीजलैस्तं सज्जीकृतवान् । उपकर्तुरुपकारम् अपकर्तुश्चाऽपकारं विधाय भोगरतिर्मुमुदे । अथ चन्द्रबाहुः प्राच्यबन्धाऽभिभववैरतश्चन्द्रगतेरग्रे भूत्वा मदनं द्विपम् अयोधयत्, शरासारं च विदधद् अजवृन्दं[3] मेघ इव सपरिच्छदं मदनं व्याकुलीचक्रे । ततो धनुश्छित्त्वा रथं च भित्त्वा चन्द्रबाहुर्मदनं बबन्ध । तं ग्रहीतुं चक्रिभूर्[4]मणिमाली अधावत, स शरासारं कुर्वता चन्द्रबाहुना रुरुधे,

१ फलकैः—ढालैः । २ निष्फलताम् । ३ छागसमूहम् । ४ चक्रायुधपुत्र. ।

तावचन्द्रगतिर्मदनं निजे शिबिरे निनाय । अथ महाबाहुः श्रान्तं चन्द्रोदयं रणान्निषिध्य प्राग्वैरतस्तपनं योधयामास । तौ अमर्पाऽतिदुर्धर्षौ भीषणं रणं चक्रतुः । महाबाहुर्द्विपां तापनं तपनं बबन्ध, तं मोचयितुं चित्रायुधो भटोऽधावत । तमपि महाबाहुरचलो नदीपूरमिवाऽरौत्सीत्, तावचन्द्रगतिना तपनो धिया दुर्गतो महारम्भभरेण दुर्गतिमिव स्वबलं निन्ये । अथ चन्द्रवेगश्चण्डं वारयन् पुनर्भीमं योधयित्वा नागपाशैरबध्नात्, युद्धार्थमुपस्थितेन च चित्रवीरेण वैरिणा समं युयुधे, तावचन्द्रगतिर्भीमं निजे बले निन्ये । चन्द्रचूडो भीष्मं निरायुधीभूतं समीक्ष्य भवे प्राणिनं मोह इव युद्धे प्रतापं रुरुधे । तं चिरं योधयित्वा छिन्नचापं भग्नरथं च लोभोऽशुभैर्मूढमिव नागपाशैरबध्नात् । तं जिघृक्षुं चन्द्राङ्कं चन्द्रचूडो रुद्धवान्, तावत् चन्द्रगतिस्तं प्रतापं चौरं गुप्ताविव निजे बले निन्ये । अथ रत्नचूड-तडिद्वेग-चन्द्राभा अपि भूभुजो रणोद्यतान् चित्रवीर्य-महावीर्य-भद्रवीरान् निषिध्य, स्वयं चिरं युद्धा, छिन्नचापादीन् क्रमाद् अक्षोभकासर-रमणान् बबन्धुः । तान् जिघृक्षून् चन्द्रप्रभ-यशश्चन्द्र-चन्द्रकीर्तिनभश्चरान् ते भटसत्तमा युद्धेन न्यषेधन्, तावचन्द्रगतिर्बद्धांस्तान् मिथ्यात्वं ज्ञानादिरहितान् जन्तून् संसारे इव प्राग्वत् स्वसैन्येऽनैषीत् । ये पूर्वं रणे बद्धास्तैरेव मदनादिषु यद्बन्धस्तत्र रणश्रान्तिः कुकर्म च हेतुः । यतः—

"कर्मणा जीयते युद्धे, हन्यतेऽपि च कर्मणा । जयो राज्यश्रियो वाऽपि, कर्मणैव भवन्ति हि ॥ १ ॥
एवं शुभा-ऽशुभं कर्म, शुभा-ऽशुभफलप्रदम् । विज्ञाय शुभमेवैतद्, अर्जनीयं सुबुद्धिभिः" ॥ २ ॥